S'rī-Jaina-Ātmānanda-S'atābdi Series; No. VII.

THE

# *TRISHAS'HṬISALĀKĀPURUSHACHARITRAM-MAHĀKĀVYAM*

BY

## ŚRĪ-HEMACHANDRA-ĀCHĀRYA

***Parvan*** First—Part First,

(describing the noble deeds of Rishabhasvāmin and of his son Bharatachakravartin)



EDITED BY

**Munī CHARAṆAVIJAYA,**

**the disciple of Āchārya-S'rī-VIJAYAVALLABHA-Sūri,**

**Paṭṭadhara of Nyāyāmbhonidhi-S'rī-VIJAYĀNANDA-Sūri,**

**the First Āchārya of the**

*BRIHAT-TAPĀGACHCHHA-SAMVIGNA-S'ĀKHĀ.*



PUBLISHED BY

S'rī-JAINA-ĀTMĀNANDA-SABHĀ, BHĀVNAGAR.

6-0

**First edition** 1250 Copies **Price Rs**[redacted].

Vīra-Samvat 2463, Vikrama-Samvat 1992, Ātma-Samvat 41, 1936 A. C.

# S'rī-Jaina-Ātmānanda-S'atābdi Series; Vol. VII.

This Series is started to commemmorate the Birth-centenary of the great S'vetāmbara Āchārya S'rī-**Vijayānanda**-Sūri, generally known by the name of S'rī **Ātmārāmjī**, who was the First Āchārya of the **Samvigna-S'ākhā** of the Brihat-Tapāgachchha, by his worthy Pattadhara Āchārya-S'rī-**Vijayavallabha**-Sūri, the founder of S'rī-Mahāvīra-Jaina-Vidyālaya, Bombay, S'rī-Ātmānanda-Jaina-Gurukul, Gujrānwālā, (Punjāb), S'rī-Ātmānanda-Jaina High-School, Ambālā City, (Punjāb), S'rī-Pārs'vanātha-Jaina-Vidyālaya, Varkānā, (Mārwār) S'rī-Ātmānanda-Jaina Library, Poonā City, etc.

## NUMBER 7

TO BE HAD FROM

**S'rī-Jaina-Ātmānand-Sabhā, Bhāvanagar (Kāthiāwād)**

Founded in V. S. 1987, Ātma-Samvat 38, Vīra-Samvat 2459, 1933 A. C.

श्रीजैन-आत्मानन्द-शताब्दि-ग्रन्थमालायाः सप्तमो ग्रन्थाङ्कः [७]।

न्यायाम्भोनिधि-जैनाचार्य-श्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीविजयवल्लभसूरिभ्यो नमः।

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यसन्दृब्धं

# त्रिषष्टिशलाकापुरुषचरितमहाकाव्यम्।



तस्यायं पाठान्तरादिसमलङ्कृतः प्रथमो विभागः।

---

ऋषभस्वामि-भरतचक्रवर्त्तिचरितप्रतिबद्धं प्रथमं पर्व।

---

सम्पादकः संशोधकश्च

स्व-परसिद्धान्तपरमार्थप्रपञ्चप्रवीण-बृहत्तपागच्छान्तर्गतसंविग्नशाखीय-आद्याचार्य-न्यायाम्भोनिधि-

जैनाचार्यश्रीमद्विजयानन्दसूरीश्वर(प्रसिद्धनाम-श्रीआत्मारामजीमहाराज)-

पट्टधराचार्यश्रीविजयवल्लभसूरीशमुख्यशिष्यरत्न-तपोनिधि-श्री-

विवेकविजयसुशिष्याचार्यपदोपशोभितश्रीविजयो-

मङ्गसूरिविनेयश्चरणविजयः।

प्रकाशयित्री—श्रीजैन-आत्मानन्द-सभा, भावनगर (काठियावाड)

---

[प्रतयः १२५०] वीरसंवत् २४६२, विक्रमसंवत् १९९२, आत्मसंवत् ४१, ईस्वी सन् १९३६.

# श्रीजैन-आत्मानन्द-शताब्दि-ग्रन्थमाला

| मुद्रितग्रन्थाः | मूल्यम् |
| --- | --- |
| १ श्रीवीतराग-महादेवस्तोत्रम्—कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यप्रणीतम् | ०—२—० |
| २ प्राकृतव्याकरणम्—( अष्टमाध्यायसूत्रपाठो धातुपाठसहितश्च ) ,, | ०—४—० |
| ३ श्रीवीतराग-महादेवस्तोत्रम्—( गूर्जरभाषया सहितम् ) ,, | ०—४—० |
| ४ न्यायाम्भोनिधि-जैनाचार्यश्रीविजयानन्दसूरीश्वर( प्रसिद्धनामधेय-श्रीआत्मारामजी )स्य जीवनचरितम् ( गूर्जरगिरायाम् ) | ०—८—० |
| ५ नवस्मरणादिस्तोत्रसन्दोहः | ०—४—० |
| ६ चारित्रपूजादित्रयीसङ्ग्रहः—आचार्यश्रीविजयवल्लभसूरिरचितः | ०—२—० |
| ७ त्रिषष्टिशलाकापुरुषचरितमहाकाव्यम्—प्रथमं पर्व, कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यप्रणीतम् (पुस्तकाकारं प्रताकारं च) | १—८—० |
| ८ जैनतत्त्वादर्शः—न्यायाम्भोनिधि–जैनाचार्यश्रीविजयानन्दसूरीश्वर( श्रीआत्मारामजी )विरचितः हिन्दीभाषायामपूर्वोऽय ग्रन्थः | ०—८—० |

## प्रकाश्यमाना ग्रन्थाः ।

१ त्रिषष्टिशलाकापुरुषचरितमहाकाव्यम्—द्वितीयं, तृतीय च पर्व

## प्रकाशनार्थनिर्धारितग्रन्थाः ।

१ धातुपारायणम्—कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यप्रणीतम् ।

२ वैराग्यकल्पलता—न्यायविशारद-न्यायाचार्यश्रीयशोविजयोपाध्यायविरचिता ।

३ प्राकृतव्याकरणम्—ढुण्ढिकावृत्तिसहितम् ।

४ अभिधानचिन्तामणिनाममाला कोषः—कलिकालसर्वज्ञ-श्रीहेमचन्द्राचार्यप्रणीतः, वाचकश्री-देवसागरगणिगुम्फितया व्युत्पत्तिरत्नाकरनाम्न्या टीकयोपेतः ।

५ तिलकमञ्जरीकथा—धनपालकविकृता, श्रीशान्त्याचार्यप्रणीतेन टिप्पनेन, पण्डितश्रीपद्मसागर-विहितया वृत्त्या च विभूषिता ।


पुस्तकप्राप्तिस्थानम्—

**श्रीजैन-आत्मानन्द-सभा**

भावनगर, ( काठियावाड ).

# त्रिषष्टिशलाकापुरुषचरितस्य प्रथमपर्वणः विस्तरतो विषयानुक्रमणिका ।

## प्रथमः सर्गः ।

---

## द्वितीयः सर्गः ।

## तृतीयः सर्गः।

## पञ्चमः सर्गः ।

## षष्ठः सर्गः ।

## प्रकाशकनुं निवेदन.

कलिकालसर्वज्ञ श्रीहेमचन्द्राचार्य महाराज के जेमना समयमां भारत वर्षमां संस्कृत भाषाना अनेक प्रौढ विद्वानो हस्ती धरावता हता अने संस्कृत भाषा राजभाषा होवाथी ते काळे पूर्ण साम्राज्य भोगवती हती. तेवा विद्वद्भोग्य समयमां आ महान् आचार्ये पोतानी कुशाग्र बुद्धिथी संपूर्ण व्याकरण, काव्य, कोष, अलंकार, साहित्य, न्याय अने कथानुयोगना ग्रंथो संस्कृत प्राकृत भाषामां रची अन्य दार्शनिकोने अने ते ते भाषाना प्रखर विद्वानोने चकित करी दीधा हता. तेटलुंज नहीं परंतु आजे पण आ महान् पुरुषनी असाधारण बुद्धि, स्मरणशक्ति, प्रशंसनीय पृथक्करण शक्ति, आदर्श कृतिओ अने प्रौढ विद्वत्ता माटे भारतीय अने पाश्चिमात्य इतिहासज्ञ अनेक विद्वानो–अभ्यासीओ मुक्तकंठे प्रशंसा करी रह्या छे.

प्रस्तुत त्रिषष्टिशलाकापुरुषचरित्र लगभग पांत्रीस हजार श्लोक प्रमाण तेओश्रीनी कृतिनो ( कथानुयोगनो ) एक अपूर्व अने प्रामाणिक ग्रंथ छे. आ संस्कृत महाकाव्यमय ग्रंथ परमार्हत परमदयालु श्रीकुमारपालभूपालनी विनंतीथी श्रीआचार्य महाराजे रचेलो छे.

आ ग्रंथमां त्रेसठ महापुरुषोना जीवनचरित्रो साथे प्रभुना कल्याणकोना महोत्सवोनुं अपूर्व वर्णन, चक्रवर्तिओनो दिग्विजय, स्थानोनुं रसमय वर्णन, प्रवास वर्णन, समवसरणनी अद्भुत रचनानुं वृत्तांत, इंद्रोए करेल प्रभु स्तुति अने जिनेश्वरोए आपेल धर्मदेशनाओनुं वर्णन असाधारण अने रसयुक्त छे के जे वांचवाथी वाचकोने आत्मिक आनंद उत्पन्न करे तेवुं छे. श्रीआचार्य महाराजे आ कथानुयोगनो ग्रंथ एटली बधी निपुणताथी रच्यो छे अने काव्यनी चमत्कृति, भाषानी शैली अने सुंदरता एटली बधी उच्च अने मधुर छे के आ चरित्रग्रंथ बधा चरित्रोमां सौथी प्रथम स्थान भोगवे छे.

व्याख्यान माटे, संस्कृत भाषाना अभ्यासीओ माटे, कथाना रसिको माटे अने पठन पाठन माटे आ एटलो बधो उपयोगी ग्रंथ छे के जेनी आ अगाउ अन्य तरफथी आवृत्तिओ प्रगट थयेली होवा छतां तेनी हजुपण मांगणी वधती जती चालु रहेली होवाथी अने अगाउ प्रकट थयेल आवृत्तिओमां अनेक अशुद्धिओ होवाथी फरीने तेनुं संशोधन घणाज परिश्रमथी करवामां आवेल छे अने उंचा कागळो उपर सुंदर टाइपथी मुंबइमां श्रीनिर्णयसागर प्रेसमां प्रत अने बुकाकारे छपावी सुंदर बाइन्डींगथी अलंकृत करवामां आवेल छे.

पूज्यपाद आचार्य श्रीविजयवल्लभसूरीश्वरजी महाराजनी आज्ञाथी स्थापन थयेल श्रीजैन–आत्मानंद–शताब्दि सीरीझना सातमा नंबर तरीके प्रस्तुत त्रिषष्टिशलाकापुरुषचरित्र महाकाव्यनो आ प्रथम विभाग ( संपूर्ण दशपर्व पैकीनुं ) प्रथम पर्व प्रगट करीओ छिए.

प्रस्तुत प्रथम पर्वमां न्यायांभोनिधि जैनाचार्य श्रीमद्विजयानंदसूरीश्वर प्रसिद्ध नाम श्रीआत्मारामजी महाराजना पट्टधर पूज्यपाद आचार्य श्रीविजयवल्लभसूरीश्वरजी महाराजना उपदेशथी धांगध्रानिवासी धर्मात्मा श्रावक श्रीयुत परसोत्तम सुरचंदनी धर्मपत्नी अखंड सौभाग्यवती सुश्राविका श्रीमती पूरी बहेने योग्य सहायता आपी छे. तेमज नवसारी श्रीपार्श्वनाथ भगवाननी पेढीना ज्ञानखाता तरफथी रु. ५००) सोनी मदद तेना कार्यवाहको तरफथी मळी छे. उक्त बन्ने साहाय्यकोने खरा अंतःकरणथी साभार धन्यवाद आपवामां आवे छे.

पूज्यपाद आचार्य श्रीविजयवल्लभसूरीश्वरजी महाराजनी आज्ञाथी मुनिराज श्रीचरणविजयजी महाराजे प्राचीन हस्तलिखित ताडपत्रादि प्रतोना आधारे आ ग्रंथनुं संशोधन कार्य महान् परिश्रमवडे हाथ धर्युं छे जे माटे अमो तेओश्रीना आभारी छिए.

प्रस्तुत त्रिषष्टि ना आ नूतन विशिष्ट संस्करण माटे श्रीयुत डॉक्टर हीरानन्द शास्त्री M. A M. O. L D LITT महाशये इंग्लिशमां ग्रन्थनी गौरवता उपयोगितादि दर्शावनारुं एक सुंदर प्राक्-कथन (Foreword) लखी ग्रन्थनी शोभामां वधारो कर्यो छे. तेथी आ सभा डॉक्टर महाशयनो अन्तःकरणथी उपकार माने छे.

प्रस्तुत ग्रंथनी विशेष हकीकत मुनिराज श्रीचरणविजयजी महाराज पोतानी विस्तृत प्रस्तावनामां आपवाना होवाथी आटलुं निवेदन करी विरमीए छिए.

सेवक,
गांधी वल्लभदास त्रिभुवनदास,
सेक्रेटरी—
श्रीजैनआत्मानंदसभा, भावनगर.



# FOREWORD

Few words are needed to send this publication out The *Trishashtis'alākāpurushacharitam* of which it forms a part is a well-known Jaina work and does not stand in need of any introduction **Hemachandra,** the author of it, is a celebrity with whom every student of Jainism is familiar He was a versatile genius and a great S'vetāmbara teacher or *āchārya,* who wielded considerable influence in the courts of Siddharāja Jayasimha (1150-1200 V S.) and of Kumārapāla (1200-1230 V. S ), the two famous rulers of mediaeval Gujarāt Several works are attributed to him The *Siddhahemavyākarana* is his chief work on grammar. It was written at the request of Siddharāja Jayasimha The respectful way in which it was received by the royal patron is represented in one of the illustrations which I have reproduced in my first Memoir in the Gaekwad's Archaeological Series, plate X The *Trishashtis'alākāpurushacharitam* was written at the request of Kumārapāla and is equally important. It gives interesting accounts of the lives of the Tīrthankaras and other members of the Jaina hierarchy or pantheon Some thirty years ago it was published at Bhāvnagar but that edition has now been exhausted At the same time it was very faulty, as can be seen from the list of errors given in Dr Helen M. Johnson's translation of the first *parvan* which was published in the Gaekwad's Oriental Series in 1931. A good edition of this important work remained a desideratum and that is now being removed by the present publication which is based on five different manuscripts of which three are very valuable in that they are practically free from errors One of them is dated in the Vikrama year 1240 and is written on palm-leaves. The other is dated in the year 1483 of the Vikrama era and is written on paper. The third was written in the Vikrama year 1520 and is also a paper manuscript. The first and the third are from Cambay or Khambāt and the second is from Pātan in North Gujarāt. The photographs accompanying this edition give an idea of these manuscripts

This edition has been carefully and diligently prepared by *Muni* **Charaṇavijaya** under the guidance of the learned *Jaina Āchārya* **Vijayavallabha-Sūri,** the worthy successor of the late famous *Jaina Āchārya* **Vijayānanda-Sūri,** more commonly known by the name of **Ātmārāmajī.** Great care has been taken to make it useful and as accurate as possible. In giving the text the learned editor has pointed out the variants in the form of foot-notes. He will be giving a word-index and an exhaustive introduction also.

The part which is now being placed before the public is only the first *parvan* of the *Trishashtis'alākāpurushacharitam.* The other *parvans* are expected to come out in quick succession.

HIRANANDA SASTRI,
DIRECTOR OF ARCHAEOLOGY
BARODA STATE.

Baroda, 22nd August 1936.

# प्रास्ताविकं विज्ञापनम्.

प्रकृतमिदं दशपर्वप्रविभक्तं **त्रिषष्टिशलाकापुरुषचरितं महाकाव्यं** पुरा वि सं. १९६१–१९६५ प्रमिते संवत्सरे भावनगरस्थया **श्रीजैनधर्मप्रसारकसभया** मुद्रयित्वा प्रकाशितमासीत्। परं साम्प्रतं तस्याऽनुपलभमानत्वादनल्पाशुद्धिसद्भावाच्चैतस्य विशिष्टसंस्करणसम्पादनार्थं कतिपयविद्वज्जनमुनिवरादिसम्प्रार्थितैः पूज्यपादैराचार्यवरैः **श्रीविजयवल्लभसूरिभि**रेतदर्थमाज्ञापितोऽहं पुनः सुसंस्कृत्य सम्पादनेऽस्मिन्नतिगहने कर्मणि तेषामेव महत्या कृपया सम्प्रवृत्तः ।

महौजसां लोकोत्तराणामवश्यं लोकाग्रप्रयायिनां **चतुर्विंशतितीर्थंकर–द्वादशचक्रवर्त्ति–वासुदेवनवक–प्रतिवासुदेवनवक–बलदेवनवकानां** शलाकापुंस्त्वप्रसिद्धानां त्रिषष्टेर्महापुरुषाणामितिवृत्तात्मकं सुचारुरूपैः सुललितमनोहरपद्यैः सुगमगभीरशैल्या च सङ्ग्रथितं दशपर्वमयं प्रस्तुतमेतन्**महाकाव्यं** समुत्साहयति स्म मे चेतः ।

तत्र श्रीमतः प्रथमतीर्थनायकस्य **ऋषभस्वामिनः**, तत्पुत्रस्य प्रथमचक्रवर्त्तिनो **भरतस्य** च चरितेन समायुक्तं षट्सर्गमनोहरमिदं **प्रथमं पर्व** पूज्यपाद–जैनाचार्य–**श्रीविजयवल्लभसूरीश्वर**सद्विचारप्रादुर्भूतायाः **श्रीजैन-आत्मानन्द-शताब्दि-ग्रन्थमालायाः** सप्तमपुष्परूपं सुसावधानतया सम्पाद्य समुपदीक्रियते लोकोत्तमपुरुषचरित्रानन्दामृतपिपासुभ्यो विपश्चिद्वरेण्येभ्यः सज्जनमहानुभावेभ्य इति समुल्लसति मेऽन्तःकरणे परमाह्लादः।

सुप्रसिद्ध–गूर्जरेश्वर–परमदयालु-परमार्हत**कुमारपाल**भूपालप्रार्थनयाऽस्येतिवृत्तरूपमहाकाव्यस्य विनिर्मातारः सुविहितशिरोमणयः सुप्रसिद्धनामधेया विपश्चित्कुलावतंसकाः कलिकालसर्वज्ञपदप्रतिष्ठिताः **श्रीहेमचन्द्रसूरयो** वारिधिवारिवसनामिमां रत्नाकरवलयां वसुमतीं कदा कतमां निजजन्मना, उपशमरसपीयूषवर्षिण्या भारत्या, पावनचरणारविन्देन चाऽलङ्कृतां कृतवन्तः ?, कं वंशं, कां ज्ञातिं वा निर्मलस्वजनुषा विभूषितवन्तः ?, अथ च विशुद्धस्वजीवितव्येन कं गच्छं पावनं चक्रुः ?, इत्यादीनां सप्रमाणः परामर्शः समग्रग्रन्थपर्यवसानेऽन्तिमे विभागे विस्तृतप्रस्तावनासमये विस्तरतः करिष्यते। इदानीं त्वत्राऽनतिविस्तरेणैव संसूच्यते ।

पूज्या इमे महाकवयः पूर्णतल्लगच्छीयाः सूरयः। सत्तासमयश्चैषां विक्रमीयद्वादशशताब्द्या उत्तरार्धे त्रयोदशशताब्द्याश्च पूर्वार्धे सम्यगवबुध्यते ऐतिह्यप्रमाणेन। जन्मभूमिस्तु सौराष्ट्र-गूर्जरजनपदयोः सन्धौ स्थितं धन्धूकाख्यं नगरम्। उत्पत्तिवंशस्तु बुद्धिवैभवप्रौढो मोढो वणिग्वंशः। पादचङ्क्रमणेनाऽनल्पविषयेषु विहृत्य प्रतापशालिनो महाराजान्, राज्याधिकारिणो, नागरिकप्रभृतींश्चाऽनेकान् भव्यान् स्वकीयामोघधर्मदेशनादानेन बोधयित्वा सद्धर्मे नियोजितवन्त इति सुप्रसिद्धमेव ।

एते च प्रौढा ग्रन्थकाराः सर्वतन्त्रस्वातन्त्र्येण प्रभूततरदार्शनिकविज्ञानरहस्यवेदित्वेन च प्रौढप्रतापगूर्जरेश्वर-**सिद्धराजे**त्यपरनाम-**जयसिंह**-परमार्हत**कुमारपाल**भूपालाभ्यां भूरितरं सन्मानं, महतीं प्रतिष्ठां चोपालभिषत, तत्कालीनभारतीयपण्डितप्रवरपरिषत्सु मूर्धन्यतां च प्रापुः। अद्भुतचातुर्यांश्चेमे आचार्यवर्याः समयज्ञधुरन्धरतया, निजासाधारणप्रतिभाप्रागल्भ्यवशात्, कृतकृत्यत्वेन च स्वकीयं युगप्राधान्यं प्रकटयाञ्चक्रुरित्यत्र तत्कालीना बहुश्रुता विद्वज्जनास्तेषां भूरिकृतयश्च प्रामाण्यमुद्घोषयन्ति ।

कविकुलतिलकायमानानां सूरिशेखराणां श्रीमतां **हेमचन्द्रसूरीश्वराणां** शाब्दिकचातुरीचतुरत्वम्, साहित्यतन्त्रजागरूकत्वम्, अपारजिनागमपारावारपारगामित्वम्, निखिलदर्शननिष्णातत्वम्, विषयविशदीकरणविशारदत्वम्, लौकिकशास्त्रावगाहननैपुण्यं चैतच्चरितावलोकनेन सुस्पष्टं समवज्ञायते ।

महाकाव्यलक्षणपरिपूर्णेऽस्मिन् **महाकाव्ये** कुत्रचित् कलाकौशल्यम्, क्वचन वासनावैषम्यम्, क्वापि प्रकृतिप्रभावम्, कुत्रापि बुद्धिमाहात्म्यम्, कश्चिद् दार्शनिकविवादम्, क्वापि च तत्त्वरहस्यादिकं सरलेन रचनासन्दर्भेण सुकुमारशैल्या च निरूपयन्त इमे ग्रन्थकाराः स्वसमयप्रवर्त्तमानस्य लौकिकाचार–व्यवहारस्य, सामाजिकप्रथायाः, धार्मिकभावस्य, नैतिकजीवनस्य, अन्यस्याऽपि च तादृशस्याऽऽनुषङ्गिकस्य तत्समयज्ञातव्यवस्तुनः समुल्लेखं यथास्थानं श्लेषगर्भितरूपेण चक्रुः। तस्मादिदं **महाकाव्यं** यथा जैनधर्मवासितान्तःक-

रणानां भव्यानां धार्मिकशिक्षादीक्षाविषयत्वेन महतीमुपकारकतामाकलयति, तथैवाऽन्येषामपि काव्यरसास्वादतत्पराणां रसिकानां, पुरातनतत्त्वानुसन्धानैकलक्ष्याणां दक्षाणां, भारतवर्षीयगीर्वाणगिरापरिशीलनपरायणानां पण्डितानां चोपयुक्ततां सम्पादयेदिति मे सुदृढतरो विश्वासः।

अवगाहितविविधवाङ्मयाश्चेमे प्रौढप्रतिभाशालिनो ग्रन्थकारा एतदतिरिक्तान्यन्यान्यपि स्वोपज्ञसुगमवृत्तिसमन्वित**लिङ्गानुशासन**–**धातुपारायणा**द्यङ्गगरिष्ठ-संस्कृत-प्राकृत**सिद्धहेमशब्दानुशासन**–संस्कृत-प्राकृत**द्व्याश्रयमहाकाव्य**–**अभिधानचिन्तामणिनाममाला**–**अनेकार्थसङ्ग्रह**–**निघण्टु**–**देशिनाममाला**–स्वोपज्ञालङ्कारचूडामणिविवरणसमलङ्कृत**काव्यानुशासन**–**छन्दोनुशासन**–**प्रमाणमीमांसा**–**अर्हन्नीति**–स्वोपज्ञवृत्तिविभूषित**योगशास्त्र**–**वीतरागस्तोत्र**–**महादेवस्तोत्र**–**अयोगव्यवच्छेदद्वात्रिंशिका**–**अन्ययोगव्यवच्छेदद्वात्रिंशिका**दीनि विविधविषयव्यावर्णनपराणि नैकग्रन्थरत्नानि जग्रन्थुः।

ग्रन्थकर्त्राऽस्मिन् प्रथमे पर्वणि वर्णितो विषयः प्रान्ते पद्येनैकेनैव सङ्क्षिप्ततया इत्थं समासूचि—

स्वामिप्राग्भववर्णनं कुलकरोत्पत्तिः प्रभोर्जन्म चो-
द्वाहादिव्यवहारदर्शनमथो राज्यं व्रतं केवलम्।
चक्रित्वं भरतस्य मोक्षगमनं भर्त्तुः क्रमाच्चक्रिणो-
ऽप्यस्मिन् पर्वणि वर्णितं वितनुतात् पर्वाणि सर्वाणि वः॥

जिज्ञासूनां कृतेऽस्य विस्तृता विषयानुक्रमणिका त्वत्राऽग्रे प्रदर्शिता विशेषजिज्ञासां परिपूरयिष्यतीति मन्ये।

प्रस्तुतमहाकाव्यस्य सम्पादनप्रसङ्गे आदर्शपुस्तकपञ्चकं समासादितमस्माभिः। तत्र—

१ प्रथमं स्तम्भतीर्थीयप्राचीनताडपत्रीयजैनभाण्डागारसत्कं, विक्रमसंवत्१२४०संवत्सरे **श्रीसर्वाणन्दसूरीणामुपासकेन घूसडीग्रामवासिना श्राद्धधर्मेण घूसडीग्रामे** लिखितं, व्याख्यापितं च, ताडपत्रीयमतिजीर्णमतिशुद्धतमं त्रयोदशाधिकपञ्चशत(५१३)पत्रात्मकमादर्शपुस्तकं प्रान्त्यपत्रत्रुटितं "**श्रेष्ठिदीपचन्द्र पानाचन्द्र**"-द्वारा समुपलब्धम्। इदमत्र "खंता०" सङ्केतेन समभिज्ञापितम्*। अत्र१५" × २३/४" प्रमाणपरिमितस्याऽस्य प्रारम्भप्रान्तपत्रयोः प्रतिकृती अत्र प्रदर्शिते।

२ द्वितीयम्-अणहिल्लपुरपत्तन (पाटण) फोफलीयापाटकान्तर्गत "वखतजी" संज्ञकवीथीस्थश्रीसङ्घभाण्डागारसम्बन्धि वि सं १४८३ वत्सरे लिखितं प्रायशोऽशुद्धं, सुवाच्यमेकपञ्चाशदधिकशत(१५१)पत्रात्मकं कागदोपरिलिखितं विद्वद्रत्न-मुनिपुङ्गव-**श्रीपुण्यविजय**कृपया समासादितम्। एतदत्र "सं १" संज्ञया सूचितम्†। १२"×५" प्रमाणप्रमितस्याऽस्याऽऽद्य-प्रान्तपत्रयोः प्रतिकृती अत्र निदर्शिते।

---

* एतस्य समाप्त्यनन्तरोपन्यस्तैरिमैः पुस्तकलेखयितृप्रशस्तिपद्यैर्विभूषितोऽय समुल्लेखो विजृम्भते—

.. ...., विचारणा। सुधर्मस्य ततो ज्ञान, ज्ञानात् तस्य परिग्रह ॥ १ ॥ तस्माद् भवन्ति श्रेयासि, स्थैर्यस्य .... । .. . ., [त]स्माद् धर्मपरिणति ॥ २ ॥ तस्माद् धर्मोपदेशश्चोपदेशाद् धर्मविस्तृति । ततोऽनेके भव तीर्त्वा, लभन्ते च परं पदम् ॥ ३ ॥ इत्यनेकगुणं ज्ञान, । सर्वेषामेव धर्माणा, ज्ञानदानफल महत् ॥ ४ ॥ [चतुर्भि कलापकम्] "ज्ञानदानेन जानाति, जन्तुः स्वस्य हिताहितम्। वेत्ति [जीवादितत्त्वानि, विरतिं] च समश्नुते ॥ ५ ॥ ज्ञानदानादवाप्नोति, केवलज्ञानमुज्ज्वलम्। अनुगृह्याऽखिलं लोक, लोकाग्रमधिगच्छति ॥ ६ ॥" [त्रि श पु च. प १ स १ श्लो १५५–१५६] ऋते ज्ञानात् कथ जन्तु[र्वेत्ति स्वस्य हिताहितम्]। अज्ञानी जनुषान्धवत्, कथ वर्त्तेत सत्पथि ? ॥ ७ ॥ [विज्ञाय] माहात्म्य ज्ञानदानस्य सद्गुरोरिति। **श्रीसर्वाणन्दसूरी**णामुपासकेन स(र्वे)[दा ॥८] .. ...न, **घूसडीग्राम**वासिना। लिखित **श्राद्धधर्मेण**, **चरित्रमृषभप्रभोः** ॥९॥ यावद् भूर्भूधरो मेरुर्यावच्चन्द्रदिवाकरौ। यावज्जिनेन्द्र [धर्मोऽय, तावज्जयेत्] सुपुस्तक ॥ १० ॥ ७ ॥ मङ्गलं महाश्री. ॥ ७ ॥ वत्सरे श्रीविक्रमार्के, **द्वादशवेदाम्बराधिके** (१२४०)। व्याख्यातं **घूसडीग्रामे**, . ॥ ११ ॥

† अस्य प्रान्तभागेऽयं समुल्लेखो दृश्यते—

सवत् १४८३ वर्षे द्वितीयवैशाखवदि ४ बुधे——————[सूरिपट्टालङ्कार भ० **श्रीविजयसिंहसूरि**शिष्य मु० **जिनचन्द्रेण** श्री**आदिनाथचरि**]त्रं लेखयाचक्रे। परोपकाराय ॥ यादृशं पुस्तके दृष्टं, तादृशं लिखित मया। यदि शुद्धमशुद्ध वा, मम दोषो न दीयते ॥ [खंभायत (?) नयरे] सम्पूर्ण कृतम्। शुभ भवतु लेखकपाठकयोश्च। [धे इत्यत आरभ्य त्रं यावत्, तथा ते इत्यत आरभ्य स यावत् पङ्क्तिद्वय केनचिन्मषीकूर्चिकया विनाशितम्, तथापि सम्प्रयत्नेन पठित पाठ. प्रदर्शित ।]

३ तृतीय पूर्वनिर्दिष्टस्तम्भतीर्थीयप्राचीनताडपत्रीयपुस्तकभाण्डागारसत्कं वि. सं १५२० वर्षे लिखितं प्रायः-शुद्धं कागदीयं नवनवति(९९)पत्रमयं "श्रेष्ठिदीपचन्द्र पानाचन्द्र" द्वारा प्राप्तम् । इदमत्र "खं०" संज्ञया निर्दिष्टम्‡। १०$\frac{१}{४}$"×४$\frac{१}{२}$" एतत्प्रमाणस्याऽस्याऽऽद्यान्तपत्रयोः प्रतिकृती अत्र प्रदर्शिते ।

४ चतुर्थं पत्तनीयपूर्वोक्तश्रीसङ्घभाण्डागारसत्कं सप्तपञ्चाशदधिकशत( १५७ )पत्रात्मक सुवाच्यं नातिशुद्धं प्रत्नं स्थूलाक्षरसमलङ्कृतं कागदपुस्तकं पूज्यप्रवर-संशोधनकार्यकुशल मुनिश्रीपुण्यविजयप्रयत्नेनाऽऽसादितम् । इदमत्र "सं २" नाम्ना निदर्शितम् । ११$\frac{१}{२}$"×४$\frac{१}{२}$ प्रमाणमितम् ।

५ पञ्चमं च सूर्यपुर( सुरत )गोपीपुरास्थश्रीजैनानन्दपुस्तकालयसत्कं प्राचीनमशुद्धं मनोहरं त्रिपञ्चाशदधिकशत( १५३ )पत्रात्मकं कागदीयं "झवेरी अमरचन्द्र मूलचन्द्र" द्वारा संलब्धम् । एतदत्र "आ०" संज्ञया विनिर्दिष्टम् । १०$\frac{१}{४}$"×४$\frac{१}{२}$" प्रमाणम् ।

आदर्शपुस्तकपञ्चकेऽपि यो यत्र पाठभेदः समासादितः शुद्धतया च प्रतिभातः स तत्रैव तत्तत्पुस्तकसङ्केतेन सह तस्य पत्रस्य निम्नभागे टिप्पनरूपेण विन्यस्तः ।

पूर्वनिर्दिष्टादर्शपुस्तकानि वितीर्याऽत्र साहाय्यविधायकेभ्यो भूरि धन्यवादान् वितरामि । निवेदये चैतेऽन्ये चाऽनेन पथाऽऽदर्शपुस्तकसाहाय्यं दत्त्वा ममाऽन्येषां च प्राचीनसाहित्यप्रकाशनप्रयासं मुहुर्मुहुः समुत्तेजयन्त्विति ।

त्रिषष्टिशलाकापुरुषचरितमहाकाव्यान्तर्गतानां विशेषनाम्नां परिचयोऽकारादिक्रमेणाऽन्तिमे विभागे प्रदर्शयिष्यामः ।

प्रथमस्य पर्वणोऽस्य संशोधनकर्मण्यन्तिम"प्रूफ" रूपाणि पत्राणि विलोक्य विशुद्धिं विनिर्दिश्य च सुसाहाय्यविधायिनः पुरातनग्रन्थोद्धारक-पूज्यपाद-प्रवर्त्तकपदालङ्कृतश्रीकान्तिविजयप्रशिष्यरत्नस्य संशोधनकार्यातिनिपुणस्य विद्वज्जनमान्यस्य पूज्यप्रवरमुनिश्रीपुण्यविजयस्य, प्रथमत आरभ्याऽन्तिमपर्यन्तं संशोधने सहकारकारिणश्च विबुधस्य पूज्यवरस्य मुनिश्रीउत्तमविजयस्य महोपकारं कृतज्ञतयाऽत्र संस्मरामि ।

मदुपरोधतः प्रस्तुतमहाकाव्यस्य विस्तरतो विषयानुक्रमणिकाकर्त्तुः पूज्यपाद-दक्षिणविहारि-मुनिश्रीअमरविजयशिष्यरत्नस्येतिहासप्रियस्य कविकर्मकुशलस्य श्रीचतुरविजयस्याऽप्युपकृतिरत्र कथं नाम विस्मर्यते ? ।

प्राच्यविद्यामन्दिरीयगायकवाडप्राच्यग्रन्थमालायां जैनविद्वत्कर्तृकविविधग्रन्थसम्पादकत्वेन ख्यातकीर्त्तेः प्राचीनेतिहासतत्त्ववेदिनोऽस्मिन् प्रास्ताविके विहितसाहाय्यस्य गान्धीत्युपाह्वस्य श्रेष्ठिभगवान्दास तनुजस्य जैनपण्डितश्रीलालचन्द्रस्य नामग्राहं स्मरणं क्रियते ।

प्रस्तुतस्य महाकाव्यस्याऽऽद्यपर्वणः प्रसिद्धिकृते 'पंजाब'देशोद्धारक-न्यायाम्भोनिधि-जैनाचार्य-श्रीमद्विजयानन्दसूरीश्वर (प्रसिद्धनामधेयश्रीआत्मारामजी महाराज) पट्टधर-आचार्यश्रीविजयवल्लभसूरीश्वराणां सुधासोदरेण निखिलप्रत्यूहव्यूहविनाशिनोपदेशेन समुदारतया द्रव्यसहायताकर्त्री धांगध्रावास्तव्यस्य धर्मैकपरायणस्य "श्रेष्ठिवर्य श्रीपुरुषोत्तम सुरचन्द्र" इत्यस्य धर्मपत्नी अं०सौ० श्रीमती "पूरी" इत्याख्या सुश्राविका धन्यवादार्हा ।

---

‡ अस्याऽन्त्योऽयमुल्लेखः समवलोक्यते———

सवत् १५२० वर्षे प्रथमचैत्रसुदि ५ वार बृहस्पति लिखितं पण्ड्या मदनजीकेन पुण्याय परोपकाराय लिखापितम् ॥ सा० मोहनजी लिखापितम् ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

एवमुपरिसूचितानां पञ्चानामादर्शपुस्तकानामाधारेणाऽतिसावधानतया संशोधित, उपयुक्तटिप्पन्यादिना परिष्कृतेऽप्यस्मिन् **महाकाव्ये** प्रमादादिदोषवशाद्, मतिभ्रमादक्षरयोजकदोषाद् वा यत्र कुत्रचिद् याः काश्चनाऽशुद्धयः स्थिता जाता वा भवेयुस्ताः परिमार्जयन्तु विधाय मयि कृपां, संसूचयन्तु च सौहार्दभावेन परिश्रमवेदिनो गुणैकपक्षपातिनो धीधना इति सम्प्रार्थयते——

कुमतनिशानिमीलितभव्यपद्मविबोधनसहस्रकिरण-पञ्चनददेशोद्धारक-बृहत्तपागच्छान्तर्गतसंविग्नशाखीयाऽऽद्याचार्य-संविग्नचूडामणि-सिद्धान्तोदधिपारगामि-न्यायाम्भोनिधि-जैनाचार्य**श्रीमद्विजयानन्दसूरीश्वर**-(प्रसिद्धनामधेय**श्रीआत्मरामजी महाराज**)पट्टधर-निजासाधारणोपदेशप्रभावादनेकधार्मिक-सामाजिकोन्नतिविधायिजैनविद्यालय-गुरुकुल-पुस्तकालयादिसंस्थासंस्थापक-यथार्थोपदेशक-पूज्यपाद-**आचार्यश्रीविजयवल्लभसूरीश्वर**प्रधानशिष्यरत्न-तपोनिधि**श्रीविवेकविजय**शिष्यावतंसक-विद्वच्छ्रेष्ठ-आचार्यपदोपशोभित**श्रीविजयोमङ्गसूरि**चरणारविन्दचञ्चरीकायमाणो विद्वज्जनकृपाभिलाषी—

वटपद्रम्, (बडौदा) घडीयाली पोल, जैन उपाश्रय.
विक्रमसं. १९९२ वीरसं. २४६२.
आत्मसं. ४१. ज्येष्ठशुक्ला ८.
गुरुवासरे. ता. २८-५-३६.

**चरणविजयो मुनिः ।**

इत्थं त्रैषष्टमासीत् सुचरितममलं श्रीशलाकाऽभिधानं,

श्रीमच्छ्रीहेमचन्द्रैः शिरसि मतिमतो वल्लभाख्यानसूरेः।

आज्ञां स्वीये निधाय प्रकटयति चरणः साधु संशोध्य तस्य,

सानन्दं भक्तिभावात् प्रथमकमधुना पर्व लोकोपकृत्यै ॥ १ ॥

॥ अर्हम् ॥

॥ नमः प्रथमानुयोगप्रणेतृभ्यः श्रीकालकार्येभ्यः ॥

न्यायाम्भोनिधि–जैनाचार्य–श्रीविजयानन्दसूरीश्वरपट्टालङ्कार–श्रीविजयवल्लभसूरिभ्यो नमः ॥

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविनिर्मितं

# त्रिषष्टिशलाकापुरुषचरितम् ।



## ऋषभस्वामि–भरतचक्रवर्त्तिचरितप्रतिबद्धं प्रथमं पर्व ।

### प्रथमः सर्गः

सकलार्हत्प्रतिष्ठानमधिष्ठानं शिवश्रियः । भूर्भुवःस्वस्त्रयीशानमार्हन्त्यं प्रणिदध्महे ॥ १ ॥
नामा-ऽऽकृति-द्रव्य-भावैः, पुनतस्त्रिजगज्जनम् । क्षेत्रे काले च सर्वस्मिन्नर्हतः समुपास्महे ॥ २ ॥
आदिमं पृथिवीनाथमादिमं निष्परिग्रहम् । आदिमं तीर्थनाथं च, ऋषभस्वामिनं स्तुमः ॥ ३ ॥
अर्हन्तमजितं विश्वकमलाकरभास्करम् । अम्लानकेवलादर्शसङ्क्रान्तजगतं स्तुवे ॥ ४ ॥
विश्वभव्यजनारामकुल्यातुल्या जयन्ति ताः । देशनासमये वाचः, श्रीसम्भवजगत्पतेः ॥ ५ ॥
अनेकान्तमताम्भोधिसमुल्लासनचन्द्रमाः । दद्यादमन्दमानन्दं, भगवानभिनन्दनः ॥ ६ ॥
द्युसत्किरीटशाणाग्रोत्तेजिताङ्घ्रिनखावलिः । भगवान् सुमतिस्वामी, तनोत्वभिमतानि वः ॥ ७ ॥
पद्मप्रभप्रभोर्देहभासः पुष्णन्तु वः शिवम् । अन्तरङ्गारिमथने, कोपाटोपादिवाऽरुणाः ॥ ८ ॥
श्रीसुपार्श्वजिनेन्द्राय, महेन्द्रमहिताङ्घ्रये । नमश्चतुर्वर्णसङ्घगगनाभोगभास्वते ॥ ९ ॥
चन्द्रप्रभप्रभोश्चन्द्रमरीचिनिचयोज्ज्वला । मूर्तिर्मूर्त्तसितध्याननिर्मितेव श्रियेऽस्तु वः ॥ १० ॥
करामलकवद् विश्वं, कलयन् केवलश्रिया । अचिन्त्यमाहात्म्यनिधिः, सुविधिर्बोधयेऽस्तु वः ॥ ११ ॥
सत्त्वानां परमानन्दकन्दोद्भेदनवाम्बुदः । स्याद्वादामृतनिस्यन्दी, शीतलः पातु वो जिनः ॥ १२ ॥
भवरोगार्त्तजन्तूनामगदङ्कारदर्शनः । निःश्रेयसश्रीरमणः, श्रेयांसः श्रेयसेऽस्तु वः ॥ १३ ॥
विश्वोपकारकीभूततीर्थकृत्कर्मनिर्मितिः । सुरासुरनरैः पूज्यो, वासुपूज्यः पुनातु वः ॥ १४ ॥
विमलस्वामिनो वाचः, कतकक्षोदसोदराः । जयन्ति त्रिजगच्चेतोजलनैर्मल्यहेतवः ॥ १५ ॥
स्वयम्भूरमणस्पर्द्धी, करुणारसवारिणा । अनन्तजिदनन्तां वः, प्रयच्छतु सुखश्रियम् ॥ १६ ॥
कल्पद्रुमसधर्माणमिष्टप्राप्तौ शरीरिणाम् । चतुर्धा धर्मदेष्टारं, धर्मनाथमुपास्महे ॥ १७ ॥
सुधासोदरवाग्ज्योत्स्नानिर्मलीकृतदिङ्मुखः । मृगलक्ष्मा तमःशान्त्यै, शान्तिनाथजिनोऽस्तु वः ॥ १८ ॥
श्रीकुन्थुनाथो भगवान्, सनाथोऽतिशयर्द्धिभिः । सुराऽसुरनृनाथानामेकनाथोऽस्तु वः श्रिये ॥ १९ ॥

---

१ त्रिभुवनाधीशम् । २ चित्तैकाग्र्येण नमस्कुर्महे । ३ सेवां कुर्महे । ४ अम्लानो यः केवलज्ञानरूप आदर्शस्तस्मिन् सङ्क्रान्तानि जगन्ति यस्य स तम् । ५ समग्रभव्यजन एव आरामस्तस्मिन् सारणिसमाना । ६ कोपाडम्बरात् । ७ करस्थितनिर्मलजलवत् । ८ कतकचूर्णसमाना ।

**अरनाथः** स भगवांश्चतुर्थोऽरनभोरविः । चतुर्थपुरुषार्थश्रीविलासं वितनोतु वः ॥ २० ॥
सुराऽसुरनराधीशमयूरनववारिदम् । कर्मद्रून्मूलने हस्तिमल्लं **मल्लिमभिष्टुमः** ॥ २१ ॥
जगन्महामोहनिद्राप्रत्यूषसमयोपमम् । **मुनिसुव्रतनाथस्य**, देशनावचनं स्तुमः ॥ २२ ॥
लुठन्तो नमतां मूर्ध्नि, निर्मलीकारकारणम् । वारिप्लवा इव **नमेः**, पान्तु पादनखांशवः ॥ २३ ॥
यदुवंशसमुद्रेन्दुः, कर्मकक्षहुताशनः । **अरिष्टनेमिर्भगवान्**, भूयाद् वो रिष्टनाशनः ॥ २४ ॥
कमठे धरणेन्द्रे च, स्वोचितं कर्म कुर्वति । प्रभुस्तुल्यमनोवृत्तिः, **पार्श्वनाथः** श्रियेऽस्तु वः ॥ २५ ॥
कृतापराधेऽपि जने, कृपामन्थरतारयोः । ईषद्बाष्पार्द्रयोर्भद्रं, **श्रीवीरजिननेत्रयोः** ॥ २६ ॥
एषां तीर्थकृतां तीर्थेष्वासन् द्वादश चक्रिणः । नवाऽर्धचक्रिणो रामास्तथा प्रत्यर्धचक्रिणः ॥ २७ ॥
एते शलाकापुरुषा, भूतभाविशिवश्रियः । त्रिषष्टिरवसर्पिण्यां, भरतक्षेत्रसम्भवाः ॥ २८ ॥
एतेषां चरितं ब्रूमः, शलाकापुंस्त्वशालिनाम् । महात्मनां कीर्त्तनं हि, श्रेयोनिःश्रेयसास्पदम् ॥ २९ ॥
तत्र तावद् भगवतश्चरित्रमृषभप्रभोः । बोधिबीजावाप्तिहेतोर्भवादारभ्य वर्ण्यते ॥ ३० ॥
अस्त्यसङ्ख्याम्बुधिद्वीपवलयैः परिवेष्टितः । जम्बूद्वीप इति द्वीपो, वज्रवेदिकयाऽऽवृतः ॥ ३१ ॥
भूषितस्य स्रवन्तीभिर्वर्षैर्वर्षधरैरपि । स्वर्णरत्नमयो मेरुर्मध्ये तस्याऽस्ति नाभिवत् ॥ ३२ ॥
स लक्षयोजनोच्छ्रायो, मेखलात्रयभूषितः । चत्वारिंशद्योजनोच्चचूलोऽर्हच्चैत्यमण्डितः ॥ ३३ ॥
अस्ति पश्चिमतस्तस्य, विदेहेषु महापुरम् । क्षितिप्रतिष्ठितं नाम, क्षितिमण्डलमण्डनम् ॥ ३४ ॥
तत्र प्रसन्नचन्द्रोऽभूर्न्निस्तन्द्रो धर्मकर्मसु । देवराजोपमो राजा, राजमानो महर्द्धिभिः ॥ ३५ ॥
तत्र चाऽऽसीत् सार्थवाहो, धनो नाम यशोधनः । आस्पदं सम्पदामेकं, सरितामिव सागरः ॥ ३६ ॥
आसंस्तस्य महेच्छस्याऽनन्यसाधारणाः श्रियः । परोपकारैकफला, रुचो हिमरुचेरिव ॥ ३७ ॥
सदा सदाचारनदीप्रवाहैकमहीधरः । सेवनीयो न कस्याऽऽसीत्, स महीतलपावनः ? ॥ ३८ ॥
तस्मिन्नौदार्यगाम्भीर्यधैर्यप्रभृतयो गुणाः । आसन् बीजान्यमोघानि, प्रभवाय यशस्तरोः ॥ ३९ ॥
कणानामिव रत्नानामुत्करास्तस्य वेश्मनि । गोणीनामिव देवाङ्गवाससामपि राशयः ॥ ४० ॥
अश्वैरश्वतरैरुष्ट्रैर्वाहनैरपरैरपि । तस्य वेश्म व्यराजिष्ट, यादोभिरिव सागरः ॥ ४१ ॥
धनिनां गुणिनां कीर्तिशालिनां च नृणामसौ । धुर्यत्वं धारयामास, प्राणोऽङ्गमरुतामिव ॥ ४२ ॥
अर्थैस्तस्य महार्थस्य, पर्यपूर्यन्त सेवकाः । महासरोवरस्येव, स्यन्दैरभ्यर्णभूमयः ॥ ४३ ॥
स गृहीतमहाभाण्ड, उत्साह इव मूर्तिमान् । ईहाञ्चक्रेऽन्यदा गन्तुं, वसन्तपुरपत्तनम् ॥ ४४ ॥
सार्थवाहो धनस्तस्मिन्, सकलेऽपि पुरे ततः । डिण्डिमं ताडयित्वोच्चैः, पुरुषानित्यघोषयत् ॥ ४५ ॥
असौ धनः सार्थवाहो, वसन्तपुरमेष्यति । ये केऽप्यत्र यियासन्ति, ते चलन्तु सहाऽमुना ॥ ४६ ॥
भाण्डं दास्यत्यभाण्डायाऽवाहनाय च वाहनम् । सहायं चाऽसहायायाऽशम्बलाय च शम्बलम् ॥ ४७ ॥
दस्युभ्यस्त्रास्यते मार्गे, श्वापदोपद्रवादपि । पालयिष्यत्यसौ मन्दान्, सहगान् बान्धवानिव ॥ ४८ ॥
क्षणे स कल्यः कल्याणे, कुलस्त्रीकृतमङ्गलः । रथमास्थाय विदधे, प्रस्थानं पत्तनाद् बहिः ॥ ४९ ॥
प्रस्थानभेरीभाङ्कारैराकारकनरैरिव । जनाः सर्वेऽपि तत्रेयुर्वसन्तपुरगामिनः ॥ ५० ॥

---

१ मोक्षलक्ष्मीविलासम् । २ जलप्रवाहाः । * °तश्च स्र° सं १ ॥ ३ नदीभिः । ४ क्षेत्रैः । ५ कुलपर्वतैः । ६ आलस्यरहितः । ७ इन्द्रतुल्यः । ८ स्थानम् । ९ चन्द्रस्य । १० राशयः । ११ खच्चरै. । १२ जलजन्तुभिः । १३ अङ्गमरुतां—अङ्गान्तर्गतसर्ववायूनां मध्ये प्राणो नाम वायुर्यथा धुर्यत्वं धारयामास तथा । १४ क्षुद्रप्रवाहैः । १५ पाथेयम् । † सकल्यकल्या° सं २ ॥ १६ नीरोगी । १७ आह्वानकारकैः ।

अत्रान्तरे धर्मघोष, आचार्यः साधुचर्यया । धर्मेण पावयन् पृथ्वीं, सार्थवाहमुपाययौ ॥ ५१ ॥
ससम्भ्रममथोत्थाय, धनो [*]दीप्रं तपस्त्विषा । सहस्रांशुमिवाऽऽचार्यमवन्दत कृताञ्जलिः ॥ ५२ ॥
धनेन पृष्टास्त्वाचार्याः, समागमनकारणम् । वसन्तपुरमेष्यामस्त्वत्सार्थेनेत्यचीकथन् ॥ ५३ ॥
सार्थवाहोऽप्युवाचैवं, धन्योऽद्य भगवन्नहम् । अभिगम्या यदायाता, मत्सार्थेन च यास्यथ ॥ ५४ ॥
आचार्याणां कृतेऽमीषामन्नपानाद्यमन्वहम् । सम्पादनीयं युष्माभिः, सूदानित्यादिशच्च सः ॥ ५५ ॥
आचार्या अप्यवोचन्त, यतीनामशनादिकम् । अकृतं चाऽकारितं चाऽसङ्कल्प्यं चापि कल्पते ॥ ५६ ॥
वापीकूपतडागादिगतं वार्यपि वार्यते । अशस्त्रोपहतं सार्थनाथ ! जैनेन्द्रशासने ॥ ५७ ॥
अत्रान्तरे च केनापि, सार्थवाहस्य ढौकितम् । पक्वचूताश्रितं स्थालं, भ्रष्टसन्ध्याभ्रसन्निभम् ॥ ५८ ॥
प्रमोदमेदुरमना, निजगाद ततो धनः । फलान्यमूनि गृह्णीताऽनुगृह्णीत च मामिति ॥ ५९ ॥
सूरिरूचे फलादीदृगशस्त्रोपहतं हि नः । न स्प्रष्टुमपि कल्पेत, किं पुनः श्राद्ध ! खादितुम् ? ॥ ६० ॥
धनोऽवोचदहो ! काऽपि, दुष्करव्रतकारिता । शक्यं दिनमपीदृक्षैर्भवितुं न प्रमादिभिः ॥ ६१ ॥
कल्प्यं वः स्याद् यदन्नादि, तद् दास्यामि प्रसीदत । चलताऽद्येत्युदित्वा तान्, नत्वा च व्यसृजन्मुनीन् ॥६२॥
सार्थवाहस्ततोऽचालीत्, चञ्चलैस्तुरगैर्मयैः । शकटैरुक्षभिस्तुङ्गैस्तरङ्गैरिव सागरः ॥ ६३ ॥
अथ प्रचेलुराचार्या, अपि साधुभिरावृताः । मूर्त्ततामाश्रितैर्मूलगुणोत्तरगुणैरिव ॥ ६४ ॥
सार्थस्याऽग्रे धनः पृष्ठे, माणिभद्रः सखाऽस्य तु । ईयतुः पार्श्वयोस्त्वश्ववारवाराववारितौ ॥ ६५ ॥
श्वेतच्छत्रैः स चक्रे द्यां, शरदभ्रमयीमिव । मायूरैरातपत्रैश्च, प्रावृडब्दमयीमिव ॥ ६६ ॥
करभैः सैरिभैरुक्षवरैरश्वतरैः खरैः । तस्योहे दुर्वहं भाण्डं, घनवातैरिव क्षितिः ॥ ६७ ॥
वेगादलक्ष्यमाणाङ्घ्रिपाता वातमजा इव । ययुः पार्श्वस्थगोणीभिरुत्पक्षा इव वेसराः ॥ ६८ ॥
यूनामन्तर्निविष्टानां, तत्र क्रीडानिबन्धनम् । जङ्गमानीव वेश्मानि, शकटानि चकासिरे ॥ ६९ ॥
महाकाया महास्कन्धा, महिषास्तोयवाहिनः । महीं प्राप्ता इवाऽम्भोदा, जनानां चिच्छिदुस्तृषम्[†] ॥ ७० ॥
तदा तद्भाण्डसम्भारभाराक्रान्ता समन्ततः । शकटश्रेणिचीत्कारै, ररासेव वसुन्धरा ॥ ७१ ॥
औक्षकेणौष्ट्रकेणाऽऽश्वेनोद्धूतः पांशुरानशे । तथा दिवं यथा विष्वक्, सूचीभेद्यं तमोऽभवत् ॥ ७२ ॥
उक्ष्णां घण्टाटणत्कारैर्बधिरीकृतदिङ्मुखैः । चमर्यस्त्रसुर्दूरादुत्कर्णास्तर्णकैः समम् ॥ ७३ ॥
महाभारं वहन्तोऽपि, क्रामन्तोऽपि क्रमेलकाः । वलितग्रीवमग्राणि, भूरुहां लिलिहुर्मुहुः ॥ ७४ ॥
उत्कर्णसरलग्रीवा, दशन्तो दशनैर्मिथः । पृष्ठप्रतिष्ठकण्ठालाः, प्रष्ठा एवाऽभवन् खराः ॥ ७५ ॥
आरक्षकैः प्रतिदिशं, वेष्टितः शस्त्रपाणिभिः । वज्रपञ्जरमध्यस्थ, इव सार्थोऽवहत् पथि ॥ ७६ ॥
महार्थस्यापि सार्थस्य, दूरेऽस्थुस्तस्य दस्यवः । महार्घमौलिरत्नस्य, भुजङ्गमपतेरिव ॥ ७७ ॥
निःस्वाऽऽढ्ययोर्निर्विशेषं, योगे क्षेमे च सोद्यमः । धनः सर्वान्[‡] सहाऽनैषीद्, यूथेशः कलभानिव ॥ ७८ ॥
आशास्यमानः सकलैर्लोकैः स्फारितलोचनैः । दिने दिने रविरिव, प्रयाणमकरोद् धनः ॥ ७९ ॥
सरसां सरितां चाऽऽपस्तनूकुर्वन् निशा इव । उद्दामः समभूत् पान्थभीष्मो ग्रीष्मऋतुस्तदा ॥ ८० ॥
भ्राष्ट्रमिन्धा इव ववुर्वायवोऽत्यन्तदुःसहाः । आतपं तपनस्तेने, विष्वग् वह्निच्छटोपमम् ॥ ८१ ॥
तत्सार्थपथिकास्तस्थुरनुपातं तरुं तरुम् । प्रपां प्रपां प्रवेशं च, पायं पायं पयोऽलुठन् ॥ ८२ ॥

---

* दीप्तं आ ॥ १ सूर्यमिव । २ अप्रासुकम् । ३ उष्ट्रैः । ४ बलिष्ठवृषभैः । ५ उष्ट्रैः । ६ महिषैः । ७ घनवाताः पृथ्व्याधारभूता वातविशेषाः । ८ पवनाभिमुखचारिणो मृगविशेषाः । ९ खचराः । † °तृषां सं १ ॥ १० लघुवत्सकैः । ११ उष्ट्राः । १२ निर्धन-धनाढ्ययोः । १३ अप्राप्तस्य प्राप्त्युपायो योगः । १४ प्राप्तस्य रक्षणं क्षेमः । ‡ सार्थान् सं १ ॥ १५ लघुगजान् । १६ सूर्यः ।

जिह्वामकर्षन् महिषा, निःश्वासप्रेरितामिव । विविशुश्च नदीपङ्केष्ववधीरितकाहराः ॥ ८३ ॥
रथिकानवमत्यापि, प्राजनेषु पतत्स्वपि । उन्मार्गपादपानीयुरुक्षाणश्च क्षणे क्षणे ॥ ८४ ॥
तप्तायःसूचीसदृशै, रोचिर्भिश्चण्डरोचिषः । व्यलीयन्त शरीराणि, विष्वग् मदनपिण्डवत् ॥ ८५ ॥
तप्तायःफालकर्रेणि, तरणिर्नितरां दधौ । पथि क्षिप्तकरीषाग्निवैषम्यं पांशवोऽवहन् ॥ ८६ ॥
प्रविश्य मार्गसरितः, परितः सार्थयोषितः । उन्मूल्य नलिनीनालान्, गलनालेषु चिक्षिपुः ॥ ८७ ॥
घर्माऽम्भःक्लिन्नवासोभिरशोभन्त भृशं पथि । जलार्द्रा इव विश्रत्यः, सार्थपान्थपुरन्ध्रयः ॥ ८८ ॥
पलाशतालहिन्तालनलिनीकदलीदलैः । तालवृन्तीकृतैः पान्थाश्चिच्छिदुर्घर्मजं श्रमम् ॥ ८९ ॥
ग्रीष्मस्येव स्थितिच्छेदं, गतिच्छेदं प्रवासिनाम् । विदधानः समागच्छन्मेघचिह्नर्तुस्ततः ॥ ९० ॥
यातुधान इवाऽऽकाशे, दधानो धन्व वारिदः । कुर्वन् धाराशरासारं, सार्थेनोत्रासमैक्ष्यत ॥ ९१ ॥
अलातमिव तडितं, तडित्वान् भ्रमयन् मुहुः । निर्भरं भापयामास, पथिकान् बालकानिव ॥ ९२ ॥
अभ्रंलिहैः पयःपूरैः, कूलिनीनां प्रसारिभिः । कूलानि पान्थहृदयानीव सद्यो विदद्रिरे ॥ ९३ ॥
सलिलैर्नीचमुच्चं च, सर्वमुर्व्या समीकृतम् । जडानामुदये हन्त !, विवेकः कीदृशो भवेत् ? ॥ ९४ ॥
पयोभिः कण्टकैः पङ्कैर्दुर्गमत्वेन वर्त्मनः । योजनानां शतमिव, क्रोशोऽपि समजायत ॥ ९५ ॥
अध्वन्यजन आजानुसंलग्नवकर्दमः । आमुक्तमोचक इव, प्रचचाल शनैः शनैः ॥ ९६ ॥
धर्तुं प्रतिपथं पान्थान्, दुर्दैवेन प्रसारिताः । प्रवाहच्छद्मना दीर्घाः, स्वबाहुपरिघा इव ॥ ९७ ॥
अमज्जन्नभितः पङ्कविकटे शकटाः पथि । चिरं कृतविमर्दोत्थरोषाद् ग्रस्ता इवेलया ॥ ९८ ॥
अवरुद्धाऽऽकृष्यमाणा, औष्ट्रिकैर्धृतरज्जुभिः । पथि क्रमेलकाः पेतुर्भ्रश्यत्पादाः पदे पदे ॥ ९९ ॥
दुर्गत्वं वर्त्मनां प्रेक्ष्य, सार्थवाहस्ततो धनः । तस्यामेव महाटव्यां, दत्त्वा वासानवास्थित ॥ १०० ॥
अतिवाहयितुं वर्षाश्चक्रे तत्रोटजान् जनः । न हि सीदन्ति कुर्वन्तो, देशकालोचितां क्रियाम् ॥ १०१ ॥
दर्शिते माणिभद्रेण, निर्जन्तुजगतीतले । उटजोपाश्रयेऽवात्सुः, सूरयोऽपि ससाधवः ॥ १०२ ॥
भूयस्त्वात् सार्थलोकस्य, दीर्घत्वात् प्रावृषोऽपि च । अत्रुट्यत् तत्र सर्वेषां, पाथेययवसादिकम् ॥ १०३ ॥
ततश्चेतस्ततश्चेलुः, कुचेलास्तापसा इव । खादितुं कन्दमूलादि, क्षुधार्त्ताः सार्थवासिनः ॥ १०४ ॥
अथ तत् सार्थनाथस्य, सार्थदौःस्थ्यमशेषतः । विज्ञप्तं माणिभद्रेण, तन्मित्रेण निशामुखे ॥ १०५ ॥
सार्थवाहः सार्थदुःखचिन्तासन्ताननिश्चलः । तस्थौ निवातनिष्कम्प, इव पाथोनिधिस्ततः ॥ १०६ ॥
तस्य चिन्ताप्रपन्नस्य, निद्राऽभूत् क्षणमात्रतः । अतिदुःखाऽतिसौख्ये हि, तस्याः प्रथमकारणम् ॥ १०७ ॥
यामिन्याश्चरमे यामे, मन्दुरायामपालकः । ततश्च कश्चिदप्येवमपाठीदशठाशयः ॥ १०८ ॥
प्रत्याशं विस्फुरत्कीर्त्तिः, प्राप्तोऽपि विषमां दशाम् । स्वामी नः पालयत्यात्मप्रतिपन्नमसावहो ! ॥१०९॥
तदाकर्ण्य धनो दध्यावुपालब्धोऽस्मि केनचित् । अस्तीह मामके सार्थे, को नामाऽत्यन्तदुःस्थितः ? ॥११०॥
आ ज्ञातं सन्ति मे धर्मघोषाचार्याः सहागताः । अकृताऽकारितप्रासुभिक्षामात्रोपजीविनः ॥ १११ ॥
कन्दमूलफलादीनि, स्पृशन्त्यपि न ये क्वचित् । अधुना दुःस्थिते सार्थे, वर्तन्ते हन्त ! ते कथम् ? ॥११२॥
मार्गकृत्यमुरीकृत्य, पथि यानहमानयम् । तानद्यैव समस्मार्षं, किमकार्षमचेतनः ? ॥ ११३ ॥
वाङ्मात्रेणाऽपि नो येषामद्य यावत् कृतौचिती । स्वमुखं दर्शयिष्यामि, तेषामद्य कथं न्वहम् ? ॥ ११४ ॥

---

१ तिरस्कृतकशाविशेषा । २ "परोणी" इति भाषायाम् । ३ सूर्यस्य । ४ सदृशम् । ५ सूर्य. । * प्राविशन् मार्ग° सं १, २. ख ॥ ६ स्त्रियः । ७ राक्षसः । ८ प्रज्वलत्काष्ठम् । ९ मेघ. । १० अत्र डलयोरैक्यात् जलानामित्यपि वक्तव्यम् । ११ स्वबाहुरूपार्गला इव । १२ भूम्या । १३ उष्ट्रारूढैः । † तत्रैव च म° सं १ ॥ ‡ °श्चक्रुस्तत्रोटजान् जनाः स १, ख ॥ १४ समुद्र. । १५ वाजिशालाप्राहरिकः । १६ उचिताचरणम् ।

तथाऽप्यद्याऽपि तान् दृष्ट्वा, निर्ह्रीहः क्षालयाम्यहम् । सर्वत्राऽपि निरीहाणां, कार्यं तेषां तु किं मया ?॥११५॥
इति चिन्तयतस्तस्योत्सुकस्य मुनिदर्शने । तुर्यो यामस्त्रियामीयास्त्रियामेवाऽपराऽभवत् ॥ ११६ ॥
विभातायां विभावर्यां, शुचिवस्त्रविभूषणः । सूरीणामाश्रयमगात्, सप्रधानजनो धनः ॥ ११७ ॥
पलाशच्छदनच्छन्नं, सच्छिद्रतृणभित्तिकम् । स्थलस्थण्डिलसंस्थानं, तेषां सोऽविशदाश्रयम् ॥ ११८ ॥
मन्थानमिव पापाब्धेः, पन्थानमिव निर्वृतेः । आस्थानमिव धर्मस्य, संस्थानमिव तेजसाम् ॥ ११९ ॥
कषायगुल्मनीहारं, हारं कल्याणसम्पदः । सङ्घस्याऽद्वैतमाकल्पं, कल्पद्रुं शिवकाङ्क्षिणाम् ॥ १२० ॥
पिण्डीभूतं तप इव, मूर्त्तिमन्तमिवाऽऽगमम् । तीर्थङ्करमिवाऽद्राक्षीद्, धर्मघोषमुनिं धनः ॥ १२१ ॥
[ त्रिभिर्विशेषकम् । ]

ध्यानाधीनात्मनः कांश्चित्, कांश्चिन्मौनावलम्बिनः। कायोत्सर्गस्थितान् कांश्चित्, पठतः कांश्चिदागमम्॥१२२॥
वाचनां ददतः कांश्चित्, कांश्चिद् भूमिं प्रमार्जतः । वन्दमानान् गुरून् कांश्चित्, कांश्चिद् धर्मकथाजुषः ॥१२३॥
श्रुतमुद्दिशतः कांश्चित्, कांश्चित् तदनुजानतः । तत्त्वानि वदतः कांश्चित्, तत्राऽद्राक्षीन्मुनीनपि ॥ १२४ ॥
[ त्रिभिर्विशेषकम् । ]

सोऽवन्दताऽऽचार्यपादान्, साधूनपि यथाक्रमम् । तस्मै ते धर्मलाभं च, ददुः पापप्रणाशनम् ॥ १२५ ॥
आचार्यपादपद्मान्ते, राजहंस इवाऽथ सः । निषद्याऽऽसादितानन्द, इति वक्तुं प्रचक्रमे ॥ १२६ ॥
तदाऽऽकारयता युष्मान्, भगवन्नात्मना सह । मुधैव सम्भ्रमोऽदर्शि, शरद्गर्जितवन्मया ॥ १२७ ॥
आरभ्य तद्दिनाद् यूयं, न दृष्टा न च वन्दिताः । न चाऽन्नपानवस्त्राद्यैः, कदाचिदपि सत्कृताः ॥ १२८॥
जाग्रत्सुप्तावस्थेन, मया मूढेन किं कृतम् ? । यद् यूयमवजज्ञिध्वे, ध्वस्तस्ववचसा चिरम् ॥ १२९ ॥
भगवन्तः ! सहध्वं तत्, प्रमादाचरणं मम । सर्वसहा महान्तो हि, सदा सर्वसहोपमाः ॥ १३० ॥
सूरयोऽप्यूचिरेऽस्माकं, त्वया किं किं न सत्कृतम् ? । दुःश्वापदेभ्यो दस्युभ्यस्त्रायमाणेन वर्त्मनि ॥१३१॥
तवैव सार्थिका यच्छन्त्यन्नपानादि चोचितम् । तन्न सीदति नः किञ्चित्, मा विषीद महामते ! ॥१३२॥
धनोऽप्यूचे गुणानेव, सन्तः पश्यन्ति सर्वतः । ततो मम सदोषस्याऽप्याराध्यैरेवमुच्यते ॥ १३३ ॥
सर्वथा स्वप्रमादेन, लज्जितोऽस्मि प्रसीदत । साधून् प्रेषयताऽऽहारं, प्रयच्छामीच्छया यथा ॥ १३४ ॥
सूरिर्बभाषे योगेन, वर्त्तमानेन वेत्सि नु । अकृताऽकारिताऽचित्तमन्नाद्युपकरोति नः ॥ १३५ ॥
तदेव दास्ये साधूनां, यदेवोपकरिष्यते । इत्युदित्वा च नत्वा च, निजावासं ययौ धनः ॥ १३६ ॥
अस्याऽनुपदमेवाऽथ, साधुद्वितयमागमत् । तदर्हं चाऽन्नपानादि, दैवादासीन्न किञ्चन ॥ १३७ ॥
इतस्ततोऽन्वेषयंश्च, सार्थवाहः स्वयं ततः । ईक्षाञ्चक्रे घृतं स्त्यानं, निजाशयमिवाऽमलम् ॥ १३८ ॥
इदं वः कल्पते किञ्चिदिति सार्थपतीरिते । इच्छामीति वदन् साधुः, पतद्ग्रहमधारयत् ॥ १३९ ॥
धन्योऽहं कृतकृत्योऽहं, पुण्योऽहमिति चिन्तयन् । रोमाञ्चितवपुः सर्पिः, साधवे स स्वयं ददौ ॥ १४० ॥
आनन्दाश्रुजलैः पुण्यकन्दं कन्दलयन्निव । घृतदानावसानेऽथ, धनोऽवन्दत तौ मुनी ॥ १४१ ॥
सर्वकल्याणसंसिद्धौ, सिद्धमन्त्रसमं ततः । वितीर्य धर्मलाभं तौ, जग्मतुर्निजमाश्रयम् ॥ १४२ ॥
तदानीं सार्थवाहेन, दानस्याऽस्य प्रभावतः । लेभे मोक्षतरोर्बीजं, बोधिबीजं सुदुर्लभम् ॥ १४३ ॥
रजन्यां पुनरप्येषां, मुनीनामाश्रयं ययौ । स प्रविश्याऽनुजानीतेति वदन् प्राणमद् गुरून् ॥ १४४ ॥
धर्मघोषसूरयोऽपि, मेघनिर्घोषया गिरा । श्रुतकेवलिदेशीयां, दिदिशुर्देशनामिमाम् ॥ १४५ ॥

---

१ स्वपापम् । २ राज्या. । ३ मथनदण्डम् । ४ सभास्थानम् । ५ हिमम् । ६ भूषणरूपम् । ७ तदनुज्ञाकारिण. । ८ उपविश्य । ९ आमन्त्रणं कुर्वता । १० जाग्रताऽपि सुषुप्तावस्थागतेन । ११ पृथ्वी तदुपमा । १२ दुष्टहिंस्रप्राणिभ्यः । १३ चौरेभ्य । १४ पूज्यै. । १५ अकृत अकारित अचित्तं चेति एकवद्भावी द्वन्द्वः । १६ पात्रम् । १७ घृतम् । १८ पुण्याङ्कुरम् । १९ श्रुतकेवलिसमानाम् ।

धर्मो मङ्गलमुत्कृष्टं, धर्मः स्वर्गाऽपवर्गदः । धर्मः संसारकान्तारोल्लङ्घने मार्गदेशकः[1] ॥ १४६ ॥
धर्मो मातेव पुष्णाति, धर्मः पाति पितेव च । धर्मः सखेव प्रीणाति, धर्मः स्निह्यति बन्धुवत् ॥ १४७ ॥
धर्मः सङ्क्रमयत्युच्चैर्गुणान् गुरुरिवोज्ज्वलान् । धर्मः प्रकृष्टां* स्वामीव, प्रतिष्ठां च प्रयच्छति ॥ १४८ ॥
धर्मः शर्ममहाहर्म्यं, धर्मो वर्माऽरिसङ्कटे । धर्मो जाड्यच्छिदाघर्मो[2], धर्मो मर्माविदंहसाम् ॥ १४९ ॥
धर्माज्जन्तुर्भवेद् भूपो, धर्माद् रामो[3]ऽर्धचक्र्यपि[4] । धर्माच्चक्रधरो[5] धर्माद्, देवो धर्माच्च वासवः[6] ॥ १५० ॥
ग्रैवेयकाऽनुत्तरेषु, धर्माद् यात्यहमिन्द्रताम् । धर्मादार्हन्त्यमाप्नोति[7], किं किं धर्मान्न सिध्यति? ॥१५१॥
दुर्गतिप्रपतज्जन्तुधारणाद् धर्म उच्यते । दान-शील-तपो-भावभेदात् स तु चतुर्विधः ॥ १५२ ॥

तत्र तावद् दानधर्मस्त्रिप्रकारः प्रकीर्त्तितः । ज्ञानदाना-ऽभयदान-धर्मोपग्रहदानतः ॥ १५३ ॥
दानं धर्मानभिज्ञेभ्यो, वाचनादेशनादिना† । ज्ञानसाधनदानं च, ज्ञानदानमितीरितम् ॥ १५४ ॥
ज्ञानदानेन जानाति, जन्तुः‡ स्वस्य हिताहितम् । वेत्ति जीवादितत्त्वानि, विरतिं च समश्नुते ॥ १५५ ॥
ज्ञानदानादवाप्नोति, केवलज्ञानमुज्ज्वलम् । अनुगृह्याऽखिलं लोकं, लोकाग्रम्[8]अधिगच्छति ॥ १५६ ॥

भवत्यभयदानं तु, जीवानां वधवर्जनम् । मनो-वाक्कायैः करण[9]-कारणा-ऽनुमतैरपि ॥ १५७ ॥
तत्र जीवा द्विधा ज्ञेयाः, स्थावर-त्रसभेदतः । द्वितयेऽपि द्विधा पर्याप्ताऽपर्याप्तविशेषतः ॥ १५८ ॥
पर्याप्तयस्तु षडिमाः, पर्याप्तत्वनिबन्धनम् । आहारो[1] वपु[10][2]रक्षाणि[11][3], प्राणो[4] भाषा[5] मनो[6]ऽपि च ॥ १५९ ॥
स्युरेकाक्ष-विकलाक्ष[12]-पञ्चाक्षाणां शरीरिणाम् । चतस्रः पञ्च षड् वाऽपि, पर्याप्तयो यथाक्रमम् ॥ १६० ॥
एकाक्षाः स्थावरा भूम्यप्तेजोवायुमहीरुहः । तेषां तु पूर्वे चत्वारः, स्युः सूक्ष्मा बादरा अपि ॥ १६१ ॥
प्रत्येकाः साधारणाश्च, द्विप्रकारा महीरुहः[13] । साधारणा अपि द्वेधा, सूक्ष्म-बादरभेदतः ॥ १६२ ॥
त्रसा द्वि-त्रि-चतुः-पञ्चेन्द्रियत्वेन चतुर्विधाः । तत्र पञ्चेन्द्रिया द्वेधा, संज्ञिनोऽसंज्ञिनोऽपि च ॥ १६३ ॥
शिक्षोपदेशाऽऽलापान् ये, जानते ते तु संज्ञिनः । सम्प्रवृत्तमनःप्राणास्तेभ्योऽन्ये स्युरसंज्ञिनः ॥ १६४ ॥
स्पर्शनं रसनं घ्राणं, चक्षुः श्रोत्रमितीन्द्रियम् । तस्य स्पर्शो रसो गन्धो, रूपं शब्दश्च गोचरः ॥ १६५ ॥
द्वीन्द्रियाः कृमयः शङ्खाः, गण्डूपदा जलौकसः । कपर्दकाः शुक्तयश्च, विविधाकृतयो मताः ॥ १६६ ॥
यूका मत्कुण-मर्कोट§-लिक्षाद्यास्त्रीन्द्रिया मताः । पतङ्ग-मक्षिका-भृङ्ग-दंशाद्याश्चतुरिन्द्रियाः ॥ १६७ ॥
तिर्यग्योनिभवाः शेषा, जल-स्थल-खचारिणः । नारका मानवा देवाः, सर्वे पञ्चेन्द्रिया मताः ॥ १६८ ॥
तत्पर्यायक्षयाद् दुःखोत्पादात् सङ्क्लेशतस्त्रिधा । वधस्य वर्जनं तेष्वभयदानं तदुच्यते ॥ १६९ ॥
ददात्यभयदानं यो, दत्तेऽर्थान् सोऽखिलानपि । जीविते सति जायेत, यत् पुमर्थ[14]चतुष्टयी ॥ १७० ॥
जीवितादपरं श्रेयो, जन्तोर्जायेत जातुचित् । न राज्यं न च साम्राज्यं, देवराज्यं न चोच्चकैः ॥ १७१ ॥
इतोऽशुचिस्थस्य कृमेरितः स्वर्गसदो हरेः । प्राणापहारप्रभवं, द्वयोरपि समं भयम् ॥ १७२ ॥
समग्रजगदिष्टायाऽभयदानाय सर्वथा । सर्वदाऽप्यप्रमत्तः सन्, प्रवर्त्तेत ततः सुधीः ॥ १७३ ॥
भवेदभयदानेन, जनो जन्मान्तरेषु हि । कान्तो दीर्घायुरारोग्य-रूप-लावण्यशक्तिमान् ॥ १७४ ॥

धर्मोपग्रहदानं तु, जायते तत्र पञ्चधा । दायक-ग्राहक-देय-काल-भावविशुद्धितः ॥ १७५ ॥
तत्र दायकशुद्धं तन्न्याय्यार्थो[15] ज्ञानवान् सुधीः । निराशंसो[16]ऽननुतापी[17], दायकः प्रददाति यत् ॥ १७६ ॥
इदं चित्तमिदं वित्तमिदं पात्रं निरन्तरम् । सञ्जातं यस्य मे सोऽहं, कृतार्थोऽस्मीति दायकः ॥ १७७ ॥

---

१ मार्गदर्शक । * प्रतिष्ठां सं १ ॥ २ शैत्यविच्छेदे घर्मरूप. । ३ बलदेवः । ४ वासुदेवः । ५ चक्रवर्ती । ६ इन्द्र. । ७ तीर्थङ्करत्वम् । † °दितः सं २, ॥ ‡ °जन्तुस्तस्य सं २ ॥ ८ मोक्षम् । ९ कृतकारितानुमोदितैः । १० शरीरम् । ११ इन्द्रियाणि । १२ विकलाक्षशब्देन द्वीन्द्रियादयो विकलेन्द्रिया ग्राह्याः । १३ वनस्पतिकायाः । § °मत्कोट–लि° सं २, ख ॥ १४ धर्मार्थकाममोक्षरूपा । १५ नीतिसम्पादितार्थः । १६ निरीहः । १७ पश्चात्तापविरहित. ।

सावद्ययोगविरतो, गौरवत्रयवर्जितः । त्रिगुप्तः पञ्चसमितो, रागद्वेषविनाकृतः ॥ १७८ ॥
निर्ममो नगरवसत्यङ्गोपकरणादिषु । तथाऽष्टादशशीलाङ्गसहस्रधरणोद्धुरः ॥ १७९ ॥
रत्नत्रयधरो धीरः, समकाञ्चनलेष्टुकः । शुभध्यानद्वयस्थास्नुर्जिताक्षः[1] कुक्षिशम्बलः[2] ॥ १८० ॥
निरन्तरं यथाशक्ति, नानाविधतपःपरः । संयमं सप्तदशधा, धारयन्नविखण्डितम् ॥ १८१ ॥
अष्टादशप्रकारं च, ब्रह्मचर्यं समाचरन् । यत्रेदृग् ग्राहको दानं, तँत्[*] स्याद् ग्राहकशुद्धिमत् ॥ १८२ ॥
देयशुद्धं[†] द्विचत्वारिंशद्दोषरहितं भवेत् । पाना-ऽशन-खाद्य-स्वाद्य-वस्त्र-संस्तारकादिकम् ॥ १८३ ॥
कालशुद्धं[‡] तु यत् किञ्चित्, काले पात्राय दीयते । भावशुद्धं त्वनाशंसं[3], श्रद्धया यत् प्रदीयते ॥ १८४ ॥
न देहेन विना धर्मो, न देहोऽन्नादिकं विना । धर्मोपग्रहदानं तद्, विदधीत[4] निरन्तरम् ॥ १८५ ॥
पात्रेभ्योऽशनपानादिधर्मोपग्रहदानतः । करोति तीर्थाव्युच्छित्तिं[5], प्राप्नोति च परं पदम् ॥ १८६ ॥
शीलं सावद्ययोगानां, प्रत्याख्यानं निगद्यते । द्विधा तद्देशविरति-सर्वविरतिभेदतः ॥ १८७ ॥
देशतो विरतिः पञ्चाणुव्रतानि गुणास्त्रयः । शिक्षाव्रतानि चत्वारि, चेति द्वादशधा मताः ॥ १८८ ॥
तत्र स्थूलाऽहिंसा-सत्या-ऽस्तेय-ब्रह्मा-ऽपरिग्रहाः । अणुव्रतानि पञ्चेति, कीर्त्तितानि जिनेश्वरैः ॥ १८९ ॥
अथ दिग्विरतिर्भोगोपभोगविरतिस्तथा । अनर्थदण्डविरतिश्चैवं गुणव्रतत्रयी ॥ १९० ॥
सामायिकं च देशावकाशिकं पौषधस्तथा । अतिथीनां संविभागः, शिक्षाव्रतचतुष्टयम् ॥ १९१ ॥
तदेषा देशविरतिः, शुश्रूषादिगुणस्पृशाम् । यतिधर्मानुरक्तानां, धर्मपथ्यदनार्थिनाम्[6] ॥ १९२ ॥
शम-संवेग-निर्वेदा-ऽनुकम्पा-ऽऽस्तिक्यलक्षणम् । सम्यक्त्वं प्रतिपन्नानां, मिथ्यात्वविनिवर्त्तिनाम् ॥ १९३ ॥
महात्मनां सानुबन्धक्रोधोदयविवर्जिनाम् । चारित्रमोहघातेन[§], जायते गृहमेधिनाम् ॥ १९४ ॥
[ त्रिभिर्विशेषकम् । ]
स्थूलानामितरेषां च, हिंसादीनां विवर्जनम् । सिद्धिसौधैकसरणिः[7], सा सर्वविरतिर्मता ॥ १९५ ॥
प्रकृत्याऽल्पकषायाणां, भवसौख्यविरागिणाम् । विनयादिगुणाऽऽक्तानां, सा मुनीनां महात्मनाम् ॥१९६॥
यत् तापयति कर्माणि, तत् तपः परिकीर्त्तितम् । तद् बाह्यमनशनादि, प्रायश्चित्तादि चाऽऽन्तरम् ॥१९७॥
अनशनमौनोदर्यं, वृत्तेः संक्षेपणं तथा । रसत्यागस्तनुक्लेशो, लीनतेति बहिस्तपः ॥ १९८ ॥
प्रायश्चित्तं वैयावृत्यं, स्वाध्यायो विनयोऽपि च । व्युत्सर्गो[8]ऽथ शुभध्यानं, षोढेत्याभ्यन्तरं तपः ॥ १९९ ॥
रत्नत्रयधरेष्वेका, भक्तिस्तत्कार्यकर्म च । शुभैकचिन्ता संसारजुगुप्सा भावना भवेत् ॥ २०० ॥
चतुर्धा तदयं धर्मो, निःसीमफलसाधनम् । साधनीयः सावधानैर्भवभ्रमणभीरुभिः ॥ २०१ ॥
धनोऽप्यूचे मया स्वामिन्!, धर्मोऽयं शुश्रुवे चिरात् । एतावन्ति दिनान्येष,वञ्चितोऽस्मि स्वकर्मभिः॥२०२॥
वन्दित्वा गुरुपादाब्जद्वन्द्वं शेषमुनीनपि । धन्यंमन्यो निजावासं, सार्थवाहस्ततो ययौ ॥ २०३ ॥
परमानन्दनिर्मग्नो, धर्मदेशनया तया । धनस्तां क्षपयामास, क्षणदां[9] क्षणमात्रवत् ॥ २०४ ॥
सुप्तोत्थितस्य तस्याऽथ, प्रातर्मङ्गलपाठकः । पपाठ शङ्खगम्भीरमधुरध्वनिबन्धुरः ॥ २०५ ॥
घनान्धकारमलिना, पद्मिनीलक्ष्मितस्करी । व्यवसायहरा नृणां, ययौ प्रावृडिव क्षपा ॥ २०६ ॥
तेजोऽभिमुखचण्डांशुर्व्यवसायसुहृन्नृणाम् । शरत्काल इव प्रातःकालोऽयं जृम्भतेऽधुना ॥ २०७ ॥
सरसामापगानां च, आपुरापः प्रसन्नताम् । शरदा तत्त्वबोधेन, मनांसीव मनीषिणाम् ॥ २०८ ॥
सूर्यांशुभिः शुष्कपङ्काः, पन्थानः सुगमा भृशम् । आसन् ग्रन्था इवाऽऽचार्योपदेशाच्छिन्नसंशयाः ॥२०९॥
कूलिन्यः कूलयोर्मध्ये, वहन्तीह शनैः शनैः । नेमिसीमन्तयोरन्तः, शकटश्रेणयो यथा ॥ २१० ॥

---

१ जितेन्द्रियः । २ उदरमात्रपाथेय. । * तस्य ग्रा° सं १॥ † °शुद्धिं स १॥ ‡ शुद्धि सं १॥ ३ वाञ्छारहितम् । ४ कुर्यात् ।
५ तीर्थस्य अविच्छेदम् । ६ पथ्यदनं शम्बलम् । § °मोहा° सं १ ॥ ७ सिद्धिप्रासादैकसोपानमार्ग. । ८ कायोत्सर्गः । ९ रात्रिम् ।

पक्क[1]श्यामाक-नीवार-वालुङ्क-कुवलादिभिः । अध्वन्या[2]नामिहाऽध्वा[3]न, आतिथ्यमिव कुर्वते ॥ २११ ॥
पवनान्दोल्यमानेक्षुवणध्वानैरसौ शरत् । यानाभियोगसमयं, शसतीवाऽऽभियोगि[4]नाम् ॥ २१२ ॥
पान्थानां तप्यमानानां, रुचिभिश्चण्डरोचिषः । आतपत्रीभवन्त्येते, क्षणं शारदवारिदाः ॥ २१३ ॥
एते सार्थककुद्मन्तः, ककुदैर्भिन्दते स्थलीः । सुखयात्राकृते भङ्क्तुं, वैषम्यमवनेरिव ॥ २१४ ॥
गर्जन्तः प्लावयन्तः क्ष्मां, पुरा ददृशिरे हि ये । नेशुर्मार्गवहा[5]स्तेऽत्र, प्रावृषेण्या घना इव ॥ २१५ ॥
वल्लीभिः फलनम्राभिः, स्वच्छैस्तोयैः पदे पदे । पन्थानोऽयत्नपाथेयाः, पान्थानामिह जज्ञिरे ॥ २१६ ॥
राजहंसा इवोत्साहबहलीकृतचेतसः । गन्तुं देशान्तराण्यत्र, त्वरन्ते व्यवसायिनः[6] ॥ २१७ ॥
तच्छ्रुत्वा सार्थवाहोऽपि, प्रयाणसमयोऽमुना । विज्ञप्त इति विज्ञाय, यात्राभेरीमवादयत् ॥ २१८ ॥
सार्थोऽपि रोदसीकुक्षिम्भरैर्भेरीरवात् ततः । चचाल गोवृन्दमिव, गोपगोशृङ्गनादतः ॥ २१९ ॥
भव्याब्जबोधप्रवणैः, साधुभिः परिवारितः । मरीचिभिः सूर[7] इव, सूरिरप्यचलत् ततः ॥ २२० ॥
अग्रतः पार्श्वतः पश्चादारक्ष[8]पुरुषैः स्वयम् । रक्षामाधाय सार्थस्य, प्रतस्थे सार्थपो धनः ॥ २२१ ॥
महाटवीं समुत्तीर्णे, सार्थे सार्थपतिं ततः । अनुज्ञाप्याऽऽचार्यवर्या, विहर्तुं ययुरन्यतः ॥ २२२ ॥
ततश्च सार्थवाहोऽपि, निष्प्रत्यूहं[9] वहन् पथि । पाथोधिमिव नद्योघो, वसन्तपुरमासदत् ॥ २२३ ॥
विक्रीणीते स्म भाण्डानि, प्रतिभाण्डानि चाऽऽददे । कालेन कियताऽप्येष, धीमन्तो ह्याशुकारिणः॥२२४॥
परितो भरितस्तस्माद्, वारिधेरिव वारिदः । क्षितिप्रतिष्ठं नगरं, पुनरप्याययौ धनः ॥ २२५ ॥
कालेन तत्र पूर्णायुः, कालधर्ममुपागतः । आस्थितैकान्तसुषमेषूत्तरेषु कुरुष्वसौ ॥ २२६ ॥
सीतानद्युत्तरतटे, जम्बूवृ*क्षानुपूर्वतः । उत्पेदे †युग्मधर्मेण, मुनिदानप्रभावतः ॥ २२७ ॥
तत्राऽष्टमे[10]ऽस्य पर्यन्ते, मर्त्या भोज्याभिलाषिणः । षट्पञ्चाशशतद्वन्द्वसङ्ख्यपृष्ठकरण्डकाः[11] ॥२२८ ॥
युग्मरूपास्त्रिगव्यूतोच्छ्रयाः पल्यत्रयायुषः । पर्यन्तप्रसवाः स्वल्पकषाया ममतोज्झिताः ॥ २२९ ॥
अपत्ययुग्ममेकोनपञ्चाशतमहानि तु । पालयित्वा विपद्यन्तेऽथोत्पद्यन्ते सुरेषु ते ॥ २३० ॥
शर्करास्वादुसिकताः, शरज्ज्योत्स्नानिभाम्भसः । तत्रोत्तरेषु कुरुषु, भूम्यो रम्याः स्वभावतः ॥ २३१ ॥
मद्याङ्गप्रमुखास्तत्र, दशधा कल्पपादपाः । मनुजानामयत्नेन, सदा यच्छन्ति वाञ्छितम् ॥ २३२ ॥
ददते तत्र मद्याङ्गा[1], मद्यं भृङ्गा[2]स्तु भाजनम् । तूर्याङ्गा[3]स्तु तूर्याणि, वर्याणि विविधैर्लयैः ॥ २३३ ॥
दीपशिखा[4] ज्योतिष्का[5]श्च, तन्वन्त्युद्द्योतमद्भुतम् । माल्यं यच्छन्ति चित्राङ्गा[6], भोज्यं चित्ररसाः[7] पुनः ॥
भूषणानि तु मण्यङ्गा[8], गेहाकारा[9] गृहाणि तु । सम्पादयन्ति चाऽनग्ना[10], दिव्यवासांस्यनेकशः ॥२३५॥
एते च नियतानर्थान्, यच्छन्त्यनियतानपि । अन्ये च कल्पतरवस्तत्र सर्वेप्सितप्रदाः ॥ २३६ ॥
दिवीव तत्र कल्पद्रुसम्पन्नसकलेप्सितः । धनजीवो युग्मधर्माऽन्वभूद् वैषयिकं सुखम् ॥ २३७ ॥
मिथुनायुः पालयित्वा, धनजीवस्ततश्च सः । प्राग्जन्मदानफलतः, सौधर्मे त्रिदशो[12]ऽभवत् ॥ २३८ ॥
च्युत्वा सौधर्मकल्पाच्च, विदेहेष्वपरेष्वथ । विजये गन्धिलावत्यां, वैताढ्यपृथिवीधरे ॥ २३९ ॥
गन्धाराख्ये जनपदे, पुरे गन्धसमृद्धके । राज्ञः शतबलाख्यस्य, विद्याधरशिरोमणेः ॥ २४० ॥
भार्यायां चन्द्रकान्तायां, पुत्रत्वेनोदपादि सः । नाम्ना महाबल इति, बलेनाऽतिमहाबलः ॥ २४१ ॥
रक्ष्यमाणः स आयुक्तै[13]र्लाल्यमानस्तथा तथा । वृद्धिमासादयामास, शाखी[14]व क्रमयोगतः ॥ २४२ ॥

---

१ श्यामाकस्तृणधान्यविशेषः, नीवारो धान्यविशेषः, वालुङ्कः चिर्भटकम्, कुवलं बदरीफलम्, "काकडी बोर" इति लोकभाषायाम् । २ पान्थानाम् । ३ मार्गान् । ४ यात्रोत्सुकानाम् । ५ मार्गप्रवाहाः । ६ व्यापारिणः । ७ सूर्यः । ८ रक्षकनरैः । ९ निर्विघ्नम् । * °वृक्षस्य पू° आ, स २ ॥ † युग्मरूपेण सं १, ख ॥ १० चतुर्थे दिवसे । ११ पृष्ठस्थितसूक्ष्मगात्रावयवाः । १२ देवः । १३ रक्षकैः । १४ वृक्ष इव ।

कलानिधिरिवाऽशेषकलापूर्णः शनैः शनैः । स बभूव महाभागो, जनानां नयनोत्सवः ॥ २४३ ॥
स कन्यां विनयवतीं, मूर्त्तां तु विनयश्रियम् । समये समयाभिज्ञः, पित्रादेशादुपायत ॥ २४४ ॥
निशातमस्त्रं[1] कामस्य, कामिनीजनकार्मणम् । रतिलीलावनं सोऽथ, यौवनं प्रत्यपद्यत ॥ २४५ ॥
क्रमौ[2] समतलौ तस्य, क्रमात् कूर्मवदुन्नतौ । सिंहमध्याधरीकारधुरीणं मध्यमप्यभूत् ॥ २४६ ॥
उरःस्थलं चाऽकलयत्, स्वर्णशैलशिलातुलाम् । उद्धुरौ दधतुः स्कन्धौ, ककुद्मत्ककुदश्रियम् ॥ २४७ ॥
भुजौ भुजङ्गमाधीशभोगशोभां च बिभ्रतुः[*] । अर्द्धाभ्युदितराकेन्दुलीलामलिकमाददे[3] ॥ २४८ ॥
रदैर्नखैर्मणिनिभैर्वपुषा कनकत्विषा । सकलां कलयामास, मेरुलक्ष्मीं स्थिराकृतिः ॥ २४९ ॥
　अपरेद्युः शतबलो, विद्याधरपतिः सुधीः । महासत्त्वस्तत्त्वविज्ञश्चिन्तयामासिवानिदम् ॥ २५० ॥
विधाय सहजाऽशौचमुपस्कारैर्नवं नवम्[4] । गोपनीयमिदं हन्त !, कियत्कालं कलेवरम् ? ॥ २५१ ॥
सत्कृतोऽनेकशोऽप्येष, सत्क्रियेत यदापि न । तदापि विक्रियां याति, कायः खलु खलोपमः ॥ २५२ ॥
अहो ! बहिर्निपतितैर्विष्ठा-मूत्र-कफादिभिः । हृणीयन्ते प्राणिनोऽमी, कायस्याऽन्तःस्थितैर्न किम् ?॥२५३॥
रोगाः समुद्भवन्त्यस्मिन्नत्यन्तातङ्कदायिनः । दन्दशूका[5] इव क्रूरा, जरद्विटपिकोटरे ॥ २५४ ॥
निसर्गाद्[†] गत्वरश्चाऽयं, कायोऽब्द इव शारदः । दृष्टनष्टा च तत्रेयं, यौवनश्रीस्तडिन्निभा ॥ २५५ ॥
आयुः पताकाचपलं, तरङ्गतरलाः श्रियः । भोगिभोग[6]निभा भोगाः, सङ्गमाः स्वप्नसन्निभाः ॥ २५६ ॥
काम-क्रोधादिभिस्तापैस्ताप्यमानो दिवानिशम् । आत्मा शरीरान्तःस्थोऽसौ, पच्यते पुटपाकवत् ॥ २५७ ॥
विषयेष्वतिदुःखेषु, सुखमानी मनागपि । नाऽहो ! विरज्यति जनोऽशुचिकीट इवाऽशुचौ ॥ २५८ ॥
दुरन्तविषयास्वादपराधीनमना जनः । अन्धोऽन्धुमिव[7] पादाग्रस्थितं मृत्युं न पश्यति ॥ २५९ ॥
आपातमात्रमधुरैर्विषयैर्विषसन्निभैः । आत्मा मूर्छित एवाऽऽस्ते, स्वहिताय न चेतति ॥ २६० ॥
तुल्ये चतुर्णां पौमर्थ्ये[8], पापयोरर्थकामयोः । आत्मा प्रवर्त्तते हन्त !, न पुनर्धर्ममोक्षयोः ॥ २६१ ॥
अस्मिन्नपारे संसारपारावारे[‡] शरीरिणाम् । महारत्नमिवाऽनर्घ्यं, मानुष्यमतिदुर्लभम् ॥ २६२ ॥
मानुष्यकेऽपि सम्प्राप्ते, प्राप्यन्ते पुण्ययोगतः । देवता भगवानर्हन्, गुरवश्च सुसाधवः ॥ २६३ ॥
मानुष्यकस्य यद्यस्य, वयं नाद्मद्महे फलम् । मुषिताः स्म तदधुना, चौरैर्वसति पत्तने ॥ २६४ ॥
तदद्य कवचहरे, कुमारेऽस्मिन् महाबले । राज्यभारं समारोप्य, कुर्महे स्वसमीहितम् ॥ २६५ ॥
विमृश्यैवं शतबलः[§], समाहूय महाबलम् । विनीतं बोधयामास, राज्यग्रहणहेतवे ॥ २६६ ॥
स राज्यभारमुद्वोढुं, मेने पितृनिदेशतः । भवन्ति हि महात्मानो, गुर्वाज्ञाभङ्गभीरवः ॥ २६७ ॥
ततः शतबलः सिंहासनेऽध्यास्य महाबलम् । अभिषिच्य स्वहस्तेन, चक्रे तिलकमङ्गलम् ॥ २६८ ॥
स रराज नवो राजा, कुन्दसोदरकान्तिना । चान्दनेन तिलकेनोदयाचल इवेन्दुना ॥ २६९ ॥
पैतृकेणाऽऽतपत्रेण, हंसपत्रामलेन सः । शुशुभे शारदाभ्रेण, गिरिराज इवोच्चकैः ॥ २७० ॥
विरेजे प्रेङ्खता चारुचामरद्वितयेन सः । बलाकायुगलेनेव, विमलेन बलाहकः[9] ॥ २७१ ॥
तस्याऽभिषेके गम्भीरतरो मङ्गल्यदुन्दुभिः । दध्वान ध्वनयन्नाशाश्चन्द्रोदय इवोदधिः ॥ २७२ ॥
समन्तान्मन्त्रिसामन्तैः, समेत्य समनम्यत । द्वैतीयीकः शतबल, इव रूपान्तरेण सः ॥ २७३ ॥
पुत्रं राज्ये निवेश्यैवं, स्वयं शतबलस्ततः । आददे शमसाम्राज्यमाचार्यचरणान्तिके ॥ २७४ ॥
सोऽसारान् विषयान् प्रोज्झ्य, सारं रत्नत्रयं दधौ । तथाऽप्यखण्डा तस्यासीत्, सर्वत्र समचित्तता ॥ २७५ ॥
मूलादुन्मूलयामास, कषायान् स जितेन्द्रियः । कूलङ्कषापूर[10] इव, कूलस्थितमहीरुहान् ॥ २७६ ॥

---

१ तीक्ष्णम् । २ चरणौ । * बिभ्रतुः सं १, आ ॥ ३ ललाटम् । ४ सत्कारैः । ५ सर्पाः । † निसर्गग° सं १ आ ॥
६ सर्पफणातुल्याः । ७ कूपम् । ८ पुरुषार्थत्वे । ‡ संसारे पा° सं २ ॥ § °बलस्तदाहू° सं १ ॥ ९ मेघ. । १० नद्याः पूर इव ।

आत्मारामममना वाचंयमो नियतचेष्टितः । अधिसेहे महासत्त्वो, दुःसहान् स परीषहान् ॥ २७७ ॥
मैत्र्यादिभिर्भावनाभिः, प्रवृद्धध्यानसन्ततिः । सोऽमन्दानन्दनिर्मग्नस्तस्थौ मुक्ताविवाऽनिशम् ॥ २७८ ॥
ध्यानेन तपसा चाऽऽयुर्लीलयैवाऽतिवाह्य सः । महात्मा सादयामास, सदनं त्रिदिवौकसाम् ॥ २७९ ॥
महाबलोऽपि बलिभिः, खेचरैः परिवारितः । आखण्डल इवाऽखण्डशासनः प्रशशास गाम् ॥ २८० ॥
रम्यास्वारामराजीषु, स रेमे रमणीवृतः । मुदितः पङ्करुहिणीखण्डेष्विव सितच्छदः ॥ २८१ ॥
अभूवंस्तत्पुरो नित्यसङ्गीतप्रतिशब्दितैः । सङ्गीतकानुवादिन्य, इव वैताढ्यकन्दराः ॥ २८२ ॥
अग्रतः पार्श्वयोः पश्चान्नारीभिः परिवेष्टितः । स चकासामास रसः, शृङ्गार इव मूर्तिमान् ॥ २८३ ॥
स्वच्छन्दं तस्य विषयक्रीडाव्यग्रस्य सर्वदा । समरात्रिन्दिवः कालो, बभूव विषुवन्निभः ॥ २८४ ॥
अनेकामात्यसामन्तैर्मणिस्तम्भैरिवाऽपरैः । परिष्कृतां निजास्थानीं, सोऽधितस्थावथैकदा ॥ २८५ ॥
तं नत्वोपाविशन् सर्वे, यथास्थानं सभासदः । ते तदेकाग्रनयना, योगिलीलामधारयन् ॥ २८६ ॥
ते स्वयम्बुद्ध-सम्भिन्नमती शतमतिस्तथा । महामतिश्च तत्राऽऽसाञ्चक्रिरे मन्त्रिणोऽपि हि ॥ २८७ ॥
स्वामिभक्तिसुधासिन्धुर्मनीषारत्नरोहणः । सम्यग्दृष्टिः स्वयम्बुद्ध, इति तत्र व्यचिन्तयत् ॥ २८८ ॥
अस्माकं पश्यतामेष, दुर्वाजिभिरिवेन्द्रियैः । ह्रियते विषयासक्तः, स्वामी धिग् न उपेक्षकान् ॥ २८९ ॥
ईदृग्विनोदव्यग्रस्य, जन्माऽस्मत्स्वामिनो मुधा । यातीति ताम्यति मनो, मीनः स्तोक इवाम्भसि ॥ २९० ॥
अस्माभिर्मन्त्रिभिरसौ, न चेदुच्चैःपदं श्रयेत् । तदस्माकं भवेन्नर्ममन्त्रिणां च किमन्तरम् ? ॥ २९१ ॥
तद्विज्ञपय्य नेतव्योऽस्माभिः स्वामी हिते पथि । नीयन्ते यत्र तत्रैते, यान्ति सारणिवन्नृपाः ॥ २९२ ॥
यद्यप्यपवदिष्यन्ते, स्वामिव्यसनजीविनः । वाच्यं तथाऽपि नोप्यन्ते, यवा मृगभयेन किम् ? ॥ २९३ ॥
विमृश्येति स्वयम्बुद्धो, धौरेयो बुद्धिशालिनाम् । इति विज्ञपयामास, राजानं रचिताञ्जलिः ॥ २९४ ॥
आसंसारं सरिन्नाथः, किं तृप्यति सरिज्जलैः ? । सरित्पतिपयोभिर्वा, किमेष वडवानलः ? ॥ २९५ ॥
अन्तको जन्तुभिः किं वा ?, किमेधोभिर्हुताशनः ? । सुखैर्वैषयिकैरात्मा, किं तथैष कदाचन ? ॥ २९६ ॥
कूलच्छाया दुर्जनाश्च, विषं च विषयास्तथा । दन्दशूकाश्च जायन्ते, सेव्यमाना विपत्तये ॥ २९७ ॥
आसेव्यमानस्तत्कालसुखोऽन्तविरसः स्मरः । कण्डूय्यमाना पामेव, निकामं च प्रवर्द्धते ॥ २९८ ॥
कामोऽयं नरकदूतः, कामो व्यसनसागरः । कामो विपल्लताकन्दः, कामः पापद्रुसारणिः ॥ २९९ ॥
मदनेन मदेनेव, जनः परवशीकृतः । सदाचारपथभ्रष्टः, पतत्येव भवावटे ॥ ३०० ॥
अर्थं धर्मं च मोक्षं च, वेश्मेव गृहमेधिनः । आसादितप्रवेशोऽयं, खनत्याखुरिव स्मरः ॥ ३०१ ॥
दर्शनेन स्पर्शनेनोपभोगेन च निर्भरम् । व्यामोहायैव जायन्ते, विषवल्ल्य इव स्त्रियः ॥ ३०२ ॥
निकाममेव कामिन्यः, कामलुब्धकवागुराः । हरिणानामिव नृणां, जायन्तेऽनर्थहेतवे ॥ ३०३ ॥
ये नर्मसुहृदः खाद्यपामैकसुहृदो हि ते । स्वामिनश्चिन्तयन्त्येते, परलोकहितं न यत् ॥ ३०४ ॥
स्त्रीकथाभिर्गीतनृत्तैर्नर्मोक्त्या मोहयन्त्यमी । पिङ्गाः स्वस्वामिनमहो !, नीचाः स्वार्थैकतत्पराः ॥ ३०५ ॥
कुसंसर्गात् कुलीनानां, भवेदभ्युदयः कुतः ? । कदली नन्दति कियद् ?, बदरीतरुसन्निधौ ॥ ३०६ ॥
तत्प्रसीद कुलस्वामिन् !, स्वयं विज्ञोऽसि मा मुहः । विहाय व्यसनासक्तिं, मनो धर्मे निधीयताम् ॥ ३०७ ॥
निश्छायेन द्रुमेणेव, सरसेवाऽपवारिणा । निर्गन्धेनेव पुष्पेण, विदन्तेनेव दन्तिना ॥ ३०८ ॥
रूपेणेवाऽलवणिम्ना, राज्येनेवाऽपमन्त्रिणा । अदेवेनेव चैत्येन, रजन्येवेन्दुहीनया ॥ ३०९ ॥

---

१ इन्द्रः । २ पृथ्वीम् । ३ हंसः । * °पुरे नि° सं १, आ ॥ ४ सङ्गीतस्य अनुकरण कुर्वन्त्यः । ५ समरात्रिदिनात्मकः कालो विषुवत् । ६ सभाम् । ७ बुद्धिरत्नस्य रोहणाचलरूपः । ८ समुद्र । ९ समुद्र । १० यमराजः । ११ काष्ठैः । १२ स्मरः । १३ भवकूपे । १४ मूषकः । १५ खानपानैकमित्राणि । १६ विटा ।

यतिनेवाऽचरित्रेण, सैन्येनेवाऽपशस्त्रिणा । मुखेनेवाऽक्षिहीनेन, निर्धर्मेण नरेण किम् ? ॥ ३१० ॥
[ त्रिभिर्विशेषकम् । ]
चक्रवर्त्यप्यधर्मः सन्, जन्म तल्लभते पुनः । कदन्नमपि सम्प्राप्तं, साम्राज्यं यत्र मन्यते ॥ ३११ ॥
महाकुलप्रसूतोऽपि, धर्मोपार्जनवर्जितः । भवेद् भवान्तरे श्वेव, परोच्छिष्टान्नभोजनः ॥ ३१२ ॥
धर्महीनो द्विजन्माऽपि, नित्यं पापानुबन्धकः । बिडाल इव दुर्वृत्तो, म्लेच्छयोनिषु जायते ॥ ३१३ ॥
बिडाल-व्याल-शार्दूल-श्येन-गृध्रादियोनिषु । भवन्ति भूयिष्ठभवा, भविनो धर्मवर्जिताः ॥ ३१४ ॥
धर्महीनाः कृमयः स्युर्रसकृच्छकृदादिषु । कुक्कुटादेर्लभन्ते च, चञ्चूचरणताडनम् ॥ ३१५ ॥
जायन्ते धर्मरहिता, नरा नरकभूमिषु । वैरादिव कदर्थ्यन्ते, परमाधार्मिकासुरैः ॥ ३१६ ॥
अनन्तव्यसनावेगज्वलनान्तरवर्त्तिनः । त्रपुंःपिण्डानिव हहा!, धिगधर्मान् शरीरिणः ॥ ३१७ ॥
धर्मादाप्नोति शर्माणि, परमादिव बान्धवात् । तरण्डेनेव तरति, धर्मेण विपदापगाः ॥ ३१८ ॥
पुंसां शिरोमणीयन्ते, धर्मार्जनपरा नराः । आश्रीयन्ते च सम्पद्भिर्लताभिरिव पादपाः ॥ ३१९ ॥
आधि-व्याधि-विरोधादि, सर्वं बाधानिबन्धनम् । विध्यापयत्याशु धर्मेण, जलेनेव हुताशनः ॥ ३२० ॥
जन्मान्तरेऽप्यर्पणाय, सर्वकल्याणसम्पदाम् । प्रतिभूर्धर्म एवाऽयमलङ्घनीयविक्रमः ॥ ३२१ ॥
किमन्यदुच्यते स्वामिन्! ?, धर्मेणैव बलीयसा । सौधाग्रमिव निश्रेण्या, लोकाग्रं यान्ति जन्तवः ॥३२२॥
विद्याधरनरेन्द्रत्वं, धर्मेणैव त्वमासदः । अतोऽप्युत्कृष्टलाभाय, धर्ममेव समाश्रय ॥ ३२३ ॥
दर्शरात्रिरिवाऽत्यन्तमिथ्यात्वतिमिराकरः । ततो विषोपममतिः, सम्भिन्नमतिरब्रवीत् ॥ ३२४ ॥
साधु साधु स्वयम्बुद्ध!, स्वामिनो हितकाम्यसि । यदाहार इवोद्गारैर्गिरा भावोऽनुमीयते ॥ ३२५ ॥
ऋजोः सदा प्रसन्नस्य, स्वामिनः सुखहेतवे । वदन्त्येवं कुलामात्यास्त्वादृशा एव नाऽपरे ॥ ३२६ ॥
निसर्गकठिनः कस्त्वामुपाध्यायोऽध्यजीगपत् ? । अकाण्डाशनिपाताभं, प्रभौ यदिदमब्रवीः ॥ ३२७ ॥
स्वयं भोगार्थिभिः स्वामी, सेव्यते सेवकैरिह । मा भुंक्थास्त्वं तु भोगानित्युच्यते स कथं नु तैः ? ॥३२८॥
त्यक्त्वा यदैहिकान् भोगान्, परलोकाय यत्यते । हित्वा हस्तगतं लेह्यं, कूर्परालेहनं हि तत् ॥ ३२९ ॥
परलोकफलो धर्मः, कीर्त्यते तदसङ्गतम् । परलोकोऽपि नाऽस्त्येवाऽभावतः परलोकिनः ॥ ३३० ॥
पृथ्व्यप्तेजःसमीरेभ्यः, समुद्भवति चेतना । गुडपिष्टोदकादिभ्यो, मदशक्तिरिव स्वयम् ॥ ३३१ ॥
शरीरान्न पृथक् कोऽपि, शरीरी हन्त! विद्यते । परित्यज्य शरीरं यः, परलोकं गमिष्यति ॥ ३३२ ॥
निःशङ्कमुपभोक्तव्यं, ततो वैषयिकं सुखम् । स्वात्मा न वञ्चनीयोऽयं, स्वार्थभ्रंशो हि मूर्खता ॥ ३३३ ॥
धर्माधर्मौ च नाशङ्क्यौ, विघ्नहेतू सुखेषु तत् । तावेव नैव विद्येते, यतः खरविषाणवत् ॥ ३३४ ॥
स्नपनेनाङ्गरागेण, माल्यवस्त्रविभूषणैः । यदेकः पूज्यते ग्रावा, पुण्यं तेन व्यधायि किम् ? ॥ ३३५ ॥
अन्यस्य चोपरि ग्राव्ण, आसित्वा मूत्र्यते जनैः । क्रियते च पुरीषादि, पापं तेन व्यधायि किम्? ॥३३६॥
उत्पद्यन्ते विपद्यन्ते, कर्मणा यदि जन्तवः । उत्पद्यन्ते विपद्यन्ते, बुद्बुदाः केन कर्मणा ? ॥ ३३७ ॥
तदस्ति चेतनो यावत्, चेष्टयते तावदिच्छया । चेतनस्य विनष्टस्य, विद्यते न पुनर्भव ॥ ३३८ ॥
य एव म्रियते जन्तुः, स एवोत्पद्यते पुनः । इत्येतदपि वाङ्मात्रं, सर्वथाऽनुपपत्तितः ॥ ३३९ ॥
शिरीषकल्पे तत्तल्पे, रूपलावण्यचारुभिः । रमणीभिः समं स्वामी, रमतामविशङ्कितम् ॥ ३४० ॥
भोज्यान्यमृतरूपाणि, पेयानि च यथारुचि । स्वाद्यन्तां स्वामिना स्वैरं, स वैरी यो निषेधति ॥ ३४१ ॥

---

१ कुत्सितमन्नम् । *यत्र राज्याय मन्यते सता ॥ २ पौन पुन्येन विष्ठादिषु । ३ सीसकपिण्ड न । ४ शाम्यति । ५ समय पराक्रमः । ६ अमावास्यारात्रिः । † °रिवोत्पन्नमि° आ ॥ ७ अनवसरे वज्रपाततुल्यम् । ८ हस्तमध्यभाग "कोणी इति लोके । ९ गर्दभशृङ्गवत् । १० पाषाण. । ११ असिद्धित । १२ शिरीषकुसुमतुल्ये । १३ शय्यायाम्

कर्पूरागरुकस्तूरीचन्दनादिभिरांचितः[*] । एकसौरभ्य[1]निष्पन्न, इव तिष्ठ दिवानिशम् ॥ ३४२ ॥
उद्यानयानजगतीचित्रशालादिशालि यत् । तत्तत् क्षितीश ! प्रेक्षस्व, चक्षुःप्रीत्यै प्रतिक्षणम् ॥ ३४३ ॥
वेणुवीणामृदङ्गानुनादिभिर्गीतनिस्वनैः । दिवानिशं तव स्वामिन्नस्तु कर्ण[2]रसायनम् ॥ ३४४ ॥
यावज्जीवेत् सुखं जीवेत्, तावद् वैषयिकैः सुखैः । न ताम्येद् धर्मकार्याय, धर्माधर्मफलं क्व तत् ? ॥३४५॥
स्वयम्बुद्धस्ततोऽवादीन्नास्तिकैः स्वपराररिभिः । अन्धैरन्धा इवाकृष्य, पात्यन्ते धिगधो जनाः ॥३४६॥
स्वसंवेदनवेद्यो[3]ऽयमात्माऽस्ति सुखदुःखवित् । निषेधितुं बाधाभावाच्छक्यते न हि केनचित् ॥ ३४७ ॥
सुखितोऽहं दुःखितोऽहमिति कस्याऽपि जातुचित् । जायते प्रत्ययो[4] नैव, विनाऽऽत्मानमबाधितः ॥३४८॥
स्वशरीरे स्वसंवित्ते[5]रेवमात्मनि साधिते । अस्त्येव परकीयेऽपि, शरीरे सोऽनुमानतः ॥ ३४९ ॥
निश्चीयते शरीरेऽस्ति, परकीयेऽपि चेतनः । सर्वत्र बुद्धिपूर्वायाः, क्रियाया उपलम्भतः[6] ॥ ३५० ॥
य एव म्रियते जन्तुः, स एवोत्पद्यते पुनः । अस्त्येवं परलोकोऽपि, चेतनस्य न संशयः ॥ ३५१ ॥
यात्येकमेव चैतन्यं, जन्मतोऽन्यत्र जन्मनि । शैशवादिव तारुण्ये, तारुण्यादिव वार्द्धके ॥ ३५२ ॥
विना हि पूर्वचैतन्यानुवृत्तिं जातमात्रकः । अशिक्षितः कथं बालो, मुखमर्पयति स्तने ? ॥ ३५३ ॥
अचेतनेभ्यो भूतेभ्यश्चेतनो जायते कथम् ? । कारणस्याऽनुरूपं हि, कार्यं जगति दृश्यते ॥ ३५४ ॥
प्रत्येकं युगपद् वा स्याद्, भूतेभ्यश्चेतनो ननु । आद्यः पक्षो यदि तदा, तावन्तश्चेतना न किम् ? ॥३५५॥
अथ द्वितीयः पक्षः स्यात्, तदा भिन्नस्वभावकैः । भूतैरेकस्वभावोऽयं, जन्यते चेतनः कथम् ? ॥ ३५६ ॥
रूपगन्धरसस्पर्शगुणा तावद् वसुन्धरा । प्रत्यक्षमेतदापोऽपि, रूपस्पर्शरसात्मिकाः ॥ ३५७ ॥
रूपस्पर्शगुणं तेज, एकस्पर्शगुणो मरुत् । अमीषामेवमाबालं, व्यक्ता भिन्नस्वभावता ॥ ३५८ ॥
तोयादिभ्यो विसदृशां, मुक्तानां जन्मदर्शनात् । भूतेभ्योऽचेतनेभ्योऽपि, चेतनः सम्भवीति चेत् ॥३५९॥
तन्न युक्तं यतस्तोयं, मौक्तिकादिषु दृश्यते । एकं पौद्गलिकं रूपं, वैसदृश्यं ततः कथम् ? ॥ ३६० ॥
किञ्च पिष्टोदकादिभ्यो, मदशक्तिरचेतना । अचेतनेभ्यो जातेति, दृष्टान्तश्चेतने कथम् ? ॥ ३६१ ॥
न च देहात्मनोरैक्यमिति वाच्यं कदाचन । यद्देहे तदवस्थेऽपि, चेतनो नोपलभ्यते ॥ ३६२ ॥
यच्चैकः पूज्यते ग्रावा, मूत्राद्यैर्लिप्यतेऽपरः । तदसत् सुखदुःखादि, कुतस्त्यमपचेतने ? ॥ ३६३ ॥
ततो देहाद् विभिन्नोऽयमात्माऽस्ति परलोकवान् । विद्यते परलोकोऽपि, धर्माधर्मनिबन्धनम् ॥ ३६४ ।
अङ्गनालिङ्गनादग्नितापादिव समन्ततः । विलीयते मनुष्याणां, विवेको नवनीतवत् ॥ ३६५ ॥
निरर्गलं बहुरसांस्तांस्तानाहारपुद्गलान् । भुञ्जानो नैव जानाति, मत्तः पशुरिवोचितम् ॥ ३६६ ॥
चन्दनागरु-कस्तूरी-घनसारादिगन्धतः । आक्रामति नरं सद्यो, दन्दशूक इव स्मरः ॥ ३६७ ॥
पुमान् रामादिरूपेषु, विलग्नेनेह चक्षुषा । वृतिलग्नोपसंव्यानाञ्चलेनेव स्खलत्यहो ! ॥ ३६८ ॥
मुहूर्त्तसुखदानेन, मोहयन्ती मुहुर्मुहुः । धूर्त्तमैत्रीव सङ्गीतिः, कुशलाय न सर्वथा ॥ ३६९ ॥
तत्पापस्यैकसुहृदो[†], धर्मस्यैकविरोधिनः । नरकस्याकृष्टिपाशान्, विषयान् मुञ्च दूरतः ॥ ३७० ॥
यत् प्रेष्य एको भवति, स्वामी भवति चाऽपरः । एकः प्रार्थयते भिक्षामपरश्च प्रयच्छति ॥ ३७१ ॥
वाहनं च भवत्येकस्तमन्यश्चाधिरोहति । अभयं याचते चैको, द्वितीयस्तु ददाति तत् ॥ ३७२ ॥
इत्यादि[‡] सम्यगेवेह, धर्माधर्मफलं महत् । पश्यन्नपि न मन्येत, यस्तस्मै स्वस्ति धीमते ! ॥ ३७३ ॥
तदसद्वागिवाऽधर्मो[§], हेयो दुःखनिबन्धनम् । स्वामिन् ! सद्वागिवादेयो, धर्मः शर्मैककारणम् ॥ ३७४ ॥
ऊचे ततः शतमतिर्नात्मा कश्चिदिहाऽपरः । पदार्थविषयज्ञानात्, प्रतिक्षणविभङ्गुरात् ॥ ३७५ ॥

---

* °भिरार्चितः सं १, आ ॥ १ सौगन्ध्योत्पन्न । २ कर्णामृतम् । ३ स्वानुभववेद्यः । ४ विश्वास । ५ स्वानुभवात् । ६ प्राप्तेः । † तत्पाकस्यै° सं १ ॥ ‡ अयं श्लोकः सं १ पुस्तके न दृश्यते ॥ § असज्जनोक्तिवत् पापो, हेयो° सं १ ॥

यद्वस्तुषु स्थिरत्वे धीर्वासना तत्र कारणम् । पूर्वापरक्षणानां तदेकत्वं वास्तवं न तु ॥ ३७६ ॥
अथोवाच स्वयम्बुद्धो, वस्तु नास्ति निरन्वयम् । अम्भस्तृणादि हि गवां, हन्त ! दुग्धाय कल्पते ॥३७७॥
आकाशपुष्पवत् कूर्मरोमवच्च निरन्वयम् । नैव वस्तु भवत्यत्र, तद् वृथा क्षणभङ्गधीः ॥ ३७८ ॥
वस्तु चेत् क्षणविध्वंसि, सन्तानः क्षणिको न किम् ? । सन्तानस्य च नित्यत्वे, समस्तं क्षणिकं कुतः ? ॥३७९॥
सर्वभावेष्वनित्यत्वे, निहितप्रतिमार्गणम् । स्मरणं प्रत्यभिज्ञा च, कथं नामोपपद्यते ? ॥ ३८० ॥
जन्मानन्तरनाशित्वे, द्वितीयक्षणसम्भवी । पित्रोर्न पुत्रः पितरौ, न पुत्रस्येत्यसङ्गतिः ॥ ३८१ ॥
विवाहसमयादूर्ध्वं, जम्पत्योः क्षणनाशिनोः । न जायायाः पतिः पत्युर्न जायेत्यसमञ्जसम् ॥ ३८२ ॥
इह कृत्वाऽशुभं कर्म, स नाऽमुत्राऽश्नुते फलम् । भुङ्क्तेऽन्यः किन्तु तदिति, कृतनाशाऽकृतागमौ ॥३८३॥
तुर्योऽप्युवाच मायाऽसौ, तत्त्वतो नाऽस्ति किञ्चन । दृश्यमानमपि स्वप्न-मृगतृष्णादिसन्निभम् ॥ ३८४ ॥
गुरुः शिष्यः पिता पुत्रो, धर्मोऽधर्मो निजः परः । इत्यादि दृश्यते यत् स, व्यवहारो न तात्त्विकम् ॥३८५॥
विहाय जम्बुको मांसं, तीरे मीनाय धावितः । मीनोऽथ प्राविशत् तोये, मांसं गृध्रोऽहरद् यथा ॥३८६॥
तथैहिकसुखं हित्वा, परलोकाय धाविताः । आत्मानमुभयभ्रष्टा, वञ्चयन्ते हि ते नराः ॥ ३८७ ॥
पाखण्डिनामलीकाज्ञां, श्रुत्वा नरकभीरवः । दण्डयन्ति निजं देहमहो ! मोहाद् व्रतादिना ॥ ३८८ ॥
यथा क्ष्मापातशङ्केकाङ्क्षिणा नृत्यति लावकः । तथाऽभिशङ्क्य नरकपातं जन्तुस्तपस्यति ॥ ३८९ ॥
स्वयम्बुद्धोऽब्रवीद् वस्तु,न सच्चेदर्थकृत् कथम् ? । माया चेदीदृशी तर्हि, स्वप्नेभः किं न कार्यकृत् ?॥३९०॥
कार्यकारणभावं चेद्, वस्तूनां पारमार्थिकम् । न मन्यसे तदा किं त्वं, बिभेषि पततोऽशनेः ? ॥ ३९१ ॥
एवं सति न त्वं नाऽहं, न वाच्यं न च वाचकः । तदेष्टप्रतिपत्तिः स्याद्, व्यवहारकरी कथम् ? ॥३९२॥
वितण्डापण्डितैरेभिः, स्वयं विषयगृध्नुभिः । देव ! प्रतार्यसे नित्यं, शुभोदर्कपराङ्मुखैः ॥ ३९३ ॥
ततो विवेकमालम्ब्य, विषयांस्त्यज दूरतः । धर्ममेवाश्रय स्वामिन्नत्राऽमुत्र च शर्मणे ॥ ३९४ ॥
अथ राजाऽब्रवीदेवं, प्रसादसुभगाननः । स्वयम्बुद्ध ! महाबुद्धे !, साधु साधूक्तवानदः ॥ ३९५ ॥
युक्तं धर्म उपादेयो, न धर्मद्वेषिणो वयम् । उपादीयेत कालेऽसौ, मन्त्रास्त्रमिव सङ्गरे ॥ ३९६ ॥
चिरादभ्यागतं मित्रमिव को नाम यौवनम् । उपेक्षेत तदुचितां, प्रतिपत्तिमकल्पयन् ? ॥ ३९७ ॥
धर्मोपदेशस्तदयं, त्वयाऽनवसरे कृतः । वीणायां वाद्यमानायां, वेदोद्गारो न राजते ॥ ३९८ ॥
परलोको हि धर्मस्य, फलं सन्दिग्धमेव तत् । तदैहिकसुखास्वादमकाण्डे किं निषेधसि ? ॥ ३९९ ॥
अथ विज्ञपयामास, स्वयम्बुद्धः कृताञ्जलिः । आवश्यके धर्मफले, मा शङ्किष्ठाः कदाचन ॥४००॥
किं न स्मरसि बालत्वे, यदावां नन्दने वने । अपश्याव गतावेकं, कान्तिरूपधरं सुरम् ? ॥ ४०१ ॥
सप्रसादो जगादैवं, स देवस्त्वां तदा नृप ! । अहं ह्यतिबलो नाम, भवतोऽस्मि पितामहः ॥ ४०२ ॥
क्रूरमित्रादिवोद्विग्नोऽमुष्माद् वैषयिकात् सुखात् । राज्यं तृणमिव त्यक्त्वा, त्रिरत्नीमहमाश्रयम् ॥ ४०३ ॥
व्रतप्रासादकलसः, संन्यासोऽन्तक्षणे मया । गृहीतस्तत्प्रभावेण, जातोऽहं लान्तकाधिपः ॥ ४०४ ॥
प्रमद्वरेण न स्थेयं, तत् त्वयाऽपीत्युदीर्य च । विद्योतितवियद्विद्युदिव सोऽथ तिरोदधे ॥ ४०५ ॥
मन्यस्व परलोकं तद्, वचः पैतामहं स्मरन् । प्रत्यक्षेऽपि प्रमाणे किं, प्रमाणान्तरकल्पना ? ॥ ४०६ ॥
राजाऽप्यूचे स्मारितोऽसि, साधु पैतामहं वचः । परलोकमहं मन्ये, धर्माधर्मनिबन्धनम् ॥ ४०७ ॥
मिथ्यादृग्वाक्पांशुपुञ्जजलदः सोऽथ मन्त्रिराट् । लब्धावकाशः सानन्दमिति वक्तुं प्रचक्रमे ॥ ४०८ ॥
तव वंशेऽभवत् पूर्वं, कुरुचन्द्रो नरेश्वरः । जाया कुरुमती तस्य, हरिचन्द्रश्च नन्दनः ॥ ४०९ ॥

---

१ निःसन्तानम् । २ न्यासीकृतस्य प्रतियाचनम् । ३ असत्याज्ञाम् । ४ पक्षिविशेष । ५ विषयलोलुपैः । ६ शुभोत्तरकाल-विमुखैः । * °वाजेय स्वा° सं १ ॥ ७ युद्धे । ८ ज्ञानदर्शनचारित्ररूपाम् । ९ प्रमादिना । १० प्रकाशिताकाशः । * हरिश्चन्द्र सं १,२॥

नृपतिः स तु [1]कौलोऽभून्महारम्भपरिग्रहः । धुर्योऽनार्येषु कार्येषु, निर्दयश्च कृतान्तवत् ॥ ४१० ॥
दुराचारोऽपि रौद्रोऽपि, स राज्यं बुभुजे चिरम् । पूर्वोपार्जितपुण्यानां, फलमप्रतिघं[*] खलु ॥ ४११ ॥
तस्यावसानसमये, जज्ञे धातुविपर्ययः । आसन्ननरकक्लेशवर्णिकामात्रसन्निभः ॥ ४१२ ॥
आसीत् कण्टकशय्येव, तूलशय्याऽस्य दुःखदा । निम्बवद् विरसान्यासन्, भोज्यानि सुरसान्यपि ॥४१३॥
चन्दनागरुकर्पूरकस्तूर्यः पूर्तयो[2]ऽभवन् । शत्रुवत् पुत्रमित्राद्या, दृशोरुद्वेगहेतवः ॥ ४१४ ॥
कर्णक्लेशाय गीतानि, बभूवुः क्रोष्टुनादवत् । पुण्यच्छेदेऽथवा सर्वं, प्रयाति विपरीतताम् ॥ ४१५ ॥
सुखेतरैस्तं विषयोपचारै रतिदैः क्षणम् । कुरुमतीहरि[†]चन्द्रौ, प्रच्छन्नं प्रत्यजागृताम् ॥ ४१६ ॥
चुम्ब्यमान इवाङ्गारैः, प्रत्यङ्गं दाहविह्वलः । रौद्रध्यानपरः प्रापदवसानं स भूपतिः ॥ ४१७ ॥
तस्यौर्ध्वदेहिकं कृत्वा, हरि[‡]चन्द्रस्तदात्मजः । अशिषद् विधिवद् राज्यं, सदाचारपथाध्वगः[§] ॥ ४१८ ॥
सोऽत्रापि दृष्ट्वाऽघफलं, दृष्ट्वा तन्मरणं पितुः । धर्ममेव पुमर्थेषु, तुष्टावार्कं ग्रहेष्विव ॥ ४१९ ॥
सुबुद्धिं बालसुहृदं, श्रावकं सोऽन्यदाऽऽदिशत् । धर्मविद्भ्योऽन्वहं धर्मः, श्रुत्वा शंस्यस्त्वया मम ॥ ४२० ॥
सुबुद्धिर्विदधे नित्यं, तत्तथाऽत्यन्ततत्परः । अनुकूलनिदेशो हि, सतामुत्साहकारणम् ॥ ४२१ ॥
प्रत्यहं हरि[¶]चन्द्रोऽपि, धर्मं तत्कथितं भृशम् । श्रद्दधे पापभीतः सन्, रोगभीत इवौषधम् ॥ ४२२ ॥
अन्यदा बहिरुद्याने, शीलन्धरमहामुनेः । उत्पन्ने केवलज्ञानेऽभीयुर्देवास्तमर्चितुम् ॥ ४२३ ॥
सुबुद्धिनैवं कथिते, श्रद्धोल्लिखितमानसः, । स राजा तुरगारूढस्तं मुनीन्द्रमुपाययौ ॥ ४२४ ॥
नमस्कृत्योपविष्टे च, तस्मिन् राज्ञि महामुनिः । विदधे कुमतध्वान्तकौमुदीं[3] धर्मदेशनाम् ॥ ४२५ ॥
देशनान्ते स भूपालस्तं पप्रच्छ कृताञ्जलिः । स्वामिन् ! मम पिता मृत्वा, कां गतिं प्रत्यपद्यत ? ॥४२६॥
उवाच सोऽथ भगवान्, महाराज ! पिता तव । सप्तमं नरकं प्राप, स्थानं नान्यत्र तादृशाम् ॥ ४२७ ॥
तदाकर्ण्य समुद्भूतसंवेगः[4] स महीपतिः । वन्दित्वा मुनिमुत्थाय, ययौ निजनिकेतने ॥ ४२८ ॥
राज्यं सूनोः सोऽर्पयित्वा, सुबुद्धिमिदमभ्यधात् । प्रव्रजिष्याम्यहं धर्मं, मयीवाऽस्मिन् सदा दिशेः ॥४२९॥
सोऽप्यूचे प्रव्रजिष्यामि, भवन्तमनु भूपते ! । त्वत्सुते मत्सुतो धर्मं, वक्ष्यत्यहमिव त्वयि ॥ ४३० ॥
[5]कर्माद्रिभेदकुलिशं, व्रतं तौ राजमन्त्रिणौ । आददाते सुचिरं च, पालयित्वेयतुः शिवम् ॥ ४३१ ॥
युष्मद्वंशेऽपरश्चासीद्, दण्डको नाम पार्थिवः । प्रचण्डशासनो दण्डधरः साक्षादिवाऽरिषु ॥ ४३२ ॥
बभूव तनयस्तस्य, मणिमालीति विश्रुतः । अंशुमालीव तेजोभिरभिव्याप्तदिगन्तरः ॥ ४३३ ॥
पुत्रमित्रकलत्रेषु, रत्नस्वर्णधनेषु च । प्राणेभ्योऽप्यत्यभीष्टेषु, मूर्च्छावान् दण्डकोऽभवत् ॥ ४३४ ॥
आर्त्तध्यानपरः कालाद्, दण्डकः प्राप पञ्चताम् । भाण्डागारे निजे सोऽजगरोऽजायत दुर्गरः ॥ ४३५ ॥
तत्रागारे प्रविवेश, यो यस्तं तं स जग्रसे । दारुणात्मा सर्वभक्षी, हुताशन इवोद्यतः ॥ ४३६ ॥
अन्यदा ददृशे तेन, मणिमाली गृहं विशन् । प्राग्जन्मस्मरणाच्चात्मसूनुरित्युपलक्षितः ॥ ४३७ ॥
प्रशान्तां दर्शयन्मूर्तिं, सस्नेहो मूर्तिमानिव । प्राग्जन्मबन्धुर्नः कोऽपीत्यज्ञायि मणिमालिना ॥ ४३८ ॥
मुनीनां ज्ञानिनां पार्श्वाज्ज्ञात्वा तं पितरं निजम् । उपविश्य पुरस्तस्य, जैनं धर्मं शशंस सः ॥ ४३९ ॥
सोऽवबुध्यार्हतं धर्मं, संन्यासं[6] प्रत्यपद्यत । शुभध्यानपरो मृत्वा, देवभूय[7]मियाय च ॥ ४४० ॥
पुत्रप्रेम्णा दिवोऽभ्येत्य, स हारं मणिमालिने । दिव्यमुक्तामयमदात्, सोऽयमद्यापि ते हृदि ॥ ४४१ ॥
हरिचन्द्रान्वयेऽभूस्त्वं, सुबुद्धेरन्वये त्वहम् । क्रमागतात्मभावेन, ततो धर्मे प्रवर्त्यसे ॥ ४४२ ॥

---

१ शाक्तः । * °प्रतिमं ख° खं, सं २ ॥ २ दुर्गन्धमध्यः । † °रिश्चन्द्रौ स १, २ ॥ ‡ °रिश्चन्द्र° सं १, २ ॥ § °पथानुगः सं २ ॥ ¶ °रिश्चन्द्रो° सं १, २ ॥ ३ कुमतान्धकारचन्द्रिकाम् । ४ सम्प्राप्तवैराग्य. । ५ कर्मरूपपर्वतविदारणे वज्रम् । ६ त्यागम् । ७ देवत्वम् ।

यद्विज्ञसमकाण्डे तु, श्रूयतां तत्र कारणम् । यदद्य नन्दनेऽद्राक्षं, चारणश्रमणावहम् ॥ ४४३ ॥
जगत्प्रकाशजनकौ, महामोहतमच्छिदौ । एकत्र मिलितौ साक्षात्, सूर्याचन्द्रमसाविव ॥ ४४४ ॥
कुर्वन्तौ देशनां तत्र, ज्ञानातिशयशालिनौ । तौ मया समये पृष्टौ, प्रमाणं भवदायुषः ॥ ४४५ ॥
ताभ्यां तु भवतो मासमात्रमायुर्निवेदितम् । अतस्त्वां त्वरयाम्यद्य, धर्मायैव महामते ! ॥ ४४६ ॥
महाबलोऽथाऽभिदधे, स्वयम्बुद्ध ! धियांनिधे ! । त्वमेवैकोऽसि मे बन्धुर्यन्मत्कार्याय ताम्यसि ॥४४७॥
आक्रम्यमाणं विषयैर्निद्रालुं मोहनिद्रया । मामजागरयः साधु, शाधि किं साधयाम्यतः ? ॥ ४४८ ॥
आयुष्यल्पेऽधुना धर्मः, साधनीयः कियान् मया ? । कीदृशं कूपखननं, सद्यो लग्ने प्रदीपने ॥ ४४९ ॥
स्वयम्बुद्धोऽप्युवाचैवं, मा विषीद दृढीभव । परलोकैकसुहृदं, यतिधर्मं समाश्रय ॥ ४५० ॥
अप्येकं दिवसं जीवः, परिव्रज्यामुपेयिवान् । अपवर्गमपि प्राप्नोत्येव स्वर्गस्य का कथा ? ॥ ४५१ ॥
आमेत्युदित्वा स्वसुतं, स्वे पदे प्रत्यतिष्ठिपत् । महाबलस्तदाचार्यः, प्रासादे प्रतिमामिव ॥ ४५२ ॥
दीनाऽनाथजनेभ्योऽथ, दयादानमदत्त सः । तथा यथा न कोऽप्यासीद्, याञ्चादीनो जनः पुनः ॥४५३॥
विचित्रवस्त्रमाणिक्यसुवर्णकुसुमादिभिः । स चक्रेऽष्टाह्निकां सर्वचैत्येष्विन्द्र इवाऽपरः ॥ ४५४ ॥
ततश्च क्षमयित्वा स्वजनं परिजनं तथा । दीक्षां मुनीन्द्रपादान्तेऽग्रहीन्मोक्षश्रियः सखीम् ॥ ४५५ ॥
सर्वसावद्ययोगानां, विरत्या सममेव सः । चक्रे चतुर्विधाहारप्रत्याख्यानं महामनाः ॥ ४५६ ॥
असौ समाधिपीयूषह्रदमग्नो निरन्तरम् । अम्भोजिनीखण्ड इव, न हि म्लौ मनागपि ॥ ४५७ ॥
भुञ्जान इव भोज्यानि, पेयान्यपि पिबन्निव । सोऽक्षीणकान्तिरभवन्महासत्त्वशिरोमणिः ॥ ४५८ ॥
समाहितः स्मरन् पञ्चपरमेष्ठिनमस्क्रियाम् । द्वाविंशतिदिनान् कृत्वाऽनशनं स व्यपद्यत ॥ ४५९ ॥
स स्वयं सम्भृतैः पुण्यैर्दिव्यैरिव तुरङ्गमैः । ऐशानकल्पं तत्कालमाससाद दुरासदम् ॥ ४६० ॥
विमाने श्रीप्रभेऽथोपपादे शयनसम्पुटे । विद्युत्पुञ्ज इवाऽम्भोदगर्भे समुदपादि सः ॥ ४६१ ॥
दिव्याकृतिः सुसंस्थानः, सप्तधातूज्झिताङ्गकः । शिरीषसुकुमाराङ्गः, कान्तिक्रान्तदिगन्तरः ॥ ४६२ ॥
वज्रकायो महोत्साहः, पुण्यलक्षणलक्षितः । कामरूपोऽवधिज्ञानी, सर्वविज्ञानपारगः ॥ ४६३ ॥
अणिमादिगुणोपेतो, निर्दोषोऽचिन्त्यवैभवः । ललिताङ्ग इति ख्यातः, स यथार्थाभिधोऽभवत् ॥ ४६४ ॥
पादयो रत्नकटके, कटिसूत्रं कटीतटे । हस्तयोः कङ्कणद्वन्द्वं, भुजयोरङ्गदद्वयम् ॥ ४६५ ॥
वक्षःस्थले हारयष्टिः, कण्ठे ग्रैवेयकं तथा । कुण्डले कर्णलतयोः, स्रक्किरीटौ च मूर्धनि ॥ ४६६ ॥
इत्यादिभूषणग्रामो, दिव्यानि वसनानि च । सर्वाङ्गभूषणं तस्य, यौवनं च महाऽभवत् ॥ ४६७ ॥
[ त्रिभिर्विशेषकम् ]
ननाद नादयन्नाशाः, प्रतिनादेन दुन्दुभिः । पेठुर्जय जगन्नन्देत्यादि मङ्गलपाठकाः ॥ ४६८ ॥
गीतवादित्रनिर्घोषवन्दिकोलाहलाकुलम् । तद्विमानं जगर्जेव, नाथागमभुवा मुदा ॥ ४६९ ॥
सोऽथ सुप्तोत्थित इव, पश्यन्नेवं व्यतर्कयत् । किमिन्द्रजालं ? किं स्वप्नः ?, किं माया ? किमिवैतदम् ? ॥४७०॥
किमेतद् गीतनृत्तादि, मामुद्दिश्य प्रवर्तते ? ! अयं लोको विनीतः किं, मह्यं नाथाय तिष्ठते ? ॥ ४७१ ॥
इदं श्रीमदिदं रम्यमिदं सेव्यमिदं प्रियम् । इदमानन्दसदनं, सद्म किमिदमात्मदम् ? ॥ ४७२ ॥
स्फूर्जद्वितर्कसम्पर्कं, तमकर्कशया गिरा । इति विज्ञपयामास, प्रतीहारः कृताञ्जलिः ॥ ४७३ ॥
अद्य नाथ ! वयं धन्याः, सनाथाः स्वामिना त्वया । कुरु प्रसादं नम्रेषु, पीयूषसदृशा दृशा ॥ ४७४ ॥

---

१ शिक्षय । २ अंसौ । ‡ दाभिश्च. स १ ॥ † चक्रे सर्वचैत्येषु, पूजां शक्र इवापरः आ । ३ सर्वसदोषयोगानाम् । ‡ आत्मारामसना प्राप. मासान्ते सोऽथ पञ्चताम् आ ॥ ४ ग्रीवाभरणम् । ५ स्वामिसमागमजनितया । ६ स्फुरद्विकल्पसम्पर्कम् । ७ कोमलया ।

स्वामिन्नैशानकल्पोऽयं, यथासङ्कल्पितप्रदः । अनल्पानश्वरश्रीकः, सदा सुखनिकेतनम् ॥ ४७५ ॥
अमुष्मिन् देवलोके च, त्वया पुण्यैरुपार्जितम् । विमानं श्रीप्रभमिदं, साध्वलङ्कुरुषेऽधुना ॥ ४७६ ॥
त्वत्सभामण्डनममी, तव सामानिकाः सुराः । एकोऽप्यनेक इव यैर्विमानेऽस्मिंस्त्वमीक्ष्यसे ॥ ४७७ ॥
त्रायस्त्रिंशा अमी स्वामिन् !, पुरोधोमन्त्रितास्पदम् । त्वदादेशमपेक्षन्ते, यथासमयमादिशेः ॥ ४७८ ॥
पारिषद्याः सुराश्चैते, नर्मसाचिव्यकारिणः । लीलाविलासगोष्ठीषु, रमयिष्यन्ति ते मनः ॥ ४७९ ॥
सदा संवर्मितास्तीक्ष्णषट्त्रिंशच्छस्त्रधारिणः । स्वामिरक्षामहादक्षाश्चात्मरक्षा अमी तव ॥ ४८० ॥
लोकपाला अमी च त्वत्पुररक्षाधिकारिणः । अनीकपतयश्चैते, त्वदनीकधुरन्धराः ॥ ४८१ ॥
पौरजानपदप्रायाः, प्रकीर्णकसुरा इमे । देव ! त्वदाज्ञानिर्माल्यं, धारयिष्यन्ति मूर्धनि ॥ ४८२ ॥
दास्ययोग्याश्चाभियोग्याः, सेवन्ते त्वामितस्त्वमी । सुराः किल्बिषिकाश्चैते, म्लेच्छकर्मकृतस्तव ॥ ४८३ ॥
तवैते रम्यरमणीरमणीयतराङ्गणाः । मनःप्रसादजननाः, प्रासादा रत्ननिर्मिताः ॥ ४८४ ॥
अमूर्वाप्यो रत्नमय्यः, सौवर्णकमलाकराः । तवा[3]क्रीडनगाश्चैते, रत्नकाञ्चनसानवः ॥ ४८५ ॥
एताः स्वच्छजलाः क्रीडानद्यः सद्यः प्रमोददाः । क्रीडोद्यानानि चैतानि, नित्यपुष्पफलानि ते ॥ ४८६ ॥
सदःसदनमेतत् ते, स्वर्णमाणिक्यनिर्मितम् । आदित्यमण्डलमिव, द्युतिद्योतितदिङ्मुखम् ॥ ४८७ ॥
एताश्च चामरादर्शतालवृन्तांकपाणयः । सर्ववारं वारनार्यस्त्वत्सेवैकमहोत्सवाः ॥ ४८८ ॥
अयं चतुर्विधातोद्यचतुरः पुरतस्तव । गन्धर्ववर्गः सङ्गीतकृते सज्जोऽवतिष्ठते ॥ ४८९ ॥
दत्तोपयोगस्तत्कालमवधिज्ञानतस्ततः । स दिनं ह्यस्तनमिव, पूर्वजन्मैवमस्मरत् ॥ ४९० ॥
विद्याधरपतिः सोऽहं, स्वयम्बुद्धेन मन्त्रिणा । धर्ममित्रेण जैनेन्द्रं, धर्ममस्मि विबोधितः ॥ ४९१ ॥
प्रव्रज्यां प्रतिपन्नोऽहं, तदैवाऽनशनं व्यधाम् । आसदं तत्फलमिदमहो ! धर्मस्य वैभवम् ॥ ४९२ ॥
इति स्मृत्वा समुत्थाय, दत्तबाहुः स वेत्रिणा । सिंहासनमलञ्चक्रे, स्फूर्जज्जयजयध्वनिः ॥ ४९३ ॥
ततोऽभिषिषिचे देवैरवीज्यत च चामरैः । अगीयत च गन्धर्वैः, कलमङ्गलगीतिभिः ॥ ४९४ ॥
समुत्थाय ततोऽप्येष, भक्तिभावितमानसः । गत्वा चैत्येऽर्हत्प्रतिमाः, पूजयामास शाश्वतीः ॥ ४९५ ॥
देवैर्ग्रामत्रयोद्गारमधुरे गीतमङ्गले । क्रियमाणे जिनाधीशं, सोऽस्तावीद् विविधैः स्तवैः ॥ ४९६ ॥
ततोऽसौ वाचयामास, पुस्तकान् ज्ञानदीपकान् । आनर्च माणवस्तम्भस्थितान्यस्थीनि चाऽर्हताम् ॥ ४९७ ॥
अथ दिव्यातपत्रेण, पार्वणेन्दुसनाभिना । भ्राजिष्णुर्धार्यमाणेन, स लीलासदनं ययौ ॥ ४९८ ॥
नितान्तसुकुमाराङ्घ्रिपाणिनेत्राननच्छलात् । लावण्यसिन्धुमध्यस्थारविन्दवनिकामिव ॥ ४९९ ॥
आनुपूर्व्येण पृथुलौ, वृत्तावूरू च बिभ्रतीं । न्यासीकृताविव निजौ, तूणीरौ पुष्पधन्वना ॥ ५०० ॥
राजमानां नितम्बेन, विपुलेनाऽच्छवाससा । कलहंसकुलालीढपुलिनेनेव निम्नगाम् ॥ ५०१ ॥
राजन्तीमुदरेणाऽतिक्षामेण पविमध्यवत् । पीनोन्नतकुचद्वन्द्वभारप्रोद्वहनादिव ॥ ५०२ ॥
भान्तीं रेखात्रयाङ्केण, कण्ठेन कलनादिना । कम्बुनेव स्मरनृपस्योच्चैर्विजयशंसिना ॥ ५०३ ॥
अधरीकृतबिम्बाभ्यामधराभ्यां चकासतीम् । नासया नेत्रनलिननाललीलाजुषाऽपि च ॥ ५०४ ॥
अर्द्धीकृतपार्वणेन्दुलक्ष्मीसर्वस्वहारिणा । हारिणा चित्तहरणीं, स्निग्धगण्डालिकेन च ॥ ५०५ ॥
कर्णौ रतिपतेः क्रीडादोलालीलामलिम्लुचौ । भ्रूयुगं च स्मरधनुर्यष्टिश्रीहारि बिभ्रतीम् ॥ ५०६ ॥
शोभमानां [12]कबर्या च, स्निग्धकज्जलकान्तया । वदनाम्भोरुहस्याऽनुसारिण्येवाऽलिमालया ॥ ५०७ ॥
[13]सर्वाङ्गीणं च विन्यस्तरत्नाभरणसम्पदा । जङ्गमीभावभाक्कल्पलताविभ्रमहारिणीम् ॥ ५०८ ॥

---

१ पुरोहितमन्त्रित्वस्थानम् । २ कवचिन । ३ क्रीडापर्वता । ४ सभागृहम् । ५ व्यजनम् । ६ वेश्याः । ७ मधुरमङ्गलगीतैः । ८ पूर्णिमाचन्द्रतुल्येन । ९ इषुधी । १० वज्रमध्यवत् । ११ मनोहरेण । १२ केशपाशेन । १ सर्वाङ्गेषु ।

मनोज्ञसुखपद्माभिरप्सरोभिः सहस्रशः । परितः परिकरितां, सरिद्भिरिव जाह्नवीम् ॥ ५०९ ॥
देवीं स्वयम्प्रभां नाम, प्रभाभग्नाचिरप्रभाम् । प्रभूतप्रमदस्तत्र, ददर्श श्रीप्रभप्रभुः ॥ ५१० ॥
[ द्वादशभिः कुलकम् ]
कृताभ्युत्थानया दूरात्, स्नेहातिशययुक्तया । तया सहैकपर्यङ्के, निषसादाऽमराग्रणीः ॥ ५११ ॥
एकत्र च निषण्णौ तौ, चकासामासतुर्भृशम् । एकालवालमध्यस्थौ, लताविटपिनाविव ॥ ५१२ ॥
परस्परमभूच्चेतस्तयोर्लीनं निरन्तरम् । निर्गडेनेव रागेण, निबिडेन नियन्त्रितम् ॥ ५१३ ॥
रममाणस्तया सार्द्धमच्छिन्नप्रेमसौरभः । गमयामास भूयांसं, कालमेकां कलामिव ॥ ५१४ ॥
दलं वृक्षादिव दिवस्ततोऽच्योष्ट स्वयम्प्रभा । आयुःकर्मणि हि क्षीणे, नेन्द्रोऽपि स्थातुमीश्वरः ॥५१५॥
आक्रान्तः पर्वतेनेव, कुलिशेनेव ताडितः । प्रियाच्यवनदुःखेन, ललिताङ्गोऽथ मूर्च्छितः ॥ ५१६ ॥
लब्धसंज्ञः क्षणेनाऽथ, विललाप मुहुर्मुहुः । विमानं श्रीप्रभमपि, प्रतिशब्दैर्विलापयन् ॥ ५१७ ॥
प्राप नोपवने प्रीतिं, न वाप्यामपि निर्ववौ । क्रीडाशैलेऽपि न स्वस्थानानन्दन्नन्दनेऽपि सः ॥ ५१८ ॥
हा प्रिये ! हा प्रिये ! क्काऽसि, क्काऽसीति विलपन्नसौ । स्वयम्प्रभामयं विश्वं, पश्यन् बभ्राम सर्वतः ॥५१९॥
इतश्च स्वामिमरणोत्पन्नवैराग्यवासनः । स्वयम्बुद्धोऽप्यात्तदीक्षः, श्रीसिद्धाचार्यसन्निधौ ॥ ५२० ॥
सुचिरं निरतीचारं, पालयित्वा व्रतं सुधीः । ऐशाने दृढधर्माख्य, इन्द्रसामानिकोऽभवत् ॥ ५२१ ॥
[ सन्दानितकम् ]
स पूर्वभवसम्बन्धाद्, बन्धुवत् प्रेमबन्धुरः । आश्वासयितुमित्यूचे, ललिताङ्गमुदारधीः ॥ ५२२ ॥
किं मुह्यसि महासत्त्व !, महिलामात्रहेतवे ? । धीराः प्राणावसानेऽपि, न हि यान्तीदृशीं दशाम् ॥ ५२३ ॥
ललिताङ्गोऽप्युवाचेति, बन्धो ! किमिदमुच्यते ? । प्राणान्तः सुसहः कान्ताविरहस्तु सुदुःसहः ॥५२४॥
एकैव ननु संसारे, सारं सारङ्गलोचना । यां विना नूनमीदृश्योऽप्यसाराः सर्वसम्पदः ॥ ५२५ ॥
तद्दुःखदुःखितः सोऽपीशानसामानिकः सुरः । दत्त्वोपयोगमवधिज्ञानाज्ज्ञात्वाऽब्रवीदिति ॥ ५२६ ॥
मा विषीद महाभाग !, भव स्वस्थोऽधुना ननु । मया मृगयमाणेन, प्राप्ताऽस्ति भवतः प्रिया ॥ ५२७ ॥
पृथिव्यां धातकीखण्डे, प्राग्विदेहेषु विद्यते । नन्दिग्रामे गृहपतिर्नागिलो नाम दुर्गतः ॥५२८॥
पूरणायोदरस्याऽपि, भ्रमन् प्रेत इवाऽन्वहम् । क्षुधितस्तृषितः शेते, चोत्तिष्ठति च तादृशः ॥ ५२९ ॥
दारिद्र्यस्य बुभुक्षेव, तस्याऽस्ति सहचारिणी । नागश्रीरित्यभिधया, मन्दभाग्यशिरोमणिः ॥ ५३० ॥
उपर्युपरि कन्याः षद्, कन्यास्तत्राऽस्य जज्ञिरे । पामनस्येव पिटका, अधोऽधः पिटकं तनौ ॥ ५३१ ॥
प्रकृत्या बहुभक्षिण्यः, कुरूपा विश्वगर्हिताः । बभूवुस्तास्तयोः पुत्र्यो, ग्रामशूकरयोरिव ॥ ५३२ ॥
आपन्नसत्त्वा पत्न्यासीत्, पुनरप्यस्य कालतः । प्रायेण हि दरिद्राणां, शीघ्रगर्भभृतः स्त्रियः ॥ ५३३ ॥
सोऽथैतच्चिन्तयामास, कस्येदं कर्मणः फलम् ? । यदहं मर्त्यलोकेऽपि, प्राप्नोमि नरकव्यथाम् ॥ ५३४ ॥
अमुना जन्मसिद्धेन, दुश्चिकित्सेन भूयसा । उपदेहिकयेव दुर्दारिद्र्येणाऽस्मि विद्रुतः ॥ ५३५ ॥
इतः साक्षादलक्ष्मीभिरिव निर्लक्ष्ममूर्तिभिः । कन्यकाभिः पूर्वजन्मवैरिणीभिरिवाऽर्दितः ॥ ५३६ ॥
अधुना यदि भूयोऽपि, दुहिता प्रसविष्यते । तदा देशान्तरं यास्याम्युज्झित्वैतत् कुटुम्बकम् ॥ ५३७ ॥
एवं चिन्तां प्रपन्नस्य, सुषुवे तस्य गेहिनी । कर्णसूचीप्रवेशाभं, सुताजन्म च सोऽशृणोत् ॥ ५३८ ॥
ययावूर्ध्वमुखः सोऽथ, कुटुम्बं प्रोज्झ्य नागिलः । पर्यस्य भारं सहसा, बलीवर्द इवाऽधमः ॥ ५३९ ॥
तस्याः प्रसवजे दुःखे, पतिप्रवसनव्यथा । समजायत तत्कालं, क्षारक्षेप इव क्षते ॥ ५४० ॥

१ विद्युतम्। २ स्नेहाकुलया। ३ शान्तिं जगाम। * °स्वस्थो, नानन्दन्नन्द° सं १, २ ॥ ४ दरिद्री। ५ पामायुक्तस्य। ६ निस्फोटाः। ७ सगर्भा। ८ "ऊधेइ" इति भाषायाम्। † दुहितृभिः स, १ ॥ ९ त्यक्त्वा।

नामाऽपि तस्या नागश्रीर्नाकार्षीदतिदुःखिता । निर्नामिकेति नाम्नाऽसौ, ततो लोकैरुदीरिता ॥५४१॥
साऽपालयन्न तां सम्यगवर्द्धिष्ट तथाऽपि सा । जन्तोर्वज्राहतस्याऽपि, मृत्युर्नाऽत्रुटितायुषः ॥ ५४२ ॥
अत्यन्तदुर्भगा मातुरप्युद्वेगविधायिनी । सा कालं गमयत्यन्यगृहे दुष्कर्म कुर्वती ॥ ५४३ ॥
एकस्मिन्नुत्सवेऽन्येद्युराढ्यबालकपाणिषु । ईक्षित्वा मोदकान् साऽपि, ययाचे मातरं निजाम् ॥ ५४४ ॥
दन्तैर्दन्तान् घर्षयन्ती, तामम्बाऽपीदमब्रवीत् । याचसे मोदकान् युक्तं, मोदकादी पिताऽपि ते ॥५४५॥
यदि मोदकलिप्सुस्त्वं, रज्जुमादाय गच्छ तत् । शैलमम्बरतिलकं, दारुभारकृते हले ! ॥ ५४६ ॥
करीषाग्निसोदरया, दह्यमाना तया गिरा । रुदती रज्जुमादाय, तं पर्वतमियाय सा ॥ ५४७ ॥
अद्रेस्तस्य शिरस्यैकरात्रिकप्रतिमाजुषः । केवलज्ञानमुत्पेदे, युगन्धरमुनेस्तदा ॥ ५४८ ॥
तस्याऽथ सन्निहिताभिर्देवताभिः प्रचक्रमे । तत्कालं केवलज्ञानमहिमाख्यो महोत्सवः ॥ ५४९ ॥
पर्वतासन्ननगरग्रामवासी ततो जनः । अहंपूर्विकया तत्र, तं वन्दितुमुपाययौ ॥ ५५० ॥
तत्र* यान्तं जनं दृष्ट्वा, नानाभरणभूषितम् । तस्थौ निर्नामिका चित्रलिखितेवाऽतिविस्मयात् ॥ ५५१ ॥
सा परम्परया ज्ञात्वा, लोकागमनकारणम् । दारुभारं दुःखभारमिवोत्सृज्याऽचलत् ततः ॥ ५५२ ॥
जनेन सह तेनाऽथ, साऽपि निर्नामिका गिरिम् । तमारुरोह तीर्थानि, सर्वसाधारणानि यत् ॥ ५५३ ॥
कल्पपादपवत् पादौ, मन्यमाना महामुनेः । सा सानन्दमवन्दिष्ट, मतिर्गत्यनुसारिणी ॥ ५५४ ॥
लोकमाह्लादयन्नब्द, इव गम्भीरया गिरा । मुनिर्विश्वजनीनोऽथ, विदधे धर्मदेशनाम् ॥ ५५५ ॥
आमसूत्रव्यूतखट्वाधिरोहणसहोदरम् । भवभूमौ निपाताय, नृणां विषयसेवनम् ॥ ५५६ ॥
एकग्रामसभावाससुप्तपान्थजनोपमः । पुत्रमित्रकलत्रादिसङ्गमः सर्वदेहिनाम् ॥ ५५७ ॥
लक्षेषु चतुरशीतौ, योनिषु भ्रमतामिह । अनन्तो दुःखसम्भारः, स्वकर्मपरिणामजः ॥ ५५८ ॥
अथ निर्नामिकाऽवोचद्, भगवन्तं कृताञ्जलिः । तुल्यो राज्ञि च रङ्के च, यत् त्वं विज्ञप्यसे ततः ॥५५९॥
संसारो दुःखसदनं, भगवद्भिः प्रकीर्तितः । अस्ति किं कश्चिदप्यत्र, मत्तोऽप्यधिकदुःखितः ? ॥ ५६० ॥
भगवानप्युवाचैवं, दुःखं दुःखितमानिनि ! । भवत्याः कीदृशं भद्रे !, दुःखितानपरान् शृणु ॥ ५६१ ॥
स्वकर्मपरिणामेनोत्पद्यन्ते नरकावनौ । भैदिकाश्छैदिकाः शीर्षच्छेद्याश्चाऽपि शरीरिणः ॥ ५६२ ॥
तिलपीडं निपीड्यन्ते, यन्त्रैस्तत्र हि केचन । दारुदारं च दार्यन्ते, क्रकचैः केऽपि दारुणैः ॥ ५६३ ॥
शूलतूलिकशय्यासु, शाय्यन्ते केऽपि सन्ततम् । असुरैर्वस्त्रवत् केचिदास्फाल्यन्ते शिलातले ॥ ५६४ ॥
कुट्यन्ते केऽप्ययःपात्राणीव लोहघनैर्घनैः । खण्ड्यन्ते शाकपणिका, इव केचन खण्डशः ॥ ५६५ ॥
भूयोऽपि मिलिताङ्गास्ते, भूयो भूयस्तथैव हि । तद्दुःखमनुभाव्यन्ते, क्रन्दन्तः करुणस्वरम् ॥ ५६६ ॥
पिपासिताश्च पाय्यन्ते, तप्तत्रपुरसं मुहुः । छायार्थिनो निषाद्यन्ते, चाऽसिपत्रतरोस्तले ॥ ५६७ ॥
मुहूर्त्तमपि न स्थातुं, लभन्ते वेदनां विना । नरके नारकाः कर्म, स्मार्यमाणाः पुराकृतम् ॥ ५६८ ॥
वत्से ! नारकषण्ढानां, यद् दुःखं तदशेषतः । श्राव्यमाणमपि प्राणभाजां दुःखाय जायते ॥ ५६९ ॥
किञ्च प्रत्यक्षमीक्ष्यन्ते, जल-स्थल-खचारिणः । प्राणिनो विविधं दुःखमापेदाना: स्वकर्मजम् ॥ ५७० ॥
तत्र वारिचराः स्वैरं, खादन्त्यन्योन्यमुत्सुकाः । धीवरैः परिगृह्यन्ते, गिल्यन्ते च बकादिभिः ॥ ५७१ ॥
उत्कील्यन्ते त्वचयद्भिर्भृज्यन्ते च भटित्रवत् । भोक्तुकामैर्विपच्यन्ते, निगाल्यन्ते वसार्थिभिः ॥ ५७२ ॥
प्राणिनश्च स्थलचरा, अबला बलवत्तरैः । मृगाद्याः सिंहप्रमुखैर्मार्यन्ते मांसकामिभिः ॥ ५७३ ॥
मृगयासक्तचित्तैश्च, क्रीडया मांसकाम्यया । नरैस्तत्तदुपायेन, हन्यन्तेऽनपराधिनः ॥ ५७४ ॥

---

१ धनिबालककरेषु । २ मोदकभक्षक. । * तत्रायान्तं आ ॥ ३ विश्वहितकर्त्ता । ४ अपक्वसूत्रव्यूतखट्वाधिरोहणसदृशम् । ५ भेदनीयाः । ६ छेदनीयाः । ७ लोहपात्राणि । ८ शाकावयवाः । ९ नारकिनाम् । १० प्राप्नुवन्त. ।

क्षुधा-पिपासा-शीतोष्णा-ऽतिभारारोपणादिना । कशा-ऽङ्कुश-प्रतोदैश्च, सहन्ते वेदनाममी ॥ ५७५ ॥
खेचरास्तित्तिरि-शुक-कपोत-चटकादयः । श्येन-शिञ्चान-गृध्राद्यैर्गृह्यन्ते मांसगृध्नुभिः ॥ ५७६ ॥
मांसलुब्धैः शाकुनिकैर्नानोपायप्रपञ्चतः । सङ्गृह्य प्रतिहन्यन्ते, नानारूपैर्विडम्बनैः ॥ ५७७ ॥
जलादिशस्त्रादिभवं, तिरश्चां सर्वतो भयम् । अभग्नप्रसरं स्वस्वकर्मबन्धनिबन्धनम् ॥ ५७८ ॥
मानुष्यकेऽपि सम्प्राप्ते, जायन्ते केऽपि जन्मिनः । जन्मान्धबधिरा जन्मपङ्गवो जन्मकुष्ठिनः ॥ ५७९ ॥
चौरिकापारदारिक्यप्रसक्ताः केऽपि मानवाः । नवैर्नवैर्निगृह्यन्ते, निग्रहैर्नारका इव ॥ ५८० ॥
विविधैर्व्याधिभिः केऽपि, बाध्यमाना निरन्तरम् । प्रेक्षमाणाः परमुखमुपेक्ष्यन्ते सुतैरपि ॥ ५८१ ॥
मूल्यक्रीताश्च ताड्यन्ते, केचिदश्वतरा इव । अतिभारेण बाध्यन्तेऽनुभाव्यन्ते तृषादिकम् ॥ ५८२ ॥
परस्परपराभूतिक्लिष्टानां द्युसदामपि । स्वस्वामिभावबद्धानां, दुःखमेव निरन्तरम् ॥ ५८३ ॥
अस्मिन्नसारे संसारे, निसर्गेणाऽतिदारुणे । अवधिर्न हि दुःखानां, यादसामिव[1] वारिधौ ॥ ५८४ ॥
संसारे दुःखनिलये, जैनो धर्मः प्रतिक्रिया[2] । मन्त्राक्षरमिव स्थाने, भूतप्रेतादिसङ्कुले ॥ ५८५ ॥
जातु हिंसा न कर्त्तव्या, हिंसया हि शरीरिणः । पोता[3] इवाऽतिभारेण, मज्जन्ति नरकार्णवे ॥ ५८६ ॥
असत्यं सर्वथा त्याज्यमसत्यवचनेन यत् । चिरं भ्रमति संसारे, जन्तुस्तृण्[4]येव वात्यया ॥ ५८७ ॥
अदत्तं नाददीतार्थमदत्तादानतो यतः । कपिकच्छूफलस्पर्शादिव जातु सुखं न हि ॥ ५८८ ॥
अब्रह्म परिहर्त्तव्यमब्रह्मचरणेन हि । धृत्वा गले रङ्क इव, नीयते नरके जनः ॥ ५८९ ॥
परिग्रहो न कर्त्तव्यः, परिग्रहवशेन यत् । दुःखपङ्के जनो मज्जत्यतिभारेण गौरिव ॥ ५९० ॥
पञ्चाऽप्यमूनि हिंसादीन्युत्सृजेद् देशतोऽपि यः । उत्तरोत्तरकल्याणसम्पदां सोऽपि भाजनम् ॥ ५९१ ॥
अथ साऽऽसादयामास, संवेगमतिशायिनम् । अयोगोल[5] इवाऽभेद्यः, कर्मग्रन्थिमभिद्यत ॥ ५९२ ॥
महामुनेः पुरः साऽथ, सम्यक् सम्यक्त्वमाददे । प्रतिपेदे जिनोपज्ञं[6], गृहिधर्मं च भावतः ॥ ५९३ ॥
अहिंसादीनि पञ्चाऽपि, तदैवाऽणुव्रतानि सा । परलोकाध्वपाथेयभूतानि प्रत्यपद्यत ॥ ५९४ ॥
मुनिनाथं प्रणम्याऽथ, गृहीत्वा दारुभारकम् । जगाम कृतकृत्येव मुदिता सा स्वमालयम् ॥ ५९५ ॥
ततः प्रभृति सा तेपे, तपो नानाविधं सुधीः । स्वनामेवाऽविस्मरन्ती युगन्धरमुनेर्गिरम् ॥ ५९६ ॥
न हि कश्चिदुपायंस्त, दुर्भगां यौवनेऽपि ताम् । कटुतुम्ब्याः पक्वमपि फलमश्नाति कोऽथवा ? ॥ ५९७ ॥
ततो विशिष्टसंवेगा, तत्राऽद्रावेयुषः पुनः । युगन्धरमुनेरग्रे साऽस्त्यात्तानशना[7]ऽधुना ॥ ५९८ ॥
तद् गच्छ दर्शयाऽस्याः स्वं, त्वयि रक्ता सती मृता । सा ते पत्नी भवेदन्ते, या मतिः सा गतिः किल ॥ ५९९ ॥
तच्चक्रे ललिताङ्गोऽपि, साऽपि तद्रागिणी सती । मृत्वा स्वयम्प्रभा नाम, तत्पत्न्यजनि पूर्ववत् ॥ ६०० ॥
प्रणष्टां प्रणयक्रोधादिव प्राप्य प्रियां ततः । स रेमेऽभ्यधिकं तापे, रत्ने छाया हि जायते ॥ ६०१ ॥
रममाणस्तया सार्द्धं, गते काले कियत्यपि । आत्मच्यवनचिह्नानि ललिताङ्गो व्यलोकयत् ॥ ६०२ ॥
तस्य रत्नाभरणानि, निस्तेजस्कानि जज्ञिरे । मम्लुश्च मौलिमाल्यानि, तद्वियोगभयादिव ॥ ६०३ ॥
मालिन्यं भेजिरे सद्यस्तस्याऽङ्गं वसनानि च । आसन्ने व्यसने लक्ष्म्या लक्ष्मीनाथो[8]ऽपि मुच्यते ॥ ६०४ ॥
भोगेष्वत्यन्तमासक्तिस्तस्याऽभूद् धर्मबाधया । प्रकृतिव्यत्ययः प्रायो भवत्यन्ते शरीरिणाम् ॥ ६०५ ॥
जजल्प शोकविरसं, तस्य सर्वः परिच्छदः[9] । भाविकार्यानुसारेण वागुच्छलति जल्पताम् ॥ ६०६ ॥
आकालप्रतिपन्नाभ्यां, प्रियाभ्यां च सहैव हि । कृतापराध इव स श्रीह्रीभ्यां पर्यमुच्यत ॥ ६०७ ॥
अदीनोऽपि हि दैन्येन, विनिद्रोऽपि हि निद्रया । स शिश्रिये मृत्युकाले पक्षाभ्यामिव कीटिका ॥ ६०८ ॥

---

१ जलजन्तूनाम् । २ प्रतीकार. । ३ प्रवहणानि । ४ तृणसमूह इव । ५ लोहगोल. । ६ जिनोपदिष्टम् । ७ गृहीतानशना । ८ विष्णुः । ९ परिवारः ।

हृदयेन समं तस्य, विश्लिष्यत्सन्धिबन्धनाः । महाबलैरप्यकम्प्याः, कल्पवृक्षाश्चकम्पिरे ॥ ६०९ ॥
तस्याऽङ्गजोऽप्यभज्यन्त, सर्वाङ्गोपाङ्गसन्धयः । भाविदुर्गतियानोत्थवेदनाशङ्कनादिव ॥ ६१० ॥
पदार्थग्रहणे तस्याऽपटुर्दृष्टिरजायत । तथैव स्थितिमन्येषामक्षमेव निरीक्षितुम् ॥ ६११ ॥
गर्भावासनिवासोत्थदुःखागमभयादिव । प्रकम्पतरलान्यङ्गान्यस्याऽजायन्त तत्क्षणम् ॥ ६१२ ॥
क्रीडागिरि-सरिद्वापी-दीर्घिकोपवनेषु सः । रम्येष्वपि रतिं नाप, स*पाकल[1] इव द्विपः ॥ ६१३ ॥
ततः स्वयम्प्रभाऽवोचदपराद्धं न किं मया ? । विमनस्कतया देव !, यदेवमुपलक्ष्यसे ॥ ६१४ ॥
ललिताङ्गोऽप्युवाचैवं, नाऽपराद्धं प्रिये ! त्वया । अपराद्धं मया सुभ्रु !, यदल्पं प्राकृतं तपः ॥ ६१५ ॥
भोगेषु जागरूकोऽहं, धर्मे सुप्त इवाऽनिशम् । पूर्वजन्मन्यभूवं हि, विद्याधरनरेश्वरः ॥ ६१६ ॥
मद्भाग्यप्रेरितेनेव, स्वयम्बुद्धेन मन्त्रिणा । धर्मं प्रबोधितो जैनमायुःशेषेऽहमाप्तवान् ॥ ६१७ ॥
इयत्कालं च तद्धर्मप्रभावाच्छ्रीप्रभे प्रभुः । सञ्जातोऽहमतश्च्योष्ये, नाऽलभ्यं लभ्यते क्वचित् ॥ ६१८ ॥
एवमाभाषमाणस्य, तस्याऽऽदिष्टो बिडौजसा । दृढधर्माभिधो देवो, जगादैवमुपेत्य तम् ॥ ६१९ ॥
जिनेन्द्रप्रतिमापूजां, कर्तुं नन्दीश्वरादिषु । यास्यत्यैशानकल्पेन्द्रस्त्वमप्येहि तदाज्ञया ॥ ६२० ॥
अहो ! भाग्यवशात् कालोचितं मे स्वामिशासनम् । इति प्रमुदितोऽचालील्ललिताङ्गः सवल्लभः ॥६२१॥
गत्वा नन्दीश्वरे सोऽर्हत्प्रतिमाः शाश्वतीस्ततः । आनर्च विस्मृतासन्नच्यवनः परया मुदा ॥ ६२२ ॥
ततोऽप्यन्येषु तीर्थेषु, गच्छन् स्वच्छेन चेतसा । सोऽगादभावं क्षीणायुः, क्षीणतैलप्रदीपवत् ॥ ६२३ ॥
जम्बूद्वीपे ततः पूर्वविदेहेषूपसागरम् । महानद्याश्च सीताभिधानाया उत्तरे तटे ॥ ६२४ ॥
विजये पुष्कलावत्यां, लोहार्गलमहापुरे । राज्ञः सुवर्णजङ्घस्य, लक्ष्म्यां पत्न्यां सुतोऽभवत् ॥६२५॥
[ युग्मम् ॥ ]
अथ कन्दलितानन्दावमुष्य दिवसे शुभे । वज्रजङ्घ इति प्रीतौ, पितरौ नाम चक्रतुः ॥ ६२६ ॥
स्वयम्प्रभाऽपि दुःखार्त्ता, कालेन कियताऽप्यथ । धर्मकर्मणि संलीना, व्यच्योष्ट ललिताङ्गवत् ॥६२७
नगर्यां पुण्डरीकिण्यां, विजयेऽत्रैव चक्रिणः । वज्रसेनस्य भार्यायां, गुणवत्यां सुताऽभवत् ॥ ६२८ ॥
सर्वलोकातिशायिन्या, श्रियाऽसौ संयुता ततः । श्रीमतीत्यभिधानेन, पितृभ्यामभ्यधीयत ॥ ६२९ ॥
लतेवोद्यानपालीभिर्धात्रीभिर्लालिता सती । मृद्वङ्गी विलसत्पाणिपल्लवा ववृधे क्रमात् ॥ ६३० ॥
स्निग्धया पल्लवयन्तीमिव† कान्त्या नभस्तलम् । तां यौवनमलञ्चक्रे, रत्नं स्वर्णोर्मिकामिव ॥ ६३१ ॥
अन्येद्युः सर्वतोभद्रं, नाम प्रासादमुच्चकैः । शैलं सन्ध्याभ्रलेखेव, क्रीडयाऽध्यारुरोह सा ॥ ६३२ ॥
ततो मनोरमोद्याने, सुस्थितस्य महामुनेः । उत्पन्ने केवलज्ञाने, ददर्शाऽऽगच्छतः सुरान् ॥ ६३३ ॥
दृष्टपूर्वं मया क्वापीत्यूहापोहकारिणी[2] । जन्मान्तराणि पूर्वाणि, निशास्वप्नमिवाऽस्मरत् ॥ ६३४ ॥
हृदये प्राग्भवज्ञानभारं वोढुमिवाऽक्षमा । क्षमातले क्षणादेव, मूर्च्छिता निपपात सा ॥ ६३५ ॥
चन्दनाद्युपचारेण, सखीभिः कल्पितेन सा । लब्धसंज्ञा समुत्तस्थौ, चित्ते चैवमचिन्तयत् ॥ ६३६ ॥
पूर्वजन्मपतिर्मे स, ललिताङ्गो दिवश्च्युतः । क्व सम्प्रत्यवतीर्णोऽस्तीत्यज्ञानं हा ! दुनोति माम् ॥६३७॥
तस्मिन् हृदयसङ्क्रान्ते, नाऽन्यो मे हृदयेश्वरः । कर्पूरभाण्डे को नाम, लवणं विनिवेशयेत् ? ॥ ६३८ ॥
स च प्राणाधिनाथो मे, न चेद् वचनगोचरः । आलप्याऽलं तदन्येनेत्याददे मौनमेव सा ॥ ६३९ ॥
आधि‡दैविकदोषाभिशङ्कया तत्सखीजनैः । अकारि मन्त्रतन्त्रादिरुपचारो यथोचितम् ॥ ६४० ॥
सा मौनेन न मूकत्वमुपचारशतैरपि । व्याधेरन्यस्य न ह्यन्यदौषधं जातु शान्तिकृत् ॥ ६४१ ॥
प्रयोजने परिजनं, स्वं नियोजयति स्म सा । अक्षराणि लिखित्वा भ्रूहस्तादेरथ संज्ञया ॥ ६४२ ॥

---

* सपङ्किल° मु १ ॥ १ पाकलो गजज्वरः । † °तीमङ्कका° सं १ ॥ २ तर्कवितर्ककारिणी । ‡ °दैवतदो° क ॥

अन्येद्युः श्रीमती क्रीडोद्याने यातवती सती । एकान्ते समयं प्राप्य, धात्र्योचे पण्डिताख्यया ॥ ६४३ ॥
मम प्राणा इवाऽसि त्वं, मातेवाऽसि तवाऽप्यहम् । अन्योन्यमावयोस्तेन, नाऽस्त्यविश्वासकारणम् ॥ ६४४ ॥
मौनमालम्बसे पुत्रि !, हेतुना येन शंस तम् । तद्दुःखसंविभागं मे, दत्त्वा दुःखं लघूकुरु ॥ ६४५ ॥
ज्ञात्वा दुःखं यतिष्येऽहं, तत्प्रतीकारकर्मणे । न ह्यज्ञातस्य रोगस्य, चिकित्सा जातु युज्यते ॥ ६४६ ॥
पण्डितायाः स्ववृत्तान्तं, साऽपि प्राग्जन्मसम्भवम् । यथावदब्रवीत् प्रायश्चित्तार्थी सद्गुरोरिव ॥ ६४७ ॥
पटे वृत्तान्तमालेख्य, श्रीमत्यास्तं च पण्डिता । उपायपण्डिता मङ्क्षु, बहिर्दर्शयितुं ययौ ॥ ६४८ ॥
चक्रिणो वज्रसेनस्य, वर्षग्रन्थिरभूत् तदा । प्रस्तावादाययुस्तत्र, भूयांसो वसुधाधवाः ॥ ६४९ ॥
पण्डिता राजमार्गेऽथ, तमालेख्यपटं स्फुटम् । विस्तार्य तस्थौ श्रीमत्या, मनोरथमिवाऽलघुम् ॥ ६५० ॥
तत्राऽऽगमविदः केऽपि, स्वर्गनन्दीश्वरादिकम् । आगमार्थाविसंवादि, लिखितं परितुष्टुवुः ॥ ६५१ ॥
इतरे तु महाश्राद्धा, धूनयन्तः शिरोधराम् । प्रत्येकं वर्णयामासुर्बिम्बानि श्रीमदर्हताम् ॥ ६५२ ॥
कूणिताक्षमभीक्ष्णं केऽपीक्षमाणाः प्रतिक्षणम् । रेखाशुद्धिं प्रशशंसुः, कलाकौशलशालिनः ॥ ६५३ ॥
इतरे तु सिति-श्वेत-पीत-नीला-ऽरुणादिकान् । सन्ध्याभ्राभीकृतपटान्, वर्णकानित्यवर्णयन् ॥ ६५४ ॥
अत्रान्तरे च तनयो, दुर्दर्शनमहीपतेः । यथार्थनामा दुर्दान्त, इति तत्र समाययौ ॥ ६५५ ॥
स क्षणं तं पटं प्रेक्ष्य, प्रेक्षावान् मूर्च्छया क्षितौ । अलीकयाऽपतदथ, लब्धसंज्ञ इवोत्थितः ॥ ६५६ ॥
मूर्च्छायाः कारणं पृष्ट, उत्थितश्च जनेन सः । कथयामास वृत्तान्तं, कृत्वा कपटनाटकम् ॥ ६५७ ॥
मम प्राग्जन्मचरितं, पटे केनाऽप्यलेख्यत । जातिस्मरणमुत्पेदे, हन्त ! तद्दर्शनादिह ॥ ६५८ ॥
ललिताङ्गोऽस्म्यहं देवो, मम देवी स्वयम्प्रभा । इत्यादि मवदत्येव, यदत्र लिखितं पटे ॥ ६५९ ॥
पप्रच्छ पण्डिता चाऽथ, यद्येवं भद्र ! तद्वद । सन्निवेशः पटे कोऽयमङ्गुल्या दर्शय स्वयम् ॥ ६६० ॥
स ऊचे मेरुरेषोऽद्रिः, पुरीयं पुण्डरीकिणी । पुनः पृष्टो मुनेर्नामाऽब्रवीन्नामाऽस्य विस्मृतम् ॥ ६६१ ॥
भूयोऽपि पृष्टः को नाम, नृपोऽयं मन्त्रिभिर्वृतः ? । तपस्विनी च का त्वेषेत्याख्यदाख्या न वेद्म्यहम् ॥ ६६२ ॥
मायावीति च संज्ञातः, सोपहासं तयोदितः । पुत्रेदं संवदत्येव, प्राग्जन्मचरितं तव ॥ ६६३ ॥
ललिताङ्गोऽसि देवस्त्वं, त्वत्पत्नी तु स्वयम्प्रभा । नन्दिग्रामे कर्मदोषात्, पङ्गूभूताऽस्ति सम्प्रति ॥ ६६४ ॥
सञ्जातजातिस्मरणादालिख्य चरितं निजम् । पटो मे धातकीखण्डगताया अर्पितस्तया ॥ ६६५ ॥
तस्याः पङ्ग्वाः करुणया, त्वं मयाऽसि गवेषितः । तदेहि धातकीखण्डे, त्वां नयामि तदन्तिके ॥ ६६६ ॥
वराकी त्वद्वियोगे सा, दुःखं जीवति पुत्रक ! । समाश्वासय तामद्य, प्राग्जन्मप्राणवल्लभाम् ॥ ६६७ ॥
एवमुक्त्वा पण्डितायां, तूष्णीकायां स मायिकः । इत्थं वयस्यैः स्वैरेव, सोपहासमभाष्यत ॥ ६६८ ॥
कलत्ररत्नाधिगमादहो ! पुण्योदयस्तव । अभिगम्या च पोष्या च, सा पङ्गुः सर्वथा तव ॥ ६६९ ॥
ततो वैलक्ष्यदीनास्यः, स दुर्दान्तः कुमारकः । विक्रीयमाणेभ्य इवाऽवशिष्टः क्वचिदप्यगात् ॥ ६७० ॥
लोहार्गलपुराद् वज्रजङ्घोऽपि हि तदाऽऽययौ । चरितं चित्रलिखितं, तद् दृष्ट्वा मुमूर्च्छ च ॥ ६७१ ॥
व्यजनैर्वीजितो नीरैरुक्षितोऽथ स उत्थितः । जातजातिस्मृतिरभूत्, सद्यः स्वर्गादिवागतः ॥ ६७२ ॥
पटालेख्यमिदं दृष्ट्वा, किं कुमाराऽसि मूर्च्छितः ? । इति पण्डितया पृष्टो, वज्रजङ्घोऽब्रवीदिदम् ॥ ६७३ ॥
चरित्रं सकलत्रस्य, मम प्राग्भवसम्भवम् । इदं हि लिखितं भद्रे !, तद् दृष्ट्वा मूर्च्छितोऽस्म्यहम् ॥ ६७४ ॥
श्रीमानैशानकल्पोऽयं, विमानं श्रीप्रभं त्विदम् । एषोऽहं ललिताङ्गाख्यः, प्रिया मेऽसौ स्वयम्प्रभा ॥ ६७५ ॥
इतश्च धातकीखण्डे, नन्दिग्रामस्य मध्यतः । गृहे महादरिद्रस्य, सुता निर्नामिकेत्यसौ ॥ ६७६ ॥
शैलमम्बरतिलकमध्यारूढाऽस्ति सा त्विह । गृहीतानशनाऽमुष्य, युगन्धरमुनेः पुरः ॥ ६७७ ॥

---

१ चित्ररचना ।

आत्मसन्दर्शनायाऽस्या, आगतोऽहमिहाऽस्मि च । मयि रक्ता मृता जज्ञे, नूनमेषा स्वयम्प्रभा ॥ ६७८ ॥
इह नन्दीश्वरे जैनबिम्बार्चनपरोऽस्म्यहम् । गच्छन्नितोऽन्यतीर्थेषु, च्यवमानोऽहमस्म्यहम् ॥ ६७९ ॥
इह चैकाकिनी दीना, वराकीयं स्वयम्प्रभा । इह च च्यवमानेयं, मन्ये सैव मम प्रिया ॥ ६८० ॥
साऽस्तीह मन्ये लिखितं, जातिस्मृत्या तया त्वदः । अन्यानुभूतं न ह्यन्यो, जनो जानाति जातुचित् ॥६८१॥
आमेति पण्डिताऽप्युक्त्वा, श्रीमत्याः पार्श्वमेत्य च । तत्सर्वमाख्यत् हृदयविशल्यकरणौषधम् ॥ ६८२ ॥
श्रीमती दयितोदन्तगिरा रोमाञ्चिताऽभवत् । अम्भोदध्वनिना रत्नाङ्कुरितेव विदूरभूः ॥ ६८३ ॥
पितुर्व्यज्ञपयत् तच्च, श्रीमती पण्डितामुखात् । अस्वातन्त्र्यं कुलस्त्रीणां, धर्मो नैसर्गिको यतः ॥ ६८४ ॥
तद्गिरा मुदितः सद्यः, स्तनितेनेव बर्हिणः । वज्रसेननृपो वज्रजङ्घमाजूहवत् ततः ॥ ६८५ ॥
कुमारमूचे भूपालोऽसत्पुत्री श्रीमतीत्यसौ । भवत्विदानीं भवतो, गृहिणी पूर्वजन्मवत् ॥ ६८६ ॥
तथेति प्रतिपन्ने च, कुमारेणोदवाहयत् । श्रीमतीं भूपतिः प्रीतो, हरिणेवोदधिः श्रियम् ॥ ६८७ ॥
ज्यौत्स्नीचन्द्राविव युतौ, तौ सितक्षौमवाससौ । लोहार्गलपुरं राज्ञाऽनुज्ञातौ जग्मतुस्ततः ॥ ६८८ ॥
योग्यं ज्ञात्वा वज्रजङ्घं, स्वर्णजङ्घोऽथ भूपतिः । राज्ये निवेशयामास, स्वयं दीक्षामुपाददे ॥ ६८९ ॥
सूनोः पुष्कलपालस्य, दत्त्वा राज्यश्रियं निजाम् । प्राव्राजीद् वज्रसेनोऽपि, जज्ञे तीर्थकरश्च सः ॥६९०॥
विलसन् वज्रजङ्घोऽपि, श्रीमत्या सह कान्तया । उवाह लीलया राज्यमम्भोजमिव कुञ्जरः ॥ ६९१ ॥
अप्राप्तयोर्विप्रयोगं, गङ्गासागरयोरिव । तयोर्भुञ्जानयोर्भोगान्, सुतः समुदपद्यत ॥ ६९२ ॥
अथ पुष्कलपालस्य, व्यभिद्यन्त महारुषः । समन्तात् सीमसामन्ताः, सर्पभारोपमाजुषः ॥ ६९३ ॥
तेन तेषां द्विजिह्वानामिव साधनहेतवे । नरेन्द्रो वज्रजङ्घोऽथ, समाहूतोऽचलद् बली ॥ ६९४ ॥
श्रीमत्यपि समं वज्रजङ्घेन जगतीभुजा । अचालीदचला भक्तिः, पौलोमीव बिडौजसा ॥ ६९५ ॥
स गच्छन्नर्द्धमार्गेऽथ, महाशरवणं पुरः । ददर्श दर्शयामिन्यामपि ज्योत्स्नाभ्रमप्रदम् ॥ ६९६ ॥
दृग्विषोऽहिरिहाऽस्तीति, विज्ञप्तः सोऽध्वगैरगात् । पथाऽन्येन नयज्ञा हि, प्रस्तुतार्थेषु तत्पराः ॥ ६९७ ॥
आययौ पुण्डरीकिण्यां, पुण्डरीकोपमोऽथ सः । सामन्तमण्डलं सर्वं, वशेऽभूत् पुष्कलस्य च ॥ ६९८ ॥
राजा पुष्कलपालोऽपि, पुष्कलानि विधेयवित् । विविधानि व्यधादस्य, स्वागतानि गुरोरिव ॥ ६९९ ॥
श्रीमन्तं श्रीमतीबन्धुमनुज्ञाप्याऽन्यदा तु सः । श्रीमत्या सहितोऽचालीच्छ्रियः पतिरिव श्रिया ॥ ७०० ॥
सोऽथ प्राप्तः शरवणं, निकषा कर्षणो द्विषाम् । इत्यूचे कुशलैर्यात, मध्येनाऽप्यस्य सम्प्रति ॥ ७०१ ॥
उत्पेदे केवलज्ञानं, द्वयोरत्राऽनगारयोः । तत्र देवागमोद्योताद्, दृग्विषो निर्विषोऽभवत् ॥ ७०२ ॥
नाम्ना सागरसेनश्च, मुनिसेनश्च तौ मुनी । राजन्नत्रैव विद्येते, सूर्याचन्द्रमसाविव ॥ ७०३ ॥
सोदर्यौ तौ मुनी ज्ञात्वा, विशेषमुदितो नृपः । उवास तत्रैव वने, वनमालीव वारिधौ ॥ ७०४ ॥
कुर्वाणौ देशनां तत्र, तौ वृतौ देवपर्षदा । भक्तिभारादिवाऽऽनम्रः, सभार्यः सोऽभ्यवन्दत ॥ ७०५ ॥
देशनान्ते च पानान्नवस्त्रोपकरणादिभिः । तौ प्रत्यलाभयद् राजा, चिन्तयामास ¶चेति सः ॥७०६॥
धन्यावेतौ निष्कषायौ, निर्ममौ निष्परिग्रहौ । सोदर्यभावे सामान्येऽप्यहो ! नाऽस्म्यहमीदृशः ॥ ७०७ ॥
आत्तव्रतस्य तातस्य, सत्पथेनाऽनुगामिनौ । एतावेवौरसौ पुत्रौ, पुत्रः क्रीत इवाऽस्म्यहम् ॥ ७०८ ॥
एवं स्थितेऽपि मे किञ्चिन्नायुक्तं प्रव्रजामि चेत् । प्रव्रज्या दीपिकेवाऽऽत्तमात्राऽपि हि तमश्छिदे ॥७०९॥
तदिदानीं पुरीं गत्वा, दत्त्वा राज्यं च सूनवे । हंसस्येव गतिं हंसः, श्रयिष्येऽहं पितुर्गतिम् ॥ ७१० ॥
संवादिन्या व्रतादानेऽनुस्यूतमनसेव सः । सहितः श्रीमतीदेव्या, प्राप लोहार्गलं पुरम् ॥ ७११ ॥

* पुनरेषा स्व° ता, ख ॥ † मस्म्ययम् ता ॥ ‡ दस्वनिना र° ख ॥ § ज्योत्स्नाच° संता ॥ १ अन्तर्भेद प्राप्ता. । २ इन्द्राणी । ३ समीपे । ४ संहारकः । ५ सहोदरौ । ६ विष्णुरिव । ¶ चेतसि सं १, २ ॥

राज्यलुब्धस्तदा त्वस्य, पुत्रः प्रकृतिमण्डलम् । धनैरभेदयत् तर्हि, किं न भेद्यं जलैरिव ? ॥ ७१२ ॥
प्रातः स्वयं व्रतादानं, राज्यदानं सुतस्य च । चिन्तयन्तौ सुषुपतुर्निशायां श्रीमतीनृपौ ॥ ७१३ ॥
विषधूपं व्यधात् पुत्रस्तयोस्तु सुखसुप्तयोः । कस्तं निरोद्धुमीशः स्याद्, गृहादग्निमिवोत्थितम् ? ॥ ७१४ ॥
तद्धूपधूमैरधिकैर्जीवाकर्षाङ्कुटैरिव । घ्राणप्रविष्टैस्तौ सद्यो, दम्पती मृत्युमापतुः ॥ ७१५ ॥
अथोत्तरकुरुष्वेतावुत्पन्नौ युग्मरूपिणौ । एकचिन्ताविपन्नानां, गतिरेका हि जायते ॥ ७१६ ॥
क्षेत्रानुरूपमायुश्च, पूरयित्वा तथा युतौ । तौ विपद्योदपद्येतां, सौधर्मे स्नेहलौ सुरौ ॥ ७१७ ॥
वज्रजङ्घस्य जीवोऽथ, भोगान् भुक्त्वा निरन्तरम् । आयुःक्षयात् ततोऽच्योष्ट, हिमग्रन्थिरिवाऽऽतपात् ७१८
जम्बूद्वीपे विदेहेषु, पुरे क्षितिप्रतिष्ठिते । वैद्यस्य सुविधेः पुत्रः, स जीवानन्द इत्यभूत् ॥ ७१९ ॥
तदैव तस्मिन्नगरे, चत्वारोऽन्येऽपि दारकाः । उदपद्यन्त धर्मस्य, भेदा इव वपुर्जुषः ॥ ७२० ॥
अभूत् तत्रैक ईशानचन्द्रस्य पृथिवीपतेः । भार्यायां कनकवत्यां, सूनुर्नाम्ना महीधरः ॥ ७२१ ॥
मन्त्रिणोऽन्यः शुनाशीरनाम्नः पत्न्यामजायत । लक्ष्म्यां श्रीनन्दन इव, सुबुद्धिर्नाम नन्दनः ॥ ७२२ ॥
अन्यः सागरदत्तस्य, सार्थवाहपतेरभूत् । भार्यायामभयमत्यां, पूर्णभद्राभिधः सुतः ॥ ७२३ ॥
चतुर्थश्च समुत्पेदे, पत्न्यां श्रेष्ठिधनस्य तु । शीलमत्यां शीलपुञ्ज, इव नाम्ना गुणाकरः ॥ ७२४ ॥
प्रयत्नाद् रक्ष्यमाणास्ते, बालधात्रैर्दिवानिशम् । समं ववृधिरे सर्वे*ऽप्यङ्गेऽङ्गावयवा इव ॥ ७२५ ॥
सहपांशुक्रीडिनस्ते, जगृहुः सममेव हि । कलाकलापं सकलं, मेघाम्भः पादपा इव ॥ ७२६ ॥
तत्रैव नगरे जीवः, श्रीमत्या अपि सोऽभवत् । सूनुरीश्वरदत्तस्य, श्रेष्ठिनः केशवाभिधः ॥ ७२७ ॥
समं च मिलितास्तेन, ते षण्मित्राणि जज्ञिरे । अवियुक्ताः करणान्तःकरणानीव[1] सर्वदा ॥ ७२८ ॥
विदाञ्चकाराऽऽयुर्वेदं, जीवानन्दोऽपि पैतृकम् । अष्टाङ्गमौषधीश्चाऽपि, रसवीर्यविपाकतः ॥ ७२९ ॥
ऐरावण इवेभेषु, ग्रहेष्विव दिवाकरः । अभूत् प्राज्ञो निरवद्यविद्यो वैद्येषु सोऽग्रणीः ॥ ७३० ॥
सौदर्या इव सम्भूय, रममाणाः सदैव ते । कदाचित् कस्यचिद् वेश्मन्यन्योऽन्यस्याऽवतस्थिरे ॥ ७३१ ॥
एकदा वैद्यपुत्रस्य, जीवानन्दस्य मन्दिरे । एतेषां तिष्ठतामेकः, साधुर्भिक्षार्थमाययौ ॥ ७३२ ॥
पृथ्वीपालस्य राज्ञः स, सूनुर्नाम्ना गुणाकरः । राज्यं मलमिवोत्सृज्य, शमसाम्राज्यमाददे ॥ ७३३ ॥
सरिदोघ इव ग्रीष्मातपेन तपसा कृशः । कृमिकुष्ठाभिभूतश्च, सोऽकालापथ्यभोजनात् ॥ ७३४ ॥
सर्वाङ्गीणं कृमिकुष्ठाधिष्ठितोऽपि स भेषजम् । ययाचे न क्वचित् कायानपेक्षा हि मुमुक्षवः ॥ ७३५ ॥
गोमूत्रिकाविधानेन[2], गेहाद् गेहं परिभ्रमन् । षष्ठस्य पारणे दृष्टः, स तैर्निजगृहाङ्गणे ॥ ७३६ ॥
महीधरकुमारेण, स किञ्चित् परिहासिना । जीवानन्दो निजगदे, जगदेकभिषक् ततः ॥ ७३७ ॥
अस्ति व्याधेः परिज्ञानं, ज्ञानमस्त्यौषधस्य च । चिकित्साकौशलं चाऽस्ति, नाऽस्ति वः केवलं कृपा ॥ ७३८ ॥
सदा संस्तुतमप्यार्त्तमपि[3] प्रार्थकमप्यहो ! । वेश्या इव विना द्रव्यं, यूयं नाऽक्ष्णाऽपि पश्यथ ॥ ७३९ ॥
तथाऽप्येकान्ततो नाऽर्थलुब्धैर्भाव्यं विवेकिभिः । धर्ममप्युररीकृत्य, कृत्यं क्वाऽपि चिकित्सितम् ? ॥ ७४० ॥
चिकित्सायां निदाने च, धिक् ते सर्वं परिश्रमम् । आयातमीदृशं पात्रं, सरोगं यदुपेक्षसे ॥ ७४१ ॥
जीवानन्दोऽपि विज्ञानरत्नरत्नाकरोऽब्रवीत् । साधु साधु महाभाग !, त्वया विस्मापितोऽस्म्यहम् ॥ ७४२ ॥
ब्राह्मणजातिरद्विष्टो, वणिग्जातिरवञ्चकः । प्रियजातिरनीर्ष्यालुः, शरीरी च निरामयः ॥ ७४३ ॥
विद्वान् धनी गुण्यगर्वः, स्त्रीजनश्चाऽपचापलः । राजपुत्रः सुचरित्रः, प्रायेण न हि दृश्यते ॥ ७४४ ॥
[ सन्दानितकम् ]

* सर्वेऽप्यनङ्गात्र° सं १ ॥ १ करणानि इन्द्रियाणि, अन्तःकरण मनः, एतान्यपि षट्सङ्ख्याकानि । २ गोमूत्रधारावद्वक्रत्वेन ।
३ परिचितम् ।

चिकित्सनीय एवाऽहो !, महामुनिरयं मया । औषधानामसामग्री, किन्तु यात्यन्तरायताम् ॥ ७४५ ॥
तत्रैकं लक्षपाकं मे, तैलमस्तीह नाऽस्ति तु । गोशीर्षचन्दनं रत्नकम्बलश्चाऽऽनयन्तु तत् ॥ ७४६ ॥
आनेष्यामो वयमिति, प्रोच्य पञ्चाऽपि तत्क्षणम् । ते ययुर्विपणिश्रेणीं, स्वस्थानं सोऽप्यगान्मुनिः ॥७४७॥
रत्नकम्बल-गोशीर्षे, मूल्यमादाय यच्छ नः । इत्युक्तस्तैर्वणिग्वृद्धस्ते ददानोऽब्रवीदिदम् ॥ ७४८ ॥
दीनाराणां लक्षमेकं, प्रत्येकं मूल्यमेतयोः । गृह्णीत ब्रूत वस्तुभ्यां, किमाभ्यां वः प्रयोजनम् ? ॥७४९॥
तेऽप्यूचुर्मूल्यमादत्स्व, दत्स्व गोशीर्षकम्बलौ । एताभ्यां हि महासाधुचिकित्सा नः प्रयोजनम् ॥ ७५० ॥
श्रुत्वा तद्वचनं श्रेष्ठी, विस्मयोत्तानलोचनः । रोमाञ्चसूचितानन्दश्चेतसैवमचिन्तयत् ॥ ७५१ ॥
क्वैषां यौवनमुन्मादप्रमादमदनोन्मदम् ? । मतिर्विवेकवसतिर्वयोवृद्धोचिता क्व च ? ॥ ७५२ ॥
जराजर्जरकायाणां, मादृशां योग्यमीदृशम् । कुर्वन्त्यमी यत् तदहोऽदम्यैर्भारोऽयमुह्यते ॥ ७५३ ॥
चिन्तयित्वेति सोऽवोचदिमौ गोशीर्षकम्बलौ । गृह्णीतामस्तु वो भद्रं, भद्रा ! द्रव्येण चाऽस्तु वः ॥७५४॥
अनयोर्वस्तुनोर्मूल्यमादास्ये धर्ममक्षयम् । धर्मभागीकृतः साधु, युष्माभिः सोदरैरिव ॥ ७५५ ॥
श्रेष्ठिश्रेष्ठोऽर्पयित्वाऽथ, तेषां गोशीर्षकम्बलौ । भावितात्मा प्रवव्राज, वव्राज च परं पदम् ॥ ७५६ ॥
आदायौषधसामग्रीमग्रिमास्ते महात्मनाम् । जीवानन्देन सहिताः, प्रययुर्येन तं मुनिम् ॥ ७५७ ॥
न्यग्रोधपादपस्याऽधस्तत्पादमिव निश्चलम् । कायोत्सर्गेण तिष्ठन्तं, तं नत्वा ते बभाषिरे ॥ ७५८ ॥
धर्मविघ्नं करिष्यामश्चिकित्साकर्मणाऽद्य वः । भगवन्ननुजानीहि, पुण्येनाऽनुगृहाण नः ॥ ७५९ ॥
मुनिमेवमनुज्ञाप्य, तेऽथ गोमृतकं नवम् । आनिन्युर्विचिकित्सन्ति, न हि जातु चिकित्सकाः ॥ ७६० ॥
मुनेः प्रत्यङ्गमभ्यङ्गं, तेन तैलेन ते व्यधुः । उद्यानमिव कुल्याम्भः, शरीरान्तस्तदानशे ॥ ७६१ ॥
तैलेनाऽत्युष्णवीर्येण, जज्ञे निःसंज्ञको मुनिः । योग्यमुग्रस्य हि व्याधेः, शान्त्यामत्युग्रमौषधम् ॥ ७६२ ॥
आकुलास्तेन तैलेन, कृमयस्तत्कलेवरात् । तस्थुर्बहिर्जलेनेव, वामलूरात् पिपीलिकाः ॥ ७६३ ॥
जीवानन्दस्ततो रत्नकम्बलेन समन्ततः । मुनिमाच्छादयामास, शशीव ज्योत्स्नया नभः ॥ ७६४ ॥
कृमयोऽथ न्यलीयन्त, शीतत्वाद् रत्नकम्बले । शैवले ग्रीष्ममध्याह्नतप्ताः शफरिका इव ॥ ७६५ ॥
मन्दमन्दोलयन् वैद्यः, कम्बलं गोशवोपरि । कृमीनपातयदहो !, सर्वत्राऽद्रोहिता सताम् ॥ ७६६ ॥
जन्तुजीवातुभिर्जीवानन्दोऽमृतरसैरिव । मुनिमाश्वासयामास, ततो गोशीर्षचन्दनैः ॥ ७६७ ॥
कृमयस्त्वग्गता एव, ह्यमी निरसरन्निति । तैलाभ्यङ्गं मुनेर्भूयो, जीवानन्दोऽथ निर्ममे ॥ ७६८ ॥
तेनाऽभ्यङ्गेन भूयोऽपि, भूयांसो मांसगा अपि । निरीयुः कृमयो वातेनोदानेन रसा इव ॥ ७६९ ॥
तथैवाच्छादने रत्नकम्बले कृमयोऽलगन् । अलक्तकपटे दघ्नोऽतिक्रान्तद्व्यहस्येव जन्तवः ॥ ७७० ॥
तस्मिन् गोमृतके भूयस्तान् कृमीन् रत्नकम्बलात् । तथैवाऽपातयदहो !, भिषजो बुद्धिकौशलम् ॥ ७७१ ॥
गोशीर्षचन्दनरसासारैराप्याययन्मुनिम् । जीवानन्दोऽम्भोद इव, वृष्ट्या ग्रीष्मार्दितं द्विपम् ॥ ७७२ ॥
भूयोऽभ्यङ्गेन निरयुः, कृमयोऽस्थिगता अपि । न वज्रपञ्जरेऽप्यस्ति, स्थानं रुष्टे बलीयसि ॥ ७७३ ॥
रत्नकम्बललग्नांस्तान्, पुनर्गोमृतके कृमीन् । स चिक्षेपाऽधमं स्थानमधमानां हि युज्यते ॥ ७७४ ॥
गोशीर्षचन्दनरसैर्विलिलेप मुनिं पुनः । भक्त्या परमया देवमिव सद्यो भिषग्वरः ॥ ७७५ ॥
संरोपणौषधैर्जातनवत्वक् कान्तिमान् मुनिः । चकासामास निर्मृष्टकाञ्चनप्रतिमेव सः ॥ ७७६ ॥
तैर्मस्मिद्क्षैः क्षमितः, स क्षमाक्षमणस्ततः । ययौ विहर्तुमन्यत्र, नास्था क्वाऽपि हि तादृशाम् ॥ ७७७ ॥
ततोऽवशिष्टगोशीर्षचन्दनं रत्नकम्बलम् । तत्र विक्रीय जगृहुस्ते स्वर्णं बुद्धिशालिनः ॥ ७७८ ॥

---

१ चिकित्स्यम् । २ वल्लतरैः । * ग्युर्यत्र तं° सं १ ॥ ३ वटवृक्षस्य । ४ सादमिजाकम् । ५ वल्मीकात् । ६ मत्स्याः । ७ जन्तुजीवनप्रदैः । † °कपुटे आ ॥ ८ अतिक्रान्तदिनद्वयस्य । ‡ निरीयुः संता ॥ § संरोहणौ° खं, आ ॥ ¶ °श्रवण° संता ॥

तेन स्वर्णेन ते चैत्यं, सुवर्णेन स्वकेन च । कारयामासुरुत्तुङ्गं, मेरुशृङ्गमिवाऽऽहृतम् ॥ ७७९ ॥
जिनार्चामर्चयन्तस्ते, गुरूपासनतत्पराः । कर्मवत् क्षपयामासुः, कञ्चित् कालं महाशयाः ॥ ७८० ॥
ते षडप्येकदा जातसंवेगाः साधुसन्निधौ । धीमन्तो जगृहुर्दीक्षां, मर्त्यजन्मतरोः फलम् ॥ ७८१ ॥
ते विजह्रुः पुरि पुरो, ग्रामे ग्रामाद् वने वनात् । तिष्ठन्तो नियतं कालं, राशौ राशेरिव ग्रहाः ॥ ७८२ ॥
शाणैरिव तपोभिस्ते, तूर्यषष्ठाष्टमादिभिः । चारित्ररत्नं विदधुर्निर्मलं निर्मलादपि ॥ ७८३ ॥
अपीडयन्तो दातारं, प्राणधारणकारणात् । पारणे जगृहुर्भिक्षां, ते मधुव्रतवृत्तयः ॥ ७८४ ॥
अवलम्बितधैर्यास्ते, क्षुत्पिपासातपादिकान् । परीषहान् सहन्ते स्म, प्रहारान् सुभटा इव ॥ ७८५ ॥
सेनाङ्गानीव चत्वारि, मोहराजस्य सर्वतः । चतुरोऽपि कषायांस्ते, जिग्युरस्त्रैः क्षमादिभिः ॥ ७८६ ॥
कृत्वा संलेखनामादौ, द्रव्यतो भावतश्च ते । भेजिरेऽनशनं कर्मशैलनिर्नाशनाशनिम् ॥ ७८७ ॥
समाधिभाजस्ते पञ्चपरमेष्ठिनमस्क्रियाम् । स्मरन्तस्तत्यजुर्देहं, न हि मोहो महात्मनाम् ॥ ७८८ ॥
षडपि द्वादशे कल्पेऽच्युतनामनि तेऽभवन् । शक्रसामानिकास्तादृग्, न सामान्यफलं तपः ॥ ७८९ ॥
आयुस्ते पूरयित्वा द्वाविंशतिं सागरोपमान् । ततोऽच्यवन्ताऽच्यवनं, न हि मोक्षं विना क्वचित् ॥ ७९० ॥
जम्बूद्वीपाभिधे द्वीपे, विदेहेषु च पूर्वतः । विजये पुष्कलावत्यां, महाम्भोनिधिसन्निधौ ॥७९१॥
नगर्यां पुण्डरीकिण्यां, वज्रसेनस्य भूपतेः । धारिण्यां जज्ञिरे राज्ञ्यां, तेषु पञ्च क्रमात् सुताः ॥७९२॥
तत्र वैद्यस्य जीवोऽभूद्, वज्रनाभोऽभिधानतः । चतुर्दशमहास्वप्नसूचितः प्रथमः सुतः ॥ ७९३ ॥
राजपुत्रस्य जीवस्तु, द्वितीयो बाहुसंज्ञया । मन्त्रिपुत्रस्य जीवोऽपि, सुबाहुरिति नामतः ॥ ७९४ ॥
नाम्ना पीठमहापीठौ, श्रेष्ठिसार्थेशपुत्रयोः । जीवौ जीवः केशवस्य, सुयशा राजपुत्रकः ॥ ७९५ ॥
सुयशाः शिश्रिये वज्रनाभं बाल्यात् प्रभृत्यपि । स्नेहः प्राग्भवसम्बद्धो, ह्यनुबध्नाति बन्धुताम् ॥७९६॥
तेऽवर्द्धन्त क्रमाद् राजसूनवः सुयशाः स च । नरभावमिवापन्नाः, षड्वर्षधरपर्वताः ॥ ७९७ ॥
वाहयन्तो मुहुर्वाहान्, वाह्याल्यां ते महौजसः । विभराञ्चक्रिरेऽनेकरूपरेवन्तविभ्रमम् ॥ ७९८ ॥
कलाभ्यासे कलाचार्योऽभून् तेषां साक्षिमात्रकः । प्रादुर्भवन्ति महतां, स्वयमेव यतो गुणाः ॥ ७९९ ॥
शैलानपि शिलातोलं, तेषां तोलयतां भुजैः । अपूर्यत बलक्रीडा, न केनाऽपि मनागपि ॥ ८०० ॥
अथ लोकान्तिकैर्देवैरन्तिकीभूय भूपतिः । वज्रसेनो व्यज्ञपीदं, स्वामिंस्तीर्थं प्रवर्त्तय ॥ ८०१ ॥
वज्रसेनस्ततो वज्रनाभं वज्रिसमौजसम् । राज्ये निवेशयामास, स्वमिवाऽपरमर्चितः ॥ ८०२ ॥
सांवत्सरिकदानेन, प्रीणयामास मेदिनीम् । अम्भोधर इवाऽम्भोभिर्वज्रसेननृपस्ततः ॥ ८०३ ॥
देवासुरनृदेवैश्च, कृतनिष्क्रमणोत्सवः । गत्वोद्यानमलञ्चक्रे, स व्योमेव हिमद्युतिः ॥ ८०४ ॥
स्वयम्बुद्धः स भगवांस्तत्र दीक्षामुपाददे । उदपद्यत च ज्ञानं, मनःपर्ययसंज्ञकम् ॥ ८०५ ॥
आत्मारामः साम्यधनो, निर्ममो निष्परिग्रहः । प्रावर्त्तत विहर्त्तुं क्ष्मां, स नानाभिग्रहः प्रभुः ॥ ८०६ ॥
भ्रातृभ्यो वज्रनाभोऽपि, प्रत्येकं विषयान् ददौ । लोकपालैरिवेन्द्रोऽभान्, स च तैर्नित्यसेवकैः ॥८०७॥
क्षत्ताऽभून् तस्य सुयशा, अरुणस्तरणेरिव । आत्मानुरूपं कर्त्तव्यं, सारथिर्हि महारथैः ॥ ८०८ ॥
उत्पेदे वज्रसेनस्य, घातिकर्ममलक्षयात् । उद्योतो दर्पणस्येव, केवलज्ञानमुज्ज्वलम् ॥ ८०९ ॥
तदा च वज्रनाभस्य, प्रविवेश महीपतेः । चक्रमायुधशालायामधरीकृतभास्करम् ॥ ८१० ॥
त्रयोदश च रत्नानि, तस्याऽऽसन्नपराण्यपि । सम्पद्धि पुण्यमानेनाऽम्भोमानेनेव पद्मिनी ॥ ८११ ॥
नवाऽपि निधयस्तस्याऽभवन् सेवाविधायिनः । आकृष्टाः प्रवलैः पुण्यैर्गन्धैरिव मधुव्रताः ॥ ८१२ ॥
सोऽशेषं साधयामास, विजयं पुष्कलावतीम् । चक्रे च चक्रवर्त्तित्वाभिषेकोऽस्याऽखिलैर्नृपैः ॥ ८१३ ॥

१ सूर्यपुत्र । २ चन्द्र । ३ देशान् । ४ सारथि ।

भुञ्जानस्याऽप्यस्य भोगान्, धर्मे धीरधिकाधिकम् । वयसो वर्द्धमानस्य, स्पर्द्धयेव व्यवर्द्धत ॥ ८१४ ॥
क्रमादस्य प्रभवन्त्या, भववैराग्यसम्पदा । बंहिष्ठा धर्मधीरासीद्, वल्लीवाऽऽ[1]वालवारिणा ॥ ८१५ ॥
एकदा विहरंस्तत्र, वज्रसेनजिनेश्वरः । परमानन्दजननः, साक्षान्मोक्ष इवाऽऽययौ ॥ ८१६ ॥
स्वामी समवसरणे, ततश्चैत्यतरोस्तले । कर्णामृतप्रपां धर्मदेशनामुपचक्रमे ॥ ८१७ ॥
सबन्धुर्वज्रनाभोऽपि, जगद्बन्धोर्जिनप्रभोः । राजहंस इवाऽऽभ्यागादुपपादाम्बुजं मुदा ॥ ८१८ ॥
स त्रिः प्रदक्षिणीकृत्य, प्रणम्य च जगत्पतिम् । अनुजन्मेव शक्रस्य, पृष्ठतः समुपाविशत् ॥ ८१९ ॥
स बोधिमुक्ताजननीं, भव्यमानसशुक्तिषु । देशनां [2]स्वातिवृष्ट्याभां, शुश्राव श्रावकाग्रणीः ॥ ८२० ॥
गिरं भगवतः शृण्वन्, मृगो गीतिमिवोन्मनाः । हर्षाद् विचिन्तयामास, स एवं भूमिवासवः ॥८२१॥
असावपारः संसारः, सर[3]स्वानिव दुस्तरः । तस्याऽपि तारकस्तातो, दिष्ट्याऽसौ विष्टपाधिपः ॥ ८२२ ॥
अन्धकार इवाऽत्यन्तं, मोहोऽन्धङ्करणो नृणाम् । तस्याऽयमभितो भेत्ता, भगवान् भानुमानिव ॥ ८२३ ॥
चिरकालभवश्चाऽयं, महाव्याधिरिवोल्वणः । अचिकित्स्यः कर्मराशिस्तातस्तस्य चिकित्सकः ॥ ८२४ ॥
यद्वा किमन्यत् सर्वेषां, दुःखानामेष नाशनः । सुखानामेकजननः, करुणामृतसागरः ॥ ८२५ ॥
स्वामिन्येवंविधेऽप्यस्मिन्नहो ! मोहप्रमद्वरैः । अस्माभिरात्मनैवाऽऽत्मा, वञ्चितोऽसौ कियच्चिरम् ? ॥८२६॥
चक्रवर्त्ती ततो धर्मचक्रवर्त्तिनमानतः । इति विज्ञपयामास, भक्तिगद्गदया गिरा ॥ ८२७ ॥
अर्थप्रसाधनपरैर्नीतिशास्त्रैश्चिरं मम । मतिः कदर्थिता नाथ !, क्षेत्रभूः [4]कुशिकैरिव ॥ ८२८ ॥
तथा विषयलोलेन, नित्यं नेपथ्यकर्मभिः । अयमात्मा नटेनेव, चिरं विनटितो मया ॥ ८२९ ॥
इदं हि मम साम्राज्यमर्थकामनिबन्धनम् । चिन्त्यते यस्तु धर्मोऽत्र, स स्यात् पापानुबन्धकः ॥ ८३० ॥
तातस्य पुत्रो भूत्वाऽपि, भवाम्भोधौ भ्रमामि चेत् । तत् कः पुरुषकारः स्यादन्यसाधारणस्य मे ? ॥८३१॥
अपालयमिदं राज्यं, युष्मद्दत्तमहं यथा । तथा संयमसाम्राज्यं, पालयिष्यामि देहि मे ॥ ८३२ ॥
कृत्वा च पुत्रसाद् राज्यं, निजान्वयनभोरवि । व्रतं भगवतः पार्श्वे, प्रपेदे चक्रवर्त्यथ ॥ ८३३ ॥
बाह्वादयोऽपि जगृहुस्तत्सो[5]दर्यास्तदा व्रतम् । पित्रा ज्येष्ठेन चोपात्तं, तद्धि तेषां क्रमागतम् ॥ ८३४ ॥
सुयशाः सारथिः सोऽपि, पादान्ते धर्मसारथेः । अनुस्वामि प्रवव्राज, भृत्याः स्वाम्यनुगामिनः ॥८३५॥
श्रुतसागरपारीणो, वज्रनाभोऽभवत् क्रमात् । प्रत्यक्षा द्वादशाङ्गीव, जङ्गमैकाङ्गतां गता ॥ ८३६ ॥
एकादशाङ्ग्याः पारीणा, जाता बाह्वादयोऽपि ते । क्षयोपशमवैचित्र्याच्चित्रा हि श्रुतसम्पदः ॥ ८३७ ॥
तीर्थकृत्पादसेवायास्तपसो दु[*]श्चरस्य च । असन्तुष्टाः सदाऽभूवंस्ते सन्तोषधना अपि ॥ ८३८ ॥
ते नित्यं तीर्थकृद्वाणीपीयूषरसपायिनः । अपि मासोपवासादितपसा नैव चक्लमुः ॥ ८३९ ॥
भगवान् वज्रसेनोऽपि, शुक्लध्यानं श्रितोऽन्तिमम् । निर्वाणं प्राप गीर्वाणप्रपञ्चितमहोत्सवम् ॥ ८४० ॥
स[†]नाभिरिव धर्मस्य, वृतो व्रतस[6]नाभिभिः । मुनिभिर्वज्रनाभोऽपि, विजहार वसुन्धराम् ॥ ८४१ ॥
स्वामिना वज्रनाभेन, बाह्वाद्याः स च सारथिः । सनाथा जज्ञिरे पञ्चेन्द्रियाणीवाऽन्तरात्मना ॥८४२॥
तेषां योगप्रभावेण, सर्वाः खेलादिलब्धयः । औषध्य इव शैलानामाविरासन् शशित्विषा ॥ ८४३ ॥
तेषां श्लेष्मलवेनाऽपि, संश्लिष्टं कुष्ठिनो वपुः । कोटिवेधरसेनेव, ताम्रराशिः सुवर्ण्यभूत् ॥ ८४४ ॥
कर्णनेत्रादिभूरङ्गभूश्च तेषामभून्मलः । कस्तूरिकापरिमलो, रोगघ्नः सर्वरोगिणाम् ॥ ८४५ ॥
तेषां वपुःपरिस्पर्शमात्रादपि शरीरिणः । सरुजो नीरुजोऽभूवन्, सुधाम्भःस्नपनादिव ॥ ८४६ ॥
तदङ्गसङ्गादम्भोदमुक्तं नद्यादिवाद्यपि । सर्वरोगान् पयोऽहार्षीत्, तमांसीवाऽंशुमन्महः ॥ ८४७ ॥

---

१ आलवाल. । २ स्वातिनक्षत्रवृष्टितुल्याम् । ३ समुद्रः । ४ दर्भैः । * दुष्करस्य स १ ॥ † सेनाभि° सं १ ॥
५ सहोदरः । ६ व्रतसहितैः ।

विषादिदोषाः प्राणश्यंस्तदङ्गस्पर्शिवायुना । गन्धसिन्धुरदानाम्भोगन्धेनेवाऽन्यसिन्धुराः ॥ ८४८ ॥
विषसम्पृक्तमन्नादि, तेषां पात्रे मुखेऽपि वा । सम्प्रविष्टं सुधाकुण्ड, इव निर्विषतामगात् ॥ ८४९ ॥
वचनश्रवणात् तेषां, विषं मन्त्राक्षरादिव । बाधा महाविषव्याधिबाधितस्याऽप्यपासरत् ॥ ८५० ॥
नखाः केशा रदाश्चान्यदपि तेषां शरीरजम् । भेजे भेषजतां सर्वं, मुक्तात्वं शुक्तिवारिवत् ॥ ८५१ ॥
आसन्नणीयसीं मूर्त्तिं, तथा ते कर्त्तुमीश्वराः । यथा सञ्चरितुमलं, सूचीरन्ध्रेऽपि तन्तुवत् ॥ ८५२ ॥
वपुर्महत्तरीकर्त्तुं, शक्तिस्तेषां बभूव सा । यया सुमेरुशैलोऽपि, जानुदघ्नो व्यधीयत ॥ ८५३ ॥
तेषां वपुर्लघीयस्त्वसामर्थ्यं तदजायत । समुल्लङ्घे तद् येन, मारुतस्याऽपि लाघवम् ॥ ८५४ ॥
वपुर्गरिमशक्तिश्च, वज्रादप्यतिशायिनी । साऽभूत् तेषां न या सह्या, शक्राद्यैस्त्रिदशैरपि ॥ ८५५ ॥
प्राप्तिशक्तिरभूत् तेषां, भूस्थानां स्पर्शनं यया । अङ्गुल्यग्रेण मेर्वग्रग्रहादेर्वृक्षपत्रवत् ॥ ८५६ ॥
साऽभूत् प्राकाम्यशक्तिश्च, भुवीवाऽप्सु यया गतिः । निमज्जनोन्मज्जने च, पानीय इव भुव्यपि ॥८५७॥
आसीत् तेषां तदैश्वर्यं, प्रभवन्ति स्म येन ते । चक्रभृत्त्रिदशाधीशऋद्धिमाधातुमात्मनः ॥ ८५८ ॥
तेषां वशित्वसामर्थ्यं, तदपूर्वमजायत । भेजिरे वशितां येन, स्वतन्त्राः क्रूरजन्तवः ॥ ८५९ ॥
तेषामप्रतिघातित्वशक्तिः साऽभूद् यया खलु । अद्रिमध्येऽपि निःसङ्गं, गमनं रन्ध्रमध्यवत् ॥ ८६० ॥
तदन्तर्द्धानसामर्थ्यमभूत् तेषामनाहतम् । नभस्वतामिवाऽदृश्यरूपता येन सर्वतः ॥ ८६१ ॥
प्रावीण्यं कामरूपित्वे, तत् तेषामुल्ललास च । अलं पूरयितुं लोकं, नानारूपैर्यथा निजैः ॥ ८६२ ॥
तेषामाविरभूद् बीजबुद्धिता सातिशायिनी । एकार्थबीजतोऽनेकार्थबीजानां प्ररोहिणी ॥ ८६३ ॥
ते कोष्ठबुद्धयोऽभूवन्, कोष्ठप्रक्षिप्तधान्यवत् । विना स्मरणमर्थानां, प्राक् श्रुतानां तथास्थितेः ॥ ८६४ ॥
आद्यादन्त्यान्मध्यमाद् वा, श्रुतादेकपदादपि । सर्वार्थग्रन्थबोधात् तेऽभूवन् पदानुसारिणः ॥ ८६५ ॥
एकं वस्तु समुद्धृत्याऽन्तर्मुहूर्त्ताच्छ्रुतोदधेः । अवगाहनसामर्थ्यात्, ते मनोबलिनोऽभवन् ॥ ८६६ ॥
अन्तर्मुहूर्त्तमात्रेण, मातृकामात्रलीलया । गुणयन्तः श्रुतं सर्वमासन् वाग्बलिनश्च ते ॥ ८६७ ॥
प्रपद्यमानाः प्रतिमां, चिरकालमपि स्थिराम् । श्रमक्लमाभ्यां रहितास्ते कायबलिनोऽभवन् ॥ ८६८ ॥
अभूवन्नमृतक्षीरमध्वाज्यास्रविणश्च ते । पात्रस्थस्य कदन्नस्याऽप्यमृतादिरसागमात् ॥ ८६९ ॥
दुःखार्दितेष्वमृतादिपरिणामाद् गिरां च ते । अमृतक्षीरमध्वाज्यास्रविणः साधु जज्ञिरे ॥ ८७० ॥
अन्नस्य पात्रपतितस्याऽल्पस्याऽप्यतिदानतः । अक्षयेणाऽक्षीणमहानसर्द्धयश्च तेऽभवन् ॥ ८७१ ॥
तीर्थकृत्पर्षदीवाऽल्पदेशेऽपि प्राणिनां सुखम् । असङ्ख्यानां स्थितेरासंस्ते चाऽक्षीणमहालयाः ॥ ८७२ ॥
एकेनाऽपीन्द्रियेणाऽन्येन्द्रियार्थस्योपलम्भनात् । ते बभूवुश्च सम्भिन्नस्रोतोलब्धिमहर्द्धयः ॥ ८७३ ॥
जङ्घाचारणलब्धिश्च, तेषामजनि सा यया । रुचकद्वीपमेकेनोत्पातेन प्राप्तुमीश्वराः ॥ ८७४ ॥
वलन्तो रुचकद्वीपादेकेनोत्पतनेन ते । नन्दीश्वरेऽलमायातुं, द्वितीयेन यतो गताः ॥ ८७५ ॥
ते चोर्द्ध्वगत्यामेकेन, समुत्पतनकर्मणा । उद्यानं पाण्डकं गन्तुमलं मेरुशिरःस्थितम् ॥ ८७६ ॥
ततस्ते वलिता एकेनोत्पातेन तु नन्दनम् । अलं गन्तुं द्वितीयेन, प्रथमोत्पातभूमिकाम् ॥ ८७७ ॥
ते विद्याचारणर्द्ध्याऽऽप्तुमेकेनोत्पातकर्मणा । मानुषोत्तरमन्येन, द्वीपं नन्दीश्वरं क्षमाः ॥ ८७८ ॥
एकोत्पातात् ततश्चाप्तुं, पूर्वोत्पातमहीतलम् । तिर्यग्यानक्रमेणोर्द्ध्वमप्यलं ते गतागते ॥ ८७९ ॥
आसीदाशीविषर्द्धिश्च, निग्रहाऽनुग्रहक्षमा । तेषामन्या अप्यभूवन्, बहुलं बहुलब्धयः ॥ ८८० ॥
लब्धीनामुपयोगं ते, जगृहुर्न कदाचन । मुमुक्षवो निराकाङ्क्षा, वस्तुषूपस्थितेष्वपि ॥ ८८१ ॥
इतश्च तीर्थकृन्नामगोत्रकर्मार्जितं दृढम् । स्वामिना वज्रनाभेन, विंशत्या स्थानकैरिति ॥ ८८२ ॥

तत्रैकमर्हतामर्हत्प्रतिमानां च पूजया । अवर्णवादव्यापेधैः, सद्भूतार्थस्तवैरपि ॥ ८८३ ॥
सिद्धानां सिद्धिस्थानेषु, प्रतिजागरणोत्सवैः । यथावस्थितसिद्धत्वकीर्त्तनाच्च द्वितीयकम् ॥ ८८४ ॥
बालक-ग्लान-शैक्षादियतीनां यस्त्वनुग्रहः । प्रवचनस्य वात्सल्यं, स्थानकं तत् तृतीयकम् ॥ ८८५ ॥
आहारौषधवस्त्रादिदानादञ्जलियोजनात् । गुरूणामतिवात्सल्यकरणं तु तुरीयकम् ॥ ८८६ ॥
विंशत्यब्दपर्यायाणां, षष्टिवर्षायुषां तथा । समवायभृतां भक्तिः, स्थविराणां तु पञ्चमम् ॥ ८८७ ॥
अर्थव्यपेक्षया स्वस्माद्, बहुश्रुतभृतां सदा । अन्नवस्त्रादिदानेन, षष्ठं वात्सल्यनिर्मितिः ॥ ८८८ ॥
सुविकृष्टतपःकर्मनिर्माणानां तपस्विनाम् । भक्तिविश्रामणादानैर्वात्सल्यमिति सप्तमम् ॥ ८८९ ॥
द्वादशाङ्गे श्रुते प्रश्नवाचनादिभिरन्वहम् । सूत्राऽर्थोभयगो ज्ञानोपयोगो यस्तदष्टमम् ॥ ८९० ॥
शङ्कादिदोषरहितं, स्थैर्यादिगुणभूषितम् । शमादिलक्षणं सम्यग्दर्शनं नवमं पुनः ॥ ८९१ ॥
ज्ञानदर्शनचारित्रोपचारैश्च चतुर्विधः । कर्मणां विनयनतो, विनयो दशमं पुनः ॥ ८९२ ॥
इच्छामिथ्याकरणादियोगेष्वावश्यकेष्वलम् । अतीचारपरीहारो, यत्नादेकादशं तु तत् ॥ ८९३ ॥
अहिंसादिसमित्यादिमूलोत्तरगुणेषु या । प्रवृत्तिर्निरतीचारा, स्थानकं द्वादशं तु तत् ॥ ८९४ ॥
शुभध्यानस्य करणं, क्षणे क्षणे लवे लवे । प्रमादपरिहारेण, स्थानमेतत् त्रयोदशम् ॥ ८९५ ॥
अनाबाधेन मनसो, वपुषश्च निरन्तरम् । यथाशक्ति तपःकर्म, स्थानमेतच्चतुर्दशम् ॥ ८९६ ॥
अन्नादीनां संविभागो, यथाशक्ति तपस्विषु । मनोवाक्कायशुद्ध्या यः, स्थानं पञ्चदशं हि तत् ॥ ८९७ ॥
आचार्यादीनां दशानां, भक्तपानाऽऽसनादिभिः । वैयावृत्यस्य करणं, स्थानकं षोडशं तु तत् ॥ ८९८ ॥
चतुर्विधस्य सङ्घस्य, सर्वापायनिषेधनात् । मनःसमाधिजननं, स्थानं सप्तदशं हि तत् ॥ ८९९ ॥
सूत्रस्याऽर्थस्योभयस्याऽप्यपूर्वस्य प्रयत्नतः । अन्वहं यदुपादानं, स्थानमष्टादशं तु तत् ॥ ९०० ॥
श्रद्धानेनोद्भासनेनाऽवर्णवादच्छिदादिना । श्रुतज्ञानस्य भक्तिस्तत्, स्थानमेकोनविंशकम् ॥ ९०१ ॥
विद्यानिमित्तकवितावादधर्मकथादिभिः । प्रभावना शासनस्य, तद् विंशतितमं पुनः ॥ ९०२ ॥
अप्येकं तीर्थकृन्नामकर्मणो बन्धकारणम् । मध्यादेभ्यः स भगवान्, सर्वैरपि बबन्ध तत् ॥ ९०३ ॥
बाहुनाऽपि च साधूनां, वैयावृत्यं वितन्वता । चक्रवर्त्तिभोगफलं, कर्मोपार्जितमात्मनः ॥ ९०४ ॥
विश्रामणां महर्षीणां, कुर्वाणेन तपोजुषाम् । सुबाहुना बाहुबलं, लोकोत्तरमुपार्जितम् ॥ ९०५ ॥
अहो ! धन्याविमौ वैयावृत्य-विश्रामणाकरौ । इति बाहु-सुबाहू तौ, वज्रनाभस्तदाऽस्तवीत् ॥ ९०६ ॥
तौ तु पीठ-महापीठौ, पर्यचिन्तयतामिति । उपकारकरो यो हि, स एवेह प्रशस्यते ॥ ९०७ ॥
आगमाध्ययनध्यानरतावनुपकारिणौ । को नौ प्रशंसत्वथवा, कार्यकृद्दृश्यको जनः ॥ ९०८ ॥
ताभ्यामनालोचयद्भ्यामितीर्ष्याकृतदुष्कृतम् । मायामिथ्यात्वयुक्ताभ्यां, कर्म स्त्रीत्वफलं कृतम् ॥९०९॥
ते षडप्यनतीचारां, खड्गधारासहोदराम् । प्रव्रज्यां पालयामासुः, पूर्वलक्षांश्चतुर्दश ॥ ९१० ॥
संलेखनाद्वयपुरःसरमेकधीरास्ते पादपोपगमनानशनं प्रपद्य ।
सर्वार्थसिद्धिमधिगम्य दिवं त्रयस्त्रिंशाब्ध्यायुषः सुरवराः षडपि ह्यभूवन् ॥ ९११ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये प्रथमे पर्वणि धनादिद्वादशभववर्णनो नाम प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः ।

इतश्च जम्बूद्वीपस्य, विदेहेष्वपरेषु पूः । नाम्नाऽपराजितेत्यस्ति, द्विषद्भिरपराजिता ॥ १ ॥
तस्यां वसुमतीनाथो, विक्रमाक्रान्तविष्टपः । ईशानचन्द्र इत्यासीदीशानेन्द्र इव श्रिया ॥ २ ॥
तत्र श्रेष्ठी श्रिया श्रेष्ठः, श्रेष्ठो[1] धर्मैकशालिनाम् । नाम्ना चन्दनदासोऽभूज्जगदानन्दचन्दनः ॥ ३ ॥
जगतो नयनानन्दनिदानं तस्य नन्दनः । नाम्ना सागरचन्द्रोऽभूत्, सागरस्येव चन्द्रमाः ॥ ४ ॥
ऋजुशीलः सदैवाऽसौ, धर्मकर्मा विवेकवान् । नगरस्याऽखिलस्याऽपि, बभूव मुखमण्डनम् ॥ ५ ॥
सोऽन्यदेशानचन्द्रस्य, राज्ञो दर्शनहेतवे । सेवोपनतसामन्ताकुलं राजकुलं ययौ ॥ ६ ॥
स तदाऽऽसनताम्बूलदानादिप्रतिपत्तितः । महास्नेहेन ददृशे, पित्रेव पृथिवीभुजा ॥ ७ ॥

अत्रान्तरे पराभूतशङ्खध्वनितया गिरा । राजद्वारे कश्चिदेत्याऽपाठीन्मङ्गलपाठकः ॥ ८ ॥
उद्यतोद्यानपालीव, त्वदुद्यानेऽद्य भूपते ! । सज्जीकृतानेकपुष्पा, वसन्तश्रीर्विजृम्भते ॥ ९ ॥
विकासिकुसुमामोदसुरभीकृतदिग्मुखम् । सम्भावय तदुद्यानं, महेन्द्र इव नन्दनम् ॥ १० ॥
राजाऽप्याऽऽज्ञापयद् द्वाःस्थं, यत् प्रातरखिलैर्जनैः । गन्तव्यमस्मदुद्यानमेवमाघोष्यतां पुरे ॥ ११ ॥
त्वयाऽप्येतव्यमुद्यानमिति श्रेष्ठिसुतं नृपः । स्वयमादिशदेवं हि, प्रसन्नस्वामिलक्षणम् ॥ १२ ॥
ततो राज्ञा विसृष्टोऽसौ, हृष्टः स्वावसथं[2] ययौ । मित्रायाऽशोकदत्ताय, तां नृपाज्ञां जगाद च ॥ १३ ॥
द्वितीयेऽह्नि ययौ राजाऽप्युद्यानं सपरिच्छदः[3] । पौरलोकोऽप्यगात् तत्र, प्रजा राजानुयायिनी ॥ १४ ॥
वसन्त इव मलयानिलेन श्रेष्ठिसूरपि । सुहृदाऽशोकदत्तेन, सहोद्यानं जगाम सः ॥ १५ ॥
पुष्पावचयसन्दर्भगीतनृत्यादिभिस्ततः । प्रवृत्तः क्रीडितुं लोकः, स्थितः कामस्य शासने ॥ १६ ॥
स्थाने स्थाने कृतास्थानाः, पौराः क्रीडाविधायिनः । आवासितस्मरनृपस्कन्धावारधुरां दधुः ॥ १७ ॥
पदे पदे सम्प्रवृत्तगीतातोद्यमहाध्वनौ । जयायाऽन्येन्द्रियार्थानामिवाऽभ्यधिकमुत्थिते ॥ १८ ॥
प्रत्यासन्नादथैकस्मादकस्मात् तरुगह्वरात् । त्रायध्वं त्रायध्वमिति, त्रस्तस्त्रीध्वनिरुत्थितः ॥ १९ ॥
तया समाकृष्ट इव, गिरा कर्णप्रविष्टया । किमेतदिति सम्भ्रान्तः, सागरः समधावत ॥ २० ॥
श्रेष्ठिनः पूर्णभद्रस्य, कन्यकां प्रियदर्शनाम् । स बन्दिभिर्धृतां तत्राऽपश्यदेणीं[4] वृकैरिव[5] ॥ २१ ॥
एकस्य बन्दिनो हस्तमामोट्याऽथाऽऽददे क्षुरीम् । श्रेष्ठिसूनुर्विषभृतो[6], ग्रीवां भङ्क्त्वा मणीमिव ॥ २२ ॥
तस्येति विक्रमं दृष्ट्वा, बन्दिनस्ते विदुद्रुवुः । व्याघ्रा अपि पलायन्ते, ज्वलज्ज्वलनदर्शनात् ॥ २३ ॥
इति सागरचन्द्रेण, बन्दिभ्यः प्रियदर्शना । एधोहारिभ्यो[7] माकन्दलतेव[8] परिमोचिता ॥ २४ ॥
परोपकारव्यसनी, क एष पुरुषाग्रणीः । आगादिह समाकृष्टो, दिष्ट्या मद्भाग्यसम्पदा ? ॥ २५ ॥
स्मररूपाधरीकर्त्ता, भर्त्ता भाव्ययमेव मे । चिन्तयन्तीति स्वं धाम, जगाम प्रियदर्शना ॥ २६ ॥
अनुस्यूतामिव वहन्, हृदये प्रियदर्शनाम् । अशोकदत्तसहितः, श्रेष्ठिपुत्रोऽभ्यगाद् गृहम् ॥ २७ ॥

अथ चन्दनदासेन, स परम्परयाऽखिलः । अवाबुध्यत वृत्तान्तः, केन छाद्येत तादृशम् ? ॥ २८ ॥
स दध्याविति युक्तोऽस्य, रागोऽधिप्रियदर्शनम् । अजर्यं पङ्कजिन्या हि, राजहंसस्य युज्यते ॥ २९ ॥
इयमुद्भटताऽकारि, यत् तदा तन्न साम्प्रतम् । कार्यं सपौरुषेणाऽपि, वणिजा न हि पौरुषम् ॥ ३० ॥
सङ्गः[9] किञ्च ऋजोरस्या[10]ऽशोकदत्तेन मायिना । न साधुर्जातु बदरीद्रुणेव कदलीतरोः ॥ ३१ ॥
विचिन्त्येति चिरं श्रेष्ठी, स समाहूय सागरम् । भद्रद्विपं निषादीव[11], साम्ना[12]ऽऽरभत शासितुम् ॥ ३२ ॥

सर्वशास्त्रानुसारेण, व्यवहारेण च स्वयम् । वत्स ! सम्यगभिज्ञोऽसि, तथाऽपि ज्ञाप्यसे मया ॥ ३३ ॥

---

१ अग्रणीः । २ स्वावासम् । ३ सपरिवारः । ४ हरिणीम् । ५ वनश्वानैः । ६ सर्पस्य । ७ काष्ठहारिभ्यः । ८ आम्रलतेव । ९ सङ्गतिः । १० सरलस्य । ११ महामात्रः । १२ मृदुवचनेन ।

वयं हि वणिजस्तात !, कलाकौशलजीविनः । अनुद्भटाऽऽचारवेषाः, सन्तो गर्ह्यामहे न हि ॥ ३४ ॥
भवितव्यं यौवनेऽपि, भवद्भिर्गूढविक्रमैः । वणिजो लोकसामान्येऽप्यर्थे साशङ्कवृत्तयः ॥ ३५ ॥
सम्पदो विषयक्रीडा, दानं च च्छन्नमेव नः । अलं भवति शोभायै, शरीरमिव योषिताम् ॥ ३६ ॥
आत्मजातेरनुचितं, क्रियमाणं न शोभते । चरणे [1]करभस्येव, बद्धं कनकनूपुरम् ॥ ३७ ॥
ततो निजक्रमौचित्यव्यवहारपरायणैः । दातव्यः प्रहरो वत्स !, गुणानां सम्पदामिव ॥ ३८ ॥
त्याज्योऽसतां च संसर्गो, निसर्गानृजुचेतसाम् । सो[2]ऽलर्कविषवत् कालेनाऽपि यात्येव विक्रियाम् ॥ ३९ ॥
अयं चाऽऽशोकदत्तस्त्वां, मित्रं [3]श्वित्रं तनूमिव । अवाप्तप्रसरो वत्स !, सर्वथा दूषयिष्यति ॥ ४० ॥
मनस्यन्यद् वचस्यन्यत्, क्रियायामन्यदेव हि । गणिकाया इवाऽमुष्याऽत्यन्तमायाजुषः सदा ॥ ४१ ॥
आदरादुपदिश्यैवं, श्रेष्ठिश्रेष्ठे स्थिते सति । इति सागरचन्द्रोऽपि, चिन्तयामास चेतसि ॥ ४२ ॥
कन्याबन्दिव्यतिकरस्तातेन सकलोऽपि सः । विज्ञात इति मन्येऽहमुपदेशदिशाऽनया ॥ ४३ ॥
असावशोकदत्तश्च, तातस्याऽभान्न सङ्गतः । मन्दभाग्यतया पुंसां, गुरवः स्युरनीदृशाः ॥ ४४ ॥
भवत्वेवं तथाऽपीति, विमृश्य मनसि क्षणम् । ऊचे सागरचन्द्रोऽपि, [4]प्रश्रयाश्रितया गिरा ॥ ४५ ॥
*यदादिशति तातस्तत्, कर्तव्यं सूनुरस्मि ते । कृतं तेन कृतेनाऽपि, गुर्वाज्ञा यत्र लङ्घ्यते ॥ ४६ ॥
किन्तु दैवादकाण्डेऽपि, कृत्यं तदुपतिष्ठते । नाऽऽलोच[5]कालहरणं, सहते यन्मनागपि ॥ ४७ ॥
आलोचं कुर्वतोऽ[6]त्येति, कालः कार्यस्य कस्यचित् । पर्ववेलेव [7]जिह्मस्य, पादशौचं वितन्वतः ॥ ४८ ॥
ईदृशेऽप्यागते काले, प्राप्तेऽपि प्राणसंशये । तदेवाऽहं करिष्यामि, तव लज्जाकरं न यत् ॥ ४९ ।
तातेनाऽशोकदत्तस्य, यच्च तादृगुदीरितम् । तद्दोषेण न दोष्यसि, न गुणी तद्गुणेन वा ॥ ५० ॥
यन्ममाऽशोकदत्तेन, मैत्री तत्रेति कारणम् । सहवासः सहपांशुक्रीडनं दर्शनं मुहुः ॥ ५१ ॥
समा जातिः समा विद्या, समं शीलं समं वयः । परोक्षेऽप्युपकारित्वं, सुखदुःखविभागिता ॥ ५२ ॥
अस्मिंश्च कैतवमहं, न पश्यामि मनागपि । मृषा तातस्य कोऽप्याख्यत्, खलाः [8]सर्वङ्कषाः खलु ॥ ५३ ॥
अस्तु वा तादृशो मायाव्येष मे किं करिष्यति ? । एकत्र विनिवेशेऽपि, काचः काचो मणिर्मणिः ॥ ५४ ॥
इत्युक्तः सूनुना श्रेष्ठी, तमूचे बुद्धिमानसि । तथाऽपि ह्यवधातव्यं, दुर्लक्षा हि पराशयाः ॥ ५५ ॥

सोऽथ स्वसूनोर्भावज्ञस्तदर्थं प्रियदर्शनाम् । शीलादिभिर्गुणैः पूर्णां, पूर्णभद्रादयाचत ॥ ५६ ॥
असावु[9]पकृतिक्रीती, त्वत्सुतेन सुता मम । अग्रेऽपीति वदन् पूर्णभद्रोऽमन्यत तद्वचः ॥ ५७ ॥
ततः सागरचन्द्रस्य, प्रियदर्शनया सह । विवाहोऽकारि पितृभिः, शुभे लग्ने शुभे दिने ॥ ५८ ॥
विचिन्तिताया दुन्दुभ्याः, पतनेनेव तौ ततः । [10]मनीषितविवाहेन, मुमुदाते वधूवरौ ॥ ५९ ॥
समानमानसतया, तयोरेकात्मनोरिव । परस्परमवर्द्धिष्ट, प्रीतिः सारसयोरिव ॥ ६० ॥
रेजे सागरचन्द्रेण, सा चन्द्रेणेव चन्द्रिका । सहोदयवती सौम्यदर्शना प्रियदर्शना ॥ ६१ ॥
तयोः शीलभृतो रूपवतोरार्जवशालिनोः । अनुरूपोऽभवद् योगश्चिराद् घटयतो विधेः ॥ ६२ ॥
[11]अविस्रम्भो न जात्वासीदन्योऽन्यप्रत्ययात् तयोः । विपरीतं न शङ्कन्ते, कदाऽपि सरलाशयाः ॥ ६३ ॥

अथ सागरचन्द्रस्य, बहिर्गतवतो गृहे । अशोकदत्तोऽभ्यायासीदूचे च प्रियदर्शनाम् ॥ ६४ ॥
श्रेष्ठिनो धनदत्तस्य, वध्वा मन्त्रयते रहः । नित्यं सागरचन्द्रो यत्, तत्र किं स्यात् प्रयोजनम् ? ॥ ६५ ॥
[12]निसर्गऋज्वी साऽप्यूचे, जानात्येतत् सुहृत् तव । द्वितीयं हृदयं तस्य, त्वं वा जानासि सर्वदा ॥ ६६ ॥

---

१ उष्ट्रस्य । २ हडकयितश्वविषवत् । ३ श्वेतकुष्ठम् । ४ विनयाश्रितया । * अथ श्लोक सं १ पुस्तके न दृश्यते ॥ ५ विचारकालप्रतीक्षणम् । ६ गच्छति । ७ दीर्घसूत्रिण. । ८ सर्वक्षोभकारकाः । ९ उपकारक्रीता । १० मनोऽभीष्टविवाहेन । ११ अविश्वासः । १२ स्वभावसरला ।

रहःसूत्रितकार्याणि, महतां व्यवसायिनाम् । को जानात्यथ जानाति, स कथं कथयेद् गृहे ? ॥ ६७ ॥
उवाचाऽशोकदत्तोऽपि, त्वत्पतेर्यत् तया सह । मन्त्रे प्रयोजनं वेद्मि, तत् परं कथ्यते कथम् ? ॥ ६८ ॥
प्रियदर्शनया किं तदित्युक्तः सोऽब्रवीदिति । त्वया प्रयोजनं यन्मे, सुभ्रु ! तस्याऽपि तत् तया ॥ ६९ ॥
तद्भावाविज्ञया ऋज्वा, प्रियदर्शनया पुनः । मया प्रयोजनं ते किमित्युक्तः सोऽवदत् पुनः ॥ ७० ॥
पुंसो रसान्तरविदः, कस्य न स्यात् सचेतसः । त्वया प्रयोजनं सुभ्रु !, तमेकं त्वत्प्रियं विना ॥ ७१ ॥
आकर्ण्य कर्णसूच्याभं, दुरीहासूचि तद्वचः । सकोपाऽधोमुखीभूय, सा साक्षेपमभाषत ॥ ७२ ॥
रे निर्मर्याद ! पुंस्खेट !, त्वयैतच्चिन्तितं कथम् ? । चिन्तितं वा कथं तूक्तं ?, धिक् साहसमचेतसः ॥ ७३ ॥
किञ्च सम्भावयसि रे !, महात्मानं पतिं मम । आत्मानुरूपमेवैवं, धिक् त्वां मित्रमिषाद् द्विषम् ॥ ७४ ॥
गच्छ मा तिष्ठ रे पाप !, पापं त्वद्दर्शनादपि । इत्याक्रुष्टस्तया शीघ्रं, स दस्युरिव निर्ययौ ॥ ७५ ॥
स गोहत्याकार इवाऽन्धकारमलिनाननः । विमनस्कः समागच्छन्, सागरेण* व्यलोक्यत ॥ ७६ ॥
हे मित्र ! हेतुना केन, त्वमुद्विग्न इवेक्ष्यसे ? । इति सागरचन्द्रेण, सोऽप्रच्छि स्वच्छचेतसा ॥ ७७ ॥
ततः स मायाकूटाद्रिर्दीर्घं निःश्वासमुद्वमन् । विकूणिताधरः किञ्चिद्, दुष्टः कष्टादिवाऽवदत् ॥ ७८ ॥
जाड्यहेतुमिव हिमक्ष्माभृदभ्यर्णवासिनाम् । संसारे वसतां भ्रातः !, पृच्छस्युद्वेगकारणम् ? ॥ ७९ ॥
न यच्छादयितुं नाऽपि, प्रकाशयितुमिष्यते । तदस्थानव्रणमिव, किमपीहोपतिष्ठते ॥ ८० ॥
इत्युदित्वा स्थिते मायादर्शितास्रविलोचने । अशोकदत्ते सोऽमायश्चिन्तयामासिवानिति ॥ ८१ ॥
अहो ! असारः संसारः, पुंसां यत्रेदृशामपि । सन्देहपदमीदृक्षमकस्मादुपजायते ॥ ८२ ॥
अस्य धैर्यादवदतोऽप्यन्तरुद्वेग उच्चकैः । हुताश इव धूमेन, बलाद् बाष्पेण सूच्यते ॥ ८३ ॥
चिन्तयित्वेति सुचिरं, सद्यस्तद्दुःखदुःखितः† । भूयः सागरचन्द्रस्तमित्युवाच सगद्गदम् ॥ ८४ ॥
अप्रकाश्यं न चेद् बन्धो !, तच्छंसोद्वेगकारणम् । दत्त्वा दुःखविभागं मे, स्तोकदुःखो भवाऽधुना ॥ ८५ ॥
अशोकदत्तोऽपीत्यूचे, मम प्राणसमे त्वयि । अन्यदप्यप्रकाश्यं न, वृत्तान्तोऽयं विशेषतः ॥ ८६ ॥
इदं वयस्यो जानाति, सदाऽपि यदिहाऽङ्गना । अनर्थानां प्रसूर्दर्शशर्वरी तमसामिव ॥ ८७ ॥
सागरोऽपि जगादैवमामं किं नाम सम्प्रति । सङ्कटे न्यपतः कस्या, अप्युरग्या इव स्त्रियाः ? ॥ ८८ ॥
प्रत्यूचेऽशोकदत्तोऽपि, नाटयन् कृत्रिमां त्रपाम् । असमञ्जसमूचे मां, चिरं हि प्रियदर्शना ॥ ८९ ॥
लज्जित्वा स्वयमप्येषा, कदाऽपि स्थास्यतीत्यहो ! । मया सलज्जं सावज्ञं, सेयत्कालमुपेक्षिता ॥ ९० ॥
दिने दिने परमसावसतीत्वोचितोक्तिभिः । मां वदन्ती न विरमत्यहो ! स्त्रीणामसद्ग्रहाः ॥ ९१ ॥
अद्य त्वावसथे युष्मदन्वेषणकृते गतः । बन्धो ! निरुद्धोऽस्मि तया, राक्षस्येव छलज्ञया ॥ ९२ ॥
तन्तुबन्धादिव करी, कथञ्चिदपि तद्ग्रहात् । आत्मानं मोचयित्वाऽहमिहाऽगममतिद्रुतम् ॥ ९३ ॥
ततश्चाऽचिन्तयमहं, जीवन्तं मां न मोक्ष्यति । असाविति तदात्मानमद्य व्यापादयामि किम् ? ॥ ९४ ॥
यद्वा न मर्तुमुचितं, मन्मित्रस्य यदीदृशम् । कथयिष्यत्यन्यथाऽसौ, मत्परोक्षे तु तत्तथा ॥ ९५ ॥
अथवा कथयाम्येतत्, सर्वं स्वसुहृदः स्वयम् । यथाऽस्यां कृतविश्वासो, नाऽपायमुपयात्यसौ ॥ ९६ ॥
नाऽदोऽपि युक्तं यन्नास्या, मयाऽपूरि मनोरथः । दौःशील्यकथनेनाऽथ, क्षते क्षारं क्षिपामि किम् ? ॥ ९७ ॥
एवं विचिन्तयन्नत्र, त्वया दृष्टोऽस्मि सम्प्रति । उद्वेगकारणं चेदं, मम जानीहि बान्धव ! ॥ ९८ ॥
इत्याकर्ण्य वचः पीतहालाहल इव क्षणम् । निःस्पन्दः सागरोऽथाऽभून्निवात इव सागरः ॥ ९९ ॥
सागरो व्याजहारैवं, युज्यते योषितामिदम् । क्षारत्वमूषरमहीनिपानपयसामिव ॥ १०० ॥

---

१ कर्णसूचीसदृशम् । २ हे पुरुषाधम । * सागरे व° स १ ॥ † °द्यसदुद्वेग उ° सं १ ॥ ३ अमावास्यारात्रिः । ४ आम इति अङ्गीकारे । ५ अयुक्तम् । ६ पीतविष. ।

आसादय विषादं मा, व्यवसाये शुभे भव । स्थातव्यं स्वास्थ्यमास्थाय, स्मरणीयं न तद्वचः ॥ १०१ ॥
यादृशी तादृशी वाऽपि, साऽस्तु किं वस्तुतस्तया ? । माभून्मनोर्मलिनिमा, केवलं भ्रातरावयोः ॥ १०२ ॥
तेनैवमृजुना सोऽनुनीतः प्रमुमुदेऽधमः । सत्कारयन्ति ह्यात्मानं, कृत्वाऽप्यागांसि मायिनः ॥ १०३ ॥
ततः प्रभृति निःस्नेहः, सागरः प्रियदर्शनाम् । सोद्वेगं धारयामास, रोगग्रस्तामिवाऽङ्गुलीम् ॥ १०४ ॥
किन्तु तां वर्त्तयामासोपरोधात् प्राग्वदेव सः । वन्ध्याऽप्युन्मूल्यते नैव, लता या लालिता स्वयम् ॥१०५॥
मत्कृतो माऽनयोर्भेदोऽभूदिति प्रियदर्शना । नाऽशोकदत्तवृत्तान्तं, तं प्रियाय न्यवेदयत् ॥ १०६ ॥
कारागाराय संसारं, मन्यमानोऽथ सागरः । ऋद्धिं कृतार्थयामास, दीनादिषु नियोगतः ॥ १०७ ॥
कालेन पूरयित्वाऽऽयुः, सागरः प्रियदर्शना । अशोकदत्तश्च ययुः, कालधर्मं त्रयोऽपि ते ॥ १०८ ॥
जम्बूद्वीपस्य भरतक्षेत्रदक्षिणखण्डके । गङ्गासिन्ध्वन्तरस्याऽन्तर्भागे मध्येऽवसर्पिणि ॥ १०९ ॥
तृतीयारे पल्याष्टमांशशेषे युग्मरूपतः । ततः समुदपद्येतां, सागरप्रियदर्शने ॥ ११० ॥ [ युग्मम् ]
भारतेषु च वर्षेषु, पञ्चस्वैरवतेष्विव । द्वादशारं कालचक्रं, हेतुः कालव्यवस्थितेः ॥ १११ ॥
कालो द्विविधोऽवसर्पिण्युत्सर्पिणीविभेदतः । अराः षडवसर्पिण्यां, एकान्तसुषमादयः ॥ ११२ ॥
तत्रैकान्तः सुषमारश्चतस्रः कोटिकोटयः । सागराणां सुषमा तु, तिस्रस्तत्कोटिकोटयः ॥ ११३ ॥
सुषमदुःषमा ते द्वे, दुःषमसुषमा पुनः । सैका सहस्रैर्वर्षाणां, द्विचत्वारिंशतोनिता ॥ ११४ ॥
एकविंशतिरब्दानां, सहस्राणि तु दुःषमा । एकान्तदुःषमाऽपि स्यात्, तावद्वर्षप्रमाणिका ॥ ११५ ॥
अरका अवसर्पिण्यां, य एते समुदीरिताः । उत्सर्पिण्यां त एव स्युः, प्रतिलोमक्रमेण तु ॥ ११६ ॥
तदेवमवसर्पिण्यामुत्सर्पिण्यां च मीलिताः । सागरोपमकोटीनां, कोटयः खलु विंशतिः ॥ ११७ ॥
तत्राऽरे प्रथमे मर्त्याः, पल्यत्रितयजीविनः । गव्यूतत्रितयोच्छ्रायाश्चतुर्थदिनभोजिनः ॥ ११८ ॥
चतुरस्रसुसंस्थानाः, सर्वलक्षणलक्षिताः । वज्रऋषभनाराचसंहननाः सदासुखाः ॥ ११९ ॥
अपक्रोधा गतमाना, निर्माया लोभवर्जिताः । सर्ववैरं स्वभावेनाऽप्यधर्मपरिहारिणः ॥ १२० ॥
प्रायच्छंस्तत्र तेषां तु, वाञ्छितानि दिवानिशम् । मद्याङ्गाद्याः कल्पवृक्षा, दशोत्तरकुरुष्विव ॥ १२१ ॥
स्वादुमद्यानि मद्याङ्गा, ददुः सद्योऽपि याचिताः । भाजनादीनि भृङ्गाश्च, तद्भाण्डागारिका इव ॥ १२२ ॥
तेनुस्तूर्याङ्गास्तूर्याणि, तूर्यत्रयकराणि तु । उद्योतमसमं दीपशिखा ज्योतिषिका अपि ॥ १२३ ॥
विचित्राणि तु चित्राङ्गा, माल्यानि समढौकयन् । सूदा इव चित्ररसा, भोज्यानि विविधानि तु ॥१२४॥
यथेच्छमर्पयामासुर्मण्यङ्गा भूषणानि तु । गेहाकाराः सुगेहानि, गन्धर्वपुरवत् क्षणात् ॥ १२५ ॥
अभग्नेच्छमनग्नास्तु, वासांसि समपादयन् । एते प्रत्येकमन्यानप्यर्थान् ददुरनेकशः ॥ १२६ ॥
तदा च भूमयस्तत्र, स्वादवः शर्करा इव । सदा माधुर्यधुर्याणि, धुन्यादिषु पयांस्यपि ॥ १२७ ॥
अतिक्रामत्यरे तत्र, त्वायुःसंहननादिकम् । कल्पद्रुमप्रभावाश्च, न्यूनं न्यूनं शनैः शनैः ॥ १२८ ॥
द्वितीये त्वरके मर्त्याः, पल्यद्वितयजीविनः । गव्यूतद्वितयोच्छ्रायास्तृतीयदिनभोजिनः ॥ १२९ ॥
किञ्चिन्न्यूनप्रभावाश्च, तत्र कल्पमहीरुहः । किञ्चिन्माधुर्यतो हीना, आपो भूशर्करा अपि ॥ १३० ॥
अस्मिन्नप्यरके कालात्, पूर्वारक इवाऽखिलम् । न्यूनन्यूनतरं स्थौल्यं, स्तम्बेरमकरे यथा ॥ १३१ ॥
अरके तु तृतीयस्मिन्नेकपल्यायुषो नराः । एकगव्यूतकोच्छ्राया, द्वितीयदिनभोजिनः ॥ १३२ ॥
अस्मिन्नप्यरके प्राग्वत्, क्रामति न्यूनमेव हि । वपुरायुर्भूमाधुर्यं, कल्पद्रुमहिमाऽपि च ॥ १३३ ॥
पूर्वप्रभावरहिते, चतुर्थे त्वरके नराः । पूर्वकोट्यायुषः पञ्चधनुःशतसमुच्छ्रयाः ॥ १३४ ॥
पञ्चमे तु वर्षशतायुषः सप्तकरोच्छ्रयाः । षष्ठे पुनः षोडशाब्दायुषो हस्तसमुच्छ्रयाः ॥ १३५ ॥

१ मनोमालिन्यम् । २ सर्वदा । ३ रसवतीकारकाः । ४ नद्यादिषु । ५ हस्तिशुण्डायाम् ।

एकान्तदुःखप्रचिता, उत्सर्पिण्यामपीदृशाः । पश्चानुपूर्व्या विज्ञेया, अरेषु किल षट्स्वपि ॥ १३६ ॥
तृतीयारान्तजातत्वाद्, दैर्घ्ये नवधनुःशतौ । पल्यदशमांशायुष्कावभूतां तौ तु युग्मिनौ ॥ १३७ ॥
वज्रऋषभनाराचसन्धिबन्धं वपुस्तयोः । समेन चतुरस्रेण, संस्थानेन परिष्कृतम् ॥ १३८ ॥
युग्मधर्मी स शुशुभे, जात्यजाम्बूनदद्युतिः । प्रियङ्गुवर्णया पत्न्या, सुमेरुरिव मेध्यया ॥ १३९ ॥
तत्रैवाऽशोकदत्तोऽपि, प्राग्जन्मकृतमायया । श्वेतवर्णश्चतुर्दन्तः, सुरदन्तीव दन्त्यभूत् ॥ १४० ॥
भ्राम्यतेतस्ततः स्वैरमन्येद्युस्तेन दन्तिना । स युग्मधर्मी पुरतः, प्राग्जन्मसुहृदैक्ष्यत ॥ १४१ ॥
तद्दर्शनामृतासारस्फारीभूततनोस्ततः । बीजस्येवाऽङ्कुरस्तस्य, स्नेहः समुदपद्यत ॥ १४२ ॥
हस्तिना तेन हस्तेनाऽऽदायाऽऽलिङ्ग्य यथासुखम् । अनिच्छन्नपि स स्कन्धप्रदेशमधिरोपितः ॥ १४३ ॥
अन्योऽन्यदर्शनाभ्यासाद्, द्वयोरपि तयोस्ततः । जज्ञे परुत्कृतस्येव, स्मरणं पूर्वजन्मनः ॥ १४४ ॥
चतुर्दन्तद्विपस्कन्धारूढं ददृशुरिन्द्रवत् । तमन्ये विस्मयोत्तानलोचना युग्मरूपिणः ॥ १४५ ॥
शङ्खकुन्देन्दुविमलं, गजमारूढ इत्यसौ । ततः प्रोच्यत मिथुनैर्नाम्ना विमलवाहनः ॥ १४६ ॥
जातिस्मृत्या स नीतिज्ञो, विमलद्विपवाहनः । प्रकृत्या रूपवांश्चेति, जज्ञे सर्वजनाधिकः ॥ १४७ ॥
कालेन गच्छता तत्र, प्रभावः कल्पभूरुहाम् । मन्दीबभूव चारित्रभ्रष्टानां यतिनामिव ॥ १४८ ॥
मद्याङ्गा विरसं मद्यमदुः स्तोकं विलम्बितम् । दुर्दैवेन परावृत्त्य समानीता इवाऽपरे ॥ १४९ ॥
दीयतां मा दीयतां वेत्यामर्शविवशा इव । सविलम्बं भाजनानि, भृङ्गा अप्यर्थिता ददुः ॥ १५० ॥
आतोद्यादि न तादृक्षं, तूर्याङ्गा अप्यसूत्रयन् । तिरस्कारसमाकृष्टा, गन्धर्वा इव विष्टयः ॥ १५१ ॥
अर्थ्यमाना अपि मुहुर्दीपज्योतिष्कभूरुहः । नोद्योतं तादृशं तेनुर्दिवा दीपशिखा इव ॥ १५२ ॥
चित्राङ्गा अपि माल्यादि, द्रुतमिच्छानुसारतः । न हि विश्राणयामासुर्भृत्या दुर्विनया इव ॥ १५३ ॥
भोज्यं चतुर्विधं चित्ररसं चित्ररसा अपि । प्राग्वन्नादुः क्षीयमाणदानेच्छा इव सत्रिणः ॥ १५४ ॥
भूषणाद्यर्पयामासुर्न मण्यङ्गास्तथाविधम् । सम्पत्स्यते कथं भूय, इति चिन्ताकुला इव ॥ १५५ ॥
गेहाकारास्तु गेहानि, मन्दं मन्दं वितेनिरे । सत्काव्यानीव कवयो, मन्दव्युत्पत्तिशक्तयः ॥ १५६ ॥
अनग्ना अपि वस्त्राणि, स्खलितस्खलितं ददुः । क्रूरग्रहावग्रहिणो, वारि वारिधरा इव ॥ १५७ ॥
तादृक्कालानुभावेन, मिथुनानामजायत । ममत्वं कल्पवृक्षेषु, स्वदेहावयवेष्विव ॥ १५८ ॥
अन्येन स्वीकृतं कल्पवृक्षमन्यो यदाऽऽश्रयत् । महान् परिभवो ह्यासीत्, तदा स्वीकृतपूर्विणः ॥ १५९ ॥
तथापराभवं सोढुमसहास्ते परस्परम् । आत्माधिकं स्वामितया, चक्रुर्विमलवाहनम् ॥ १६० ॥
जातिस्मृत्या स नीतिज्ञो, युग्मिनां कल्पपादपान् । ददौ विभज्य स्थविरो, द्रविणं गोत्रिणामिव ॥ १६१ ॥
यो यस्तत्याज मर्यादां, परकल्पद्रुमेच्छया । आविश्चकार हाकारनीतिं तद्दण्डनाय सः ॥ १६२ ॥
हा त्वया दुष्कृतमिति, तस्य दण्डेन युग्मिनः । वार्द्धिवेलाजलानीव, मर्यादां नाऽतिचक्रमुः ॥ १६३ ॥
तेन हाकारदण्डेन, युग्मान्येवममंसत । वरं दण्डादिभिर्घातो, न हाकारतिरस्कृतिः ॥ १६४ ॥
तस्याऽऽयुरवशेषे तु, वर्षार्द्धप्रमिते सति । भार्यायां चन्द्रयशसि, मिथुनं समजायत ॥ १६५ ॥
तौ स्त्रीपुंसावसंख्येयपूर्वायुष्कौ सुसंस्थितौ । आद्यसंहननौ श्यामावष्टधन्वशतोच्छ्रयौ ॥ १६६ ॥
चक्षुष्मांश्चन्द्रकान्ता च, पितृभ्यां कल्पिताऽभिधौ । ववृधाते सहोद्भूतौ, लताविटपिनाविव ॥ १६७ ॥
प्रपाल्य युग्मं षण्मासान्, जरारोगौ विना मृतः । सुपर्णककुमारेषूत्पेदे विमलवाहनः ॥ १६८ ॥
तदैव च चन्द्रयशा, मृत्वा नागेष्वजायत । अस्तमीयुषि पीयूषकरे तिष्ठेन्न चन्द्रिका ॥ १६९ ॥

---

१ सुवर्णकान्ति । २ मेघमालया । ३ अरचयन् । ४ ददुः । ५ दानशालाकारिण. । ६ शनिरविभौमाद्य अवृष्टिकारकाः । ७ चन्द्रे ।

आत्मीयं पालयित्वाऽऽयुस्तत्र स्तम्बेरमोऽपि सः । आप नागकुमारत्वं, कालमाहात्म्यमीदृशम् ॥ १७० ॥
हाकारदण्डनीत्यैव, चक्षुष्मानथ युग्मिनाम् । मर्यादां वर्त्तयामास, यथा विमलवाहनः ॥१७१॥
प्राप्ते च चरमे काले, चक्षुष्मचन्द्रकान्तयोः । यशस्वी च सुरूपा च, जज्ञाते युग्मरूपिणौ ॥१७२॥
तत्संहननसंस्थानवर्णौ न्यूनायुषौ मनाक् । कलयामासतुर्वृद्धिं, वयोबुद्धी इव क्रमात् ॥ १७३ ॥
सदा युग्मचरौ कान्तौ, सप्तधन्वशतोच्छ्रयौ । बिभराञ्चक्रतुर्दृष्टौं तौ, तोरणस्तम्भविभ्रमम् ॥ १७४ ॥
कालेन पञ्चतां प्राप्य, चक्षुष्मानुदपद्यत । सुपर्णेष्वथ नागेषु, चन्द्रकान्ताऽपि तत्क्षणम् ॥ १७५ ॥
ततो यशस्वी पितृवन्मिथुनान्यखिलान्यपि । सलीलं पालयामास, गोपाल इव गाश्चिरम् ॥ १७६ ॥
अथोल्लङ्घितुमारेभे, हाकारो मिथुनैः क्रमात् । स्फुरदन्तर्मदावस्थैरङ्कुशो वारणैरिव ॥ १७७ ॥
चक्रे माकारदण्डं च, यशस्वी तानि शासितुम् । रोगे ह्येकौषधासाध्ये, देयमेवौषधान्तरम् ॥ १७८ ॥
आगस्यल्पे नीतिमाद्यां, द्वितीयां मध्यमे पुनः । महीयसि द्वे अपि ते, स प्रायुङ्क्त महामतिः ॥ १७९ ॥
यशस्विनः सुरूपायाश्चाऽसम्पूर्णायुषोर्मनाक् । स्त्रीपुंसौ समजायेतां, सह †धीविनयाविव ॥ १८० ॥
ताभ्यां चन्द्रोज्ज्वलः पुत्रोऽभिचन्द्र इति कीर्त्तितः । प्रियङ्गुप्रतिरूपा तु, प्रतिरूपेति पुत्र्यपि ॥ १८१ ॥
पितृतोऽल्पायुषौ *सार्द्धषट्कार्मुकशतोच्छ्रयौ । शम्यश्वत्थाविव युतौ, क्रमाद् वृद्धिमुपेयतुः ॥ १८२ ॥
सदैव शुशुभाते तौ, यथा मिलितवारिणौ । मन्दाकिनी-यमुनयोः, प्रवाहाविव पावनौ ॥ १८३ ॥
पूर्णायुष्को यशस्वी चाऽब्धिकुमारेष्वजायत । सुरूपाऽप्यभवन्नागकुमारेषु तदैव तु ॥ १८४ ॥
पितेव चाऽभिचन्द्रोऽपि,सर्वान् युगलधर्मिणः । स्थित्या तयैव नीतिभ्यां,ताभ्यामेवाऽशिषच्चिरम् ॥१८५॥
ततो बहुलभूतेष्टाशर्वर्येव निशाकरः । प्रान्तकाले मिथुनकं, सुषुवे प्रतिरूपया ॥ १८६ ॥
सूनोः प्रसेनजिदिति, पितृभ्यां नाम निर्ममे । चक्षुष्कान्तेति पुत्र्याश्च, कान्तेयं चक्षुषामिति ॥१८७॥
न्यूनायुषौ पितृभ्यां च, तमालश्यामलत्विषौ । सहितौ ववृधाते तौ, मुदुत्साहाविव क्रमात् ॥ १८८ ॥
षट्कार्मुकशतोत्सेधं, धारयन्तावुभावपि । विषुवद् वासरनिशे, इवाऽभूतां ‡समप्रभौ ॥ १८९ ॥
मृत्वाऽभिचन्द्रोऽप्युदधिकुमारेषूदपद्यत । प्रतिरूपा पुनर्नागकुमारेषु तदैव हि ॥ १९० ॥
बभूव युग्मिनां नाथस्तथैवाऽथ प्रसेनजित् । प्रायो महात्मनां पुत्राः, स्युर्महात्मान एव हि ॥१९१॥
हाकारनीतिं माकारनीतिं च व्यत्यलङ्घयन् । तदा युग्मानि कामार्त्ता, ह्रीमर्यादे इव क्रमात् ॥ १९२ ॥
अनाचारमहाभूतत्रासमन्त्राक्षरोपमाम् । धिक्कारनीतिमपरामकृताऽथ प्रसेनजित् ॥ १९३ ॥
नीतिभिस्तिसृभिस्ताभिः, स प्रयोगविचक्षणः । शशास सकलं लोकं, यतैस्त्रिभिरिव द्विपम् ॥ १९४ ॥
ततश्च पश्चिमे काले, किञ्चिदूनायुषौ स्वतः । चक्षुष्कान्ताऽपि सुषुवे, स्त्रीपुंसौ युग्मरूपिणौ ॥ १९५ ॥
तौ तु पञ्चाशदधिकपञ्चधन्वशतोच्छ्रयौ । सहैव प्रापतुर्वृद्धिं, वृक्षच्छाये इव क्रमात् ॥ १९६ ॥
मरुदेव इति सूनुः, श्रीकान्तेति च नन्दना । तौ युग्मधर्मिणौ लोके, नाम्ना ख्यातिमुपेयतुः ॥ १९७ ॥
प्रियङ्गुवर्णया पत्न्या, मरुदेवः सुवर्णरुक् । शुशुभे नन्दनतरुश्रेण्येव कनकाचलः ॥ १९८ ॥
ततो द्वीपकुमारेषु, जज्ञे मृत्वा प्रसेनजित् । चक्षुष्कान्ता पुनर्नागकुमारेषु तदैव हि ॥ १९९ ॥
नीतिक्रमेण तेनैव, सर्वान् युगलधर्मिणः । मरुदेवस्ततो देवान्, देवराज इवाऽन्वशात् ॥ २०० ॥
श्रीकान्तायाः प्रान्तकालेऽजायेतां युग्मधर्मिणौ । नाभिश्च मरुदेवा च, स्त्रीपुंसावभिधानतः ॥ २०१ ॥
पञ्चविंशत्यभ्यधिकपञ्चधन्वशतोच्छ्रयौ । सहैव प्रापतुर्वृद्धिं, तौ क्षमासंयमाविव ॥ २०२ ॥
मरुदेवा प्रियङ्गुश्रीर्नाभिर्जाम्बूनदद्युतिः । पित्रोः सावर्ण्यतोऽभातां, तत्प्रतिच्छन्दकाविव ॥ २०३ ॥

---

* सार्धसप्त° खता, आ ॥ † श्रीवि° सं १ ॥ १ शमीपिप्पलवृक्षौ । २ कृष्णचतुर्दशीराव्येव । ३ हर्षोत्साहौ ।
‡ समप्रभौ सं १ अ ॥ ४ इन्द्र । ५ तत्प्रतिबिम्बभूतौ ।

सङ्ख्यातपूर्वप्रमितं, तयोरायुर्महात्मनोः । श्रीकान्तामरुदेवाभ्यां, मनागूनमभूत् किल ॥ २०४ ॥
विपद्य मरुदेवोऽथ, प्राप द्वीपकुमारताम् । श्रीकान्ताऽपि हि तत्कालमेव नागकुमारताम् ॥२०५॥
सप्तमोऽभूत् कुलकरो, नाभिस्तदनु युग्मिनाम् । तिसृभिर्नीतिभिस्तांश्च, यथावत् प्रशशास सः ॥ २०६ ॥
तदा तृतीयारशेषे, पूर्वलक्षेषु सङ्ख्यया । चतुरशीतौ सनवाशीतिपक्षेषु सत्स्विह ॥ २०७ ॥
आषाढमासस्य पक्षे, प्रवृत्ते धवलेतरे । चतुर्थ्यामुत्तराषाढानक्षत्रस्थे निशाकरे ॥ २०८ ॥
प्रपाल्याऽऽयुस्त्रयस्त्रिंशत्सागरोपमसम्मितम् । जीवः श्रीवज्रनाभस्य, च्युत्वा सर्वार्थसिद्धितः ॥२०९॥
श्रीनाभिपत्न्या उदरे, मरुदेव्या अवातरत् । मानसात् सरसो हंस, इव मन्दाकिनीतटे ॥ २१० ॥
तदा स्वामिन्यवतीर्णे, त्रैलोक्येऽपि शरीरिणाम् । दुःखच्छेदात् क्षणं सौख्यमुद्योतश्च महानभूत् ॥ २११ ॥
तत्राऽवतरयामिन्यां, वासागारे प्रसुप्तया । मरुदेव्या ददृशिरे, महास्वप्नाश्चतुर्दश ॥ २१२ ॥
आदौ वृषः[1] सितः पीनस्कन्धो दीर्घर्जुवालधिः[*] । सस्वर्णकिङ्किणीमालः, शरन्मेघ इवोत्तडित् ॥ २१३ ॥
दन्तिराजश्चतुर्दन्तः, श्वेतवर्णः क्रमोन्नतः । क्षरन्मदनदीरम्यः, कैलास इव जङ्गमः ॥ २१४ ॥
पिङ्गाक्षो दीर्घरसनः, केसरी लोलकेसरः । पताकामिव शूरेषु, तन्वन्नुत्पुच्छनच्छलात् ॥ २१५ ॥
देवी च पद्मनिलया, पद्मसदृग्विलोचना । दिक्कुञ्जरकरोत्क्षिप्तपूर्णकुम्भोपशोभिता ॥ २१६ ॥
नानाविधामरतरुप्रसूनपरिगुम्फितम् । दाम प्रलम्बधन्वेव, ऋजुरोहितधन्वनः[2] ॥ २१७ ॥
निजाननप्रतिच्छन्दमिवाऽऽनन्दनिबन्धनम् । कान्तिपूरद्योतिताशामण्डलं चन्द्रमण्डलम् ॥ २१८ ॥
निशायामपि तत्कालं, वासरभ्रमकारकः । सर्वान्धकारच्छिदुरः, स्फुरद्द्युतिरहर्पतिः[3] ॥ २१९ ॥
[†]किङ्किणीमालभारिण्या, प्रचलन्त्या पताकया । करीव कर्णतालेन, राजमानो महाध्वजः ॥ २२० ॥
अम्भःकुम्भः शातकौम्भः, स्मेराम्भोजार्चिताननः । अम्भोधिमथनोद्गच्छत्सुधाकुम्भसहोदरः ॥ २२१ ॥
स्तोतुं तमाद्यमर्हन्तं, पद्मैर्भृङ्गनिनादिभिः । अनेकवदनीभूत, इव पद्माकरो महान् ॥ २२२ ॥
भुव्यास्तीर्णशरन्मेघमालालीलामलिम्लुचैः । उद्वीचिनिचयैश्चेतोऽभिरामः क्षीरनीरधिः ॥ २२३ ॥
यत्रोपितोऽभूद् भगवान्, देवत्वे तदिवाऽऽगतम् । इहाऽपि पूर्वस्नेहेन, विमानममितद्युति ॥ २२४ ॥
कुतोऽप्येकत्र मिलितस्तारकाणामिवोत्करः । रत्नपुञ्जो महान् व्योम्नि, पुञ्जीभूतामलद्युतिः ॥ २२५ ॥
तेजस्विनां पदार्थानां, त्रैलोक्योदरवर्त्तिनाम् । सम्पिण्डितं तेज इव, निर्धूमोऽग्निर्मुखेऽविशत् ॥ २२६ ॥
निशाविरामसमये, स्वामिनी मरुदेव्यपि । स्वप्नान्ते स्मयमानास्या, पद्मिनीव व्यबुध्यत ॥ २२७ ॥
असम्मान्तीं मुदमिवोद्गिरन्ती कोमलाक्षरैः । स्वप्नानकथयद् देवी, तांस्तथैवाऽऽशु नाभये ॥ २२८ ॥
उत्तमस्ते कुलकरस्तनयो भवितेत्यथ । स्वार्जवस्याऽनुसारेण, नाभिः स्वप्नान् व्यचारयत् ॥ २२९ ॥
स्वामिनः कुलकृन्मात्रसम्भावनमसाम्प्रतम् । इति कोपादिवेन्द्राणामकम्पन्ताऽऽसनान्यथ ॥ २३० ॥
किमित्यकस्मादस्माकमासनानां प्रकम्पनम् ? । इति दत्त्वोपयोगं तद्, विदाश्चक्रुर्बिडौजसः ॥ २३१ ॥
तत्कालं भगवन्मातुः, स्वप्नार्थमभिशंसितुम् । सुहृदः कृतसङ्केता, इवेन्द्रास्तुल्यमाययुः ॥ २३२ ॥
ततस्ते विनयान्मूर्ध्नि, घटिताञ्जलिकुड्मलाः । स्वप्नार्थं स्फुटयामासुः, सूत्रं वृत्तिकृतो यथा ॥ २३३ ॥
भावी स्वामिनि ! पुत्रस्ते, स्वप्ने वृषभदर्शनात् । मोहपङ्कमग्नधर्मस्यन्दनोद्धरणक्षमः ॥ २३४ ॥
हस्तिदर्शनतो देवि !, तव सूनुर्भविष्यति । गरीयसामपि गुरुर्महात्म्यैकधाम च ॥ २३५ ॥
भावी पुरुषसिंहस्ते, तनयः सिंहदर्शनात् । धीरः सर्वत्र निर्भीकः, शूरोऽस्खलितविक्रमः ॥ २३६ ॥
यच्च श्रीर्ददृशे तत्र, तनयः पुरुषोत्तमः । देवि ! त्रैलोक्यसाम्राज्यलक्ष्मीनाथो भविष्यति ॥ २३७ ॥
स्वप्ने स्रग्दर्शनात् पुण्यदर्शने ! स्यात् तवाऽऽत्मजः । सर्वस्य जगतः स्रग्वच्छिरसोद्वाह्यशासनः ॥ २३८ ॥

१ लम्बसरलपुच्छ. । * °र्णकिङ्कणीमा° स्वता, सं २ ॥ २ आरूढधन्वन । ३ सूर्यः. । † किङ्कणी° सं २ ॥

जगन्मातस्त्वया यच्च, स्वप्ने पूर्णेन्दुरैक्ष्यत । तन्नेत्रानन्दनः कान्तो, नन्दनस्ते भविष्यति ॥ २३९ ॥
ईक्षाञ्चक्रे रविर्यच्च, तत्सूनुस्ते भविष्यति । मोहान्धकारविध्वंसाज्जगदुद्योतकारकः ॥ २४० ॥
आलुलोके त्वया स्वप्ने, यच्च देवि ! महाध्वजः । महावंशप्रतिष्ठः स्यात्, तत् ते धर्मध्वजोऽङ्गजः ॥ २४१ ॥
यच्च स्वप्ने पूर्णकुम्भो, भवत्याऽऽलोकि देवि ! तत् । सूनुः समग्रातिशयपूर्णपात्रं भविष्यति ॥ २४२ ॥
यच्च पद्मसरो दृष्टं, तत् स्वामिनि ! तवाऽऽत्मजः । तापं संसारकान्तारपतितानां हरिष्यति ॥ २४३ ॥
सरित्पतिर्यदालोकि, भवत्या तनयस्तव । अधृष्यश्चाभिगम्यश्च, तदवश्यं भविष्यति ॥ २४४ ॥
विमानं देवि ! यद् दृष्टं, भवत्या भुवनाद्भुतम् । वैमानिकैरपि सुरैस्तत् ते सेविष्यते सुतः ॥ २४५ ॥
रत्नपुञ्जः स्फुरत्कान्तिरीक्षामासे च यत् त्वया । तत्सर्वगुणरत्नानामाकरः स्यात् तवाऽऽत्मजः ॥ २४६ ॥
यज्ज्वलज्ज्वलनो* दृष्टो, वक्त्रमध्ये विशंस्त्वया । अन्यतेजस्विनां तेजस्तदपास्यति ते सुतः ॥ २४७ ॥
चतुर्दशभिरप्येतैः, स्वप्नैः स्वामिनि ! सूच्यते । चतुर्दशरज्जुदघ्ने[1], लोके स्वामी तवाऽऽत्मजः ॥ २४८ ॥
इति स्वप्नार्थमाख्याय, मरुदेवीं प्रणम्य च । क्षणान्निजनिजस्थानान्यगमन्नमरेश्वराः † ॥ २४९ ॥
स्वामिन्यपीन्द्रैः स्वप्नार्थव्याख्यानसुधयोक्षिता । वसुधेवाऽम्बुदैरद्भिः, संसिक्ता समुदश्वसत् ॥ २५० ॥
सा तेनाऽशोभि गर्भेण, मेघमालेव भानुना । शुक्तिर्मुक्ताफलेनेव, सिंहेनेवाऽद्रिकन्दरा ॥ २५१ ॥
प्रियङ्गुश्यामवर्णाऽपि, मरुदेवा निसर्गतः । शरदा मेघमालेव, गर्भेण प्राप पाण्डुताम् ॥ २५२ ॥
तस्या अभूतां वक्षोजौ, विशेषात् पीवरोन्नतौ । स्तन्यपो नौ जगत्स्वामी, भावीतीव प्रमोदतः ॥ २५३ ॥
तस्या विशेषतोऽभूतां, सविकाशे विलोचने । भगवद्वदनं द्रष्टुं, दूरमुत्कण्ठिते इव ॥ २५४ ॥
नितम्बभित्तिः स्वामिन्या, वैपुल्यं विपुलाऽपि हि । भेजे वर्षात्यये निम्नगायाः पुलिनभूरिव ॥ २५५ ॥
मन्दा सहजभावेनाऽप्यस्या मन्दतराऽभवत् । गतिर्मतङ्गजस्येव, मदावस्थामुपेयुषः ॥ २५६ ॥
तस्यास्तदानीं वव्रृधे, लावण्यश्रीर्विशेषतः । प्रज्ञेवोषसि विदुषो, ग्रीष्मे वेलेव वारिधेः ॥ २५७ ॥
त्रैलोक्यैकमहासारं, सा गर्भं धारयत्यपि । नाऽखिद्यत प्रभावोऽयमर्हतां गर्भवासिनाम् ॥ २५८ ॥
उदरे मरुदेवायाः, शनकैः शनकैस्ततः । निगूढं वव्रृधे गर्भः, कन्दोऽन्तरवनेरिव ॥ २५९ ॥
स्वामिन्यभूत् तत्प्रभावाद्, विशेषाद् विश्ववत्सला । शीतमप्यम्बु शीतं स्यात्, क्षिप्तया हिममृत्स्नया[2] ॥२६०॥
गर्भावतीर्णभगवत्प्रभावान्नाभिरप्यभूत् । पितृतोऽप्यधिकं मान्यः, सर्वेषां युग्मधर्मिणाम् ॥ २६१ ॥
तत्प्रभावाद् विशिष्टानुभावाः कल्पद्रवोऽभवन् । शरत्कालवशादिन्दुकरा स्युरधिकश्रियः ॥ २६२ ॥
तत्प्रभावाच्छान्ततिर्यग्नृवैरा भूरभूच्च सा । सर्वतोऽपि हि शाम्यन्ति, सन्तापाः प्रावृडागमात् ॥ २६३ ॥
ततो नवसु मासेषु, दिनेष्वर्द्धाष्टमेषु च । गतेषु चैत्रबहुलाष्टम्यामर्द्धनिशाक्षणे[3] ॥ २६४ ॥
उच्चस्थेषु ग्रहेष्विन्दावुत्तराषाढया युते ‡ । सुखेन सुषुवे देवी, पुत्रं युगलधर्मिणम् ॥ २६५ ॥
दिशः प्रसादमासेदुस्तदानीं सम्मदादिव । लोकः क्रीडापरो जज्ञे, द्युवासीव महामुदा ॥ २६६ ॥
जरायुरक्तप्रभृतिकलङ्कपरिवर्जितः । उपपादशय्योद्भूत, इव देवो[4] रराज सः ॥ २६७ ॥
तदा कृतजगन्नेत्रचमत्कारोऽन्धकारभित् । बभूव विद्युदुद्योत, इवोद्योतो जगत्त्रये ॥ २६८ ॥
किङ्करानाहतोऽप्युच्चैर्मेघगम्भीरनिस्वनः । स्वयं द्यौरिव हर्षेण, ननाद दिवि दुन्दुभिः ॥ २६९ ॥
अप्राप्तपूर्विणां सौख्यं, नारकाणामपि क्षणम् । समजायत तिर्यग्-नृ-सुराणां किं पुनस्तदा ? ॥ २७० ॥
उपभूमि प्रसर्पद्भिर्मन्दं मन्दं समीरणैः । रजोऽपनिन्ये मेदिन्याः, परिचर्याकरैरिव ॥ २७१ ॥
चेलक्षेपं च गन्धाम्बु, ववृषे स्तनयित्नुभिः[5] । सिक्तबीजवदुच्छ्वासमाससाद च मेदिनी ॥ २७२ ॥

---

* यद्देवि ! ज्वलनो दृ° सं १ ॥ १ चतुर्दशरज्जुप्रमाणे । † °जस्थानान्यगमन् सर्वेऽपि सुरेश्वराः सं १ ॥
२ मृत्तिकया । ३ चैत्रकृष्णाष्टम्याम् । ‡ उत्तराषाढया युक्ते, चन्द्रे चन्द्रमिवेन्द्रदिक् सं २, आ ॥ ४ देव इव । ५ मेघै. ।

*अथाऽधोलोकवासिन्यः, सद्यः प्रचलितासनाः । दिक्कुमार्यः समाजग्मुरष्टौ तत्सूतिवेश्मनि ॥ २७३ ॥
भोगङ्करा भोगवती, सुभोगा भोगमालिनी । §तोयधारा विचित्रा च, पुष्पमाला त्वनिन्दिता ॥
तत्राऽऽदिमं तीर्थकरं, तीर्थकृन्मातरं च ताम् । ताभिः प्रदक्षिणीकृत्य, वन्दित्वा चैवमूचिरे ॥ २७५ ॥
नमस्तुभ्यं जगन्मातर्जगद्दीपप्रदायिके ! । अष्टौ वयमधोलोकवासिन्यो दिक्कुमारिकाः ॥ २७६ ॥
अवधिज्ञानतो ज्ञात्वा, तीर्थकृज्जन्म पावनम् । तन्महिम्नः करणार्थं, तत्प्रभावादिहाऽऽगताः ॥ २७७ ॥
तन्न भेतव्यमित्युक्त्वा, ‡देशे पूर्वोत्तरे स्थिताः । चक्रुः स्तम्भसहस्राङ्कं, प्राङ्मुखं सूतिकागृहम् ॥ २७८ ॥
ताश्च संवर्त्तवातेन, परितः सूतिकागृहम् । आयोजनमपाहार्षुः, शर्कराकण्टकादिकम् ॥ २७९ ॥
संवर्त्तवातं संहृत्य, भगवन्तं प्रणम्य च । तदासन्ननिषण्णास्तास्तं गायन्त्योऽवतस्थिरे ॥ २८० ॥
तथैवाऽऽसनकम्पेन, ज्ञात्वा मेरुगिरिस्थिताः । ऊर्द्ध्वलोकनिवासिन्योऽप्यष्टेयुर्दिक्कुमारिकाः ॥ २८१ ॥
मेघङ्करा मेघवती, सुमेघा मेघमालिनी । †सुवत्सा वत्समित्रा च, वारिषेणा बलाहिका ॥ २८२ ॥
जिनं जिनजननीं च, नत्वा नुत्वा तथैव ताः । नभस्वन्नभस्यभ्रपटलं[1] द्राग् विचक्रिरे ॥ २८३ ॥
ताभिः सुगन्धितोयेनाऽऽयोजनं वेश्मपार्श्वतः । समन्ततो रजोऽशामि, कौमुद्येव तमस्ततिः ॥ २८४ ॥
वसुन्धरां वितन्वानां, नानालेख्यमयीमिव । जानुदघ्नीं[2] पञ्चवर्णैः, पुष्पैर्वृष्टिं वितेनिरे ॥ २८५ ॥
तथैव तीर्थनाथस्य, गायन्त्यो निर्मलान् गुणान् । हर्षप्रकर्षशालिन्यः, स्थाने तस्थुर्यथोचिते ॥ २८६ ॥
दिक्कुमार्योऽष्ट पौरस्त्यरुचकाद्रिस्थिता अपि । विमानैर्मनसा सार्द्धं, स्पर्द्धमानैरिवाऽऽययुः ॥ २८७ ॥
ताश्च नन्दोत्तरानन्दे, आनन्दानन्दिवर्द्धने । विजया वैजयन्ती च, जयन्ती चाऽपराजिता ॥
स्वामिनं मरुदेवां च, नत्वाऽऽख्याय च पूर्ववत् । गायन्त्यो मङ्गलान्यस्थुस्ताः प्राग्दर्पणपाणयः ॥२८९॥
अपाच्यरुचकाद्रिस्थास्तावन्त्यो दिक्कुमारिकाः । तत्राऽऽययुः¶ प्रमोदेन, प्रतोदेनेव नोदिताः ॥ २९० ॥
समाहारा सुप्रदत्ता, सुप्रबुद्धा यशोधरा । लक्ष्मीवती शेषवती, चित्रगुप्ता वसुन्धरा ॥ २९१ ॥
जिननाथं तदम्बां च, नत्वा प्राग्वन्निगद्य च । भृङ्गारपाणयस्तस्थुर्गायन्त्यो दक्षिणेन ताः ॥ २९२ ॥
प्रत्यग्रुचकशैलस्था, अप्यष्टौ दिक्कुमारिकाः । आययुस्त्वरयाऽन्योऽन्यमिव भक्त्या जिगीषवः ॥ २९३ ॥
इलादेवी सुरादेवी, पृथिवी पद्मवत्यपि । एकनासा नवमिका, भद्रा सीतेति नामतः ॥२९४॥
नत्वा जिनं जिनाम्बां च, विज्ञपय्य च पूर्ववत् । तस्थुर्व्यजनहस्तास्ता, गायन्त्यः पश्चिमेन तु ॥ २९५ ॥
उदग्रुचकतोऽप्येयुर्दिक्कुमार्योऽष्ट वेगतः । वातैरिव रथीभूतैरमरैराभियोगिकैः ॥ २९६ ॥
अलम्बुसा मिश्रकेशी, पुण्डरीका च वारुणी । हासा सर्वप्रभा चैव, श्री ह्रीरित्यभिधानतः ॥२९७॥
नत्वा जिनं तदम्बां च, कृत्यं चाऽऽख्याय पूर्ववत् । गायन्त्य उत्तरेणाऽस्थुस्तास्तु चामरपाणयः ॥२९८॥
एयुर्विदिग्रुचकाद्रेश्चतस्रो दिक्कुमारिकाः । चित्रा चित्रकनका सतेरा सौत्रामणी तथा ॥ २९९ ॥
नत्वा जिनं जिनाम्बां च, विज्ञपय्य तथैव हि । गायन्त्योऽस्थुर्दीपहस्ता, ईशानादिविदिक्षु ताः ॥ ३०० ॥
रुचकद्वीपतोऽप्येयुश्चतस्रो दिक्कुमारिकाः । रूपा रूपासिका चाऽपि, सुरूपा रूपकावती ॥ ३०१ ॥
चतुरङ्गुलवर्जं ता, नाभिनालं जगत्पतेः । न्यकृन्तन् $विदरं चखुस्तं च तत्र निचिक्षिपुः ॥ ३०२ ॥
‖विदरं पूरयामासुर्वज्रै रत्नैश्च मङ्क्षु ताः । दूर्वया पीठिकाबन्धं, तस्योपरि च चक्रिरे ॥ ३०३ ॥
जिनजन्मगृहात् पूर्वदक्षिणोत्तरदिक्षु च । विचक्रुस्त्रीणि कदलीगृहाणि श्रीगृहाणि ताः ॥ ३०४ ॥
प्रत्येकमेषां मध्ये च, ताः सिंहासनभूषितम् । विचक्रिरे चतुःशालं, विशालं स्वविमानवत् ॥ ३०५ ॥

---

* अथ मेरुरुचकाधोलोकस्थाश्चलि° खता ॥ † सुवत्सा वत्समित्रा च, पु° खता, आ ॥ ‡ देशेऽथोत्तरपश्चिमे खता ॥ § तोयधारा विचित्रा च वारि° खता, आ ॥ १ भाद्रपदमासवत् । २ जानुप्रमाणाम् । ¶ °युः प्रयत्नेन, प्रमोदेनैव चालिताः सं १ ॥ $ विवरं सं १, ख ॥ ‖ विवरं सं १, ख ॥

ता दक्षिणचतुःशाले, जिनं न्यस्य कराञ्जलौ । निन्युस्तन्मातरं चाऽऽप्तचेटीवद् दत्तबाहवः ॥ ३०६ ॥
सिंहासने निवेश्योभावभ्यानङ्गुः सुगन्धिना । ता लक्षपाकतैलेन, जरत्संवाहिका इव ॥ ३०७ ॥
अमन्दामोदनिःस्यन्दप्रमोदितदिशा भृशम् । उभावुद्वर्त्तयामासुर्दिव्येनोद्वर्त्तनेन ताः ॥ ३०८ ॥
नीत्वा ताः प्राक्चतुःशाले, न्यस्य सिंहासने च तौ । स्नपयामासुरम्भोभिः, स्वमनोभिरिवाऽमलैः ॥३०९॥
गन्धकाषायवासोभिस्तदङ्गान्यमृजन्नथ । गोशीर्षचन्दनरसैश्चर्चयामासुराशु ताः ॥ ३१० ॥
ताभ्यामामोचयामासुर्देवदूष्ये च वाससी । विद्युदुद्द्योतसंध्यभ्रि, ताश्चित्राभरणानि च ॥ ३११ ॥
अथोत्तरचतुःशाले, नीत्वा सिंहासनोपरि । न्यपादयन् भगवन्तं, भगवन्मातरं च ताः ॥ ३१२ ॥
गोशीर्षचन्दनैधांसि, द्राक् क्षुद्रहिमवद्गिरेः । ताः समानाययामासुरमरैराभियोगिकैः ॥ ३१३ ॥
उत्पाद्याऽरणिदारुभ्यां, वह्निमह्नाय तास्ततः । होमं वितेनुर्गोशीर्षचन्दनैरेधसात्कृतैः ॥ ३१४ ॥
रक्षापोट्टलिकां वह्निभस्मना तेन ता व्यधुः । तयोर्महामहिम्नोरप्यासां भक्तिक्रमः स हि ॥ ३१५ ॥
पर्वतायुर्भवेत्युच्चैरुक्त्वा कर्णान्तिके विभोः । ताः समास्फालयामासुर्मिथः पाषाणगोलकौ ॥ ३१६ ॥
सूतिकाभवने तस्मिन्, मरुदेवां विभुं च ताः । शय्यागतौ विधायाऽस्थुर्गायन्त्यो मङ्गलान्यथ ॥ ३१७ ॥
तदा शाश्वतघण्टानां, स्वर्गेषु युगपद् ध्वनिः । बभूव लग्नवेलायामातोद्यानामिवोच्चकैः ॥ ३१८ ॥
वासवानामासनानि, शैलमूलाचलान्यपि । चकम्पिरे तदानीं च, हृदयानि च सम्भ्रमात् ॥ ३१९ ॥
ततश्च सौधर्मपतिः, कोपाटोपारुणेक्षणः । ललाटपट्टघटितभ्रुकुटीविकटाननः ॥ ३२० ॥
अधरं स्फोरयन्नन्तः, क्रोधवह्नेः शिखामिव । उच्छ्रसन्नङ्घ्रिणैकेन, स्थिरीकर्तुमिवाऽऽसनम् ॥ ३२१ ॥
कस्योत्क्षिप्तं कृतान्तेन, पत्रमद्येति विब्रुवन् । आदित्सते स्म दम्भोलिं, स्वशौण्डीर्यानलानिलम् ॥ ३२२ ॥
[ त्रिभिर्विशेषकम् ]
एवं पुरन्दरं प्रेक्ष्य, क्रुद्धकेसरिसोदरम् । मूर्त्तो मान इवाऽनीकपतिर्नत्वा व्यजिज्ञपत् ॥ ३२३ ॥
किमावेशः स्वयं स्वामिन् !, पदातौ मयि सत्यपि ? । समादिश जगन्नाथ !, कं मथ्नामि तव द्विषम् ? ॥३२४॥
ततो मनःसमाधानमाधाय विबुधाधिपः । प्रयुज्याऽवधिमज्ञासीज्जन्माऽऽदिमजिनप्रभोः ॥ ३२५ ॥
मुदा विगलितक्रोधसंवेगस्तत्क्षणादभूत् । शान्तदावानलो वृष्ट्या, सानुमानिव वासवः ॥ ३२६ ॥
धिग् मया चिन्तितमिदं, मिथ्यादुष्कृतमस्तु मे । इति ब्रुवाणो गीर्वाणाग्रणीः सिंहासनं जहौ ॥ ३२७ ॥
गत्वा पदानि सप्ताऽष्टान्युत्तमाङ्गे निधाय च । द्वितीयरत्नमुकुटश्रीविश्राणकमञ्जलिम् ॥ ३२८ ॥
जानूत्तमाङ्गकमलसंस्पृष्टपृथिवीतलः । नत्वा रोमाञ्चितोऽर्हन्तमिति स्तोतुं प्रचक्रमे ॥ ३२९ ॥
तुभ्यं नमस्तीर्थनाथ !, सनाथीकृतविष्टप ! । कृपारससरिन्नाथ !, नाथ ! श्रीनाभिनन्दन ! ॥ ३३० ॥
मत्यादिभिस्त्रिभिर्ज्ञानैः, सहोत्थैर्नाथ ! शोभसे । नन्दनादिभिरुद्यानैरिव मेरुमहीधरः ॥ ३३१ ॥
देवेदं भारतं वर्षं, दिवोऽप्यद्याऽतिरिच्यते । त्रैलोक्यमौलिरत्नेन, यदलङ्क्रियते त्वया ॥ ३३२ ॥
असौ त्वज्जन्मकल्याणमहोत्सवपवित्रितः । आसंसारं जगन्नाथ !, वन्द्यस्त्वमिव वासरः ॥ ३३३ ॥
नारकाणामपि सुखं, जज्ञे त्वज्जन्मपर्वणा । अर्हतामुदयः केषां, न स्यात् सन्तापहारकः ? ॥ ३३४ ॥
जम्बूद्वीपस्य भरतक्षेत्रे नष्टो निधानवत् । त्वदाज्ञाबीजकेनाऽतः, परं धर्मः प्रकाशताम् ॥ ३३५ ॥
त्वत्पादौ प्राप्य संसारं, तरिष्यन्ति न केऽधुना ? । अयोऽपि यानपात्रस्थं, पारं प्राप्नोति वारिधेः ॥३३६॥
कल्पवृक्ष इवाऽवृक्षे, नदीस्रोतो मराविव । भगवन्नवतीर्णोऽसि, लोकपुण्येन भारते ॥ ३३७ ॥
भगवन्तमिति स्तुत्वा, प्रथमस्वर्गनायकः । पदात्यनीकाधिपतिं, नैगमेषिणमादिशत् ॥ ३३८ ॥
जम्बूद्वीपस्थभरतदक्षिणार्द्धस्य मध्यमे । भूमिभागे कुलभृतो, नाभेः पत्न्याः श्रियांनिधेः ॥ ३३९ ॥

१ विद्युत्प्रकाशसमानानि । २ वज्रम् । ३ इन्द्रम् । * °द्वीपीयभ° खंता, °द्वीपस्य भ° सं १, आ ॥ † °निधिः खता, आ ॥

नन्दनो मरुदेवाया, जज्ञे प्रथमतीर्थकृत् । आहूयन्तां सुराः सर्वे, तज्जन्मस्नात्रहेतवे ॥३४०॥

ततश्च योजनपरिमण्डलामद्भुतस्वनाम् । स त्रिरुल्लालयन् घण्टां, सुघोषाख्यामवादयत् ॥ ३४१ ॥
सर्वापरविमानानां, नेदुर्घण्टाः सुघोषया । समं मुँखरगायन्त्या, गायन्त्य इव पक्षगाः ॥ ३४२ ॥
घण्टानां निस्वनस्तासां, दिङ्मुखोत्थैः प्रतिस्वनैः । सूनुभिः स्वप्रतिच्छन्दैः, सतां कुलमिवाऽवृधत् ॥३४३॥
द्वात्रिंशति विमानानां, लक्षेषु स समुच्छलन् । तालुनीवाऽनुरणनरूपः शब्दो व्यजृम्भत ॥ ३४४ ॥
देवाः प्रमत्तव्यासक्तास्तेन शब्देन मूँर्च्छता । किमेतदिति सम्भ्रान्ताश्चक्रिरे सावधानताम् ॥ ३४५ ॥
उद्दिश्य तानवहितान्, सेनानीः सोऽथ वज्रिणः । वचसा मेघनिर्घोषगम्भीरेणाऽभ्यधादिति ॥ ३४६ ॥
भो भो देवाः ! समस्तान् वः, सदेव्यादिपरिच्छदान् । इत्यादिशत्यनुल्लङ्घ्यशासनः पाकशासनः ॥३४७॥
जम्बूद्वीपस्थभरतदक्षिणार्द्धस्य मध्यतः । नाभेः कुले कुलकृतो, जज्ञे प्रथमतीर्थकृत् ॥ ३४८ ॥
तत्र तज्जन्मकल्याणमहोत्सवविधित्सया । गन्तुं त्वरध्वमस्मद्वत्, कृत्यं नाऽतः परं परम् ॥ ३४९ ॥
प्रत्यर्हन्तं रागतः केऽप्यभिवातमिवैणकाः । केऽपि शक्राज्ञयाऽऽकृष्टा, अँयस्कान्तेन लोहवत् ॥ ३५० ॥
दारैरुल्लासिताः केऽपि, यादांसीव नदीरयैः । केचित् सुहृद्भिराकृष्टा, गन्धा गन्धवहैरिव ॥ ३५१ ॥
एयुर्विमानै रुचिरैर्वाहनैरपरैरपि । द्यामन्यामिव कुर्वाणा, गीर्वाणाः शक्रसन्निधौ ॥ ३५२ ॥
[ त्रिभिर्विशेषकम् ]

आदिशत् पालकं नाम, वासवोऽप्याभियोगिकम् । असम्भाव्यप्रतिमानं, विमानं क्रियतामिति ॥३५३॥
तत्कालं पालकोऽपीशनिदेशपरिपालकः । रत्नस्तम्भसहस्रांशुपूरपल्लवितांम्बरम् ॥ ३५४ ॥
गवाक्षैरक्षिमदिव, दीर्घैर्दोष्मदिव ध्वजैः । वेदीभिर्दन्तुरमिव, कुम्भैः पुलकभागिव ॥ ३५५ ॥
पञ्चयोजनशत्युच्चं, विस्तारे लक्षयोजनम् । इच्छानुमानगमनं, विमानं पालकं व्यधात् ॥ ३५६ ॥
[ त्रिभिर्विशेषकम् ]

आसंस्तस्य विमानस्य, तिस्रः सोपानपङ्क्तयः । त्रिदिक्कं हैमवतो नद्य इव कल्लोलपङ्क्तयः ॥ ३५७ ॥
तासां पुरस्तात् विविधवर्णरत्नमयानि च । तोरणानि त्रिशक्रधन्वाश्रियं दधुः ॥ ३५८ ॥
चन्द्रबिम्बवदादर्शवदालिङ्गमृदङ्गवत् । दीपकश्रीवदस्यान्तः, समभूता समा भूः ॥ ३५९ ॥
[illegible] । [illegible] सा व्यधात् ॥ ३६० ॥
अभूत् तन्मध्ये प्रेक्षामण्डपं, [illegible] । [illegible] ॥ ३६१ ॥
मण्डपस्य च मध्यान्तर्माणिक्यपीठिका [illegible] । [illegible] पङ्कजस्येव कर्णिका ॥ ३६२ ॥
[illegible] योजना । सा चतुर्योजना पिण्डे, मध्ये मघवश्रियः ॥ ३६३ ॥
रेजे तस्या उपर्येकं, रत्नसिंहासनं महत् । [illegible], पिण्डितेवैव निर्मितम् ॥ ३६४ ॥
तस्योपरिष्टात् विजयदूष्यं [illegible] । विचित्ररत्नखचितं, [illegible] ॥ ३६५ ॥
तस्य मध्ये [illegible] वज्राङ्कुशोऽङ्कुशः । लीलादोलायितं लक्ष्य, मुक्तादाम च कुम्भिकम् ॥ ३६६ ॥
तदर्द्धायतनिर्मुक्तादामभिश्चार्धकुम्भिकैः । पार्श्वेषु तासां रेजे तत्, गङ्गा नद्यन्तरैरिव ॥ ३६७ ॥
तत्स्पर्शसुखलोलाद्विव स्वच्छन्दमारुतैः । मन्दं मन्दमदोल्यन्त, तानि प्राच्यादिवायुभिः ॥ ३६८ ॥
तदन्तः सञ्चरन् वायुश्चक्रे श्रुतिसुखं स्वरम् । चाटुकार इवेन्द्रस्य गायन्निव यशोऽमलम् ॥ ३६९ ॥
तत्सिंहासनमाश्रित्य, वायव्योत्तरयोर्दिशोः । दिशि चोत्तरपूर्वस्याम्, सामानिकदिवौकसाम् ॥ ३७० ॥
चतुरशीतिसहस्रभद्रासनानामभवत् क्रमात् । भद्रासनानि राजन्ति, घुर्श्राणा मुकुटा इव ॥ ३७१ ॥

१ अप्सरगायकया । २ मूर्च्छिता स्म १ २ अ ॥ २ नावगानात् । ३ लोहचुम्बकेन । ४ जलजन्तव । ५ मल्लिका-जातिविशेष । ६ जवनिका ७ पुत्तलिकाभिः । ८ दैर्घ्यविस्तारयो । ९ इन्द्राश्रिय ।

अष्टानामग्रदेवीनां, प्राच्यामष्टासनानि तु । सदृशाकारधारीणि, सोदराणीव जज्ञिरे ॥ ३७२ ॥
दिशि दक्षिणपूर्वस्यामभ्यन्तरसभासदाम् । भद्रासनसहस्राणि, द्वादशाऽऽसन् दिवौकसाम् ॥ ३७३ ॥
आसनानि दक्षिणस्यामासन् मध्यसभासदाम् । चतुर्दशानां दिविषत्सहस्राणां क्रमेण तु ॥ ३७४ ॥
दक्षिणपश्चिमायां तु, देवानां बाह्यपर्षदः । षोडशानां सहस्राणामासीदासनधोरणी ॥ ३७५ ॥
दिशि प्रतीच्यां सप्तानामनीकपतिनाकिनाम् । सप्तासनान्येकबिम्बपतितानीव रेजिरे ॥ ३७६ ॥
चतुरशीतिः सहस्राण्यासनान्यात्मरक्षिणाम् । भानीव मेरुं परितः, शक्रं प्रतिदिशं बभुः ॥ ३७७ ॥
परिपूर्णं विमानं तद्, विरच्याऽऽभियोगिकाः । देवा विज्ञपयामासुः, स्वामिने त्रिदिवौकसाम् ॥ ३७८ ॥
पुरन्दरोऽपि तत्कालं, विचक्रे रूपमुत्तरम् । नैसर्गिकी हि भवति, द्युसदां कामरूपिता ॥ ३७९ ॥
महिषीभिः सहाऽष्टाभिर्दिक्श्रीभिरिव वासवः । गन्धर्वनाट्यानीकाभ्यां, दृश्यमानकुतूहलः ॥ ३८० ॥
ततः प्रदक्षिणीकुर्वन्, पूर्वसोपानवर्त्मना । आरुरोह विमानं तन्निजं मानमिवोन्नतम् ॥ ३८१ ॥
सहस्राक्षः सहस्राङ्ग, इव माणिक्यभित्तिषु । सङ्क्रान्तमूर्तिरध्यास्त, प्राङ्मुखः स्वं तदासनम् ॥ ३८२ ॥
शक्ररूपान्तराणीव, शक्रसामानिकास्तथा । आरुह्योदीच्यसोपानैर्यथाऽऽसनमुपाविशन् ॥ ३८३ ॥
प्रविश्याऽपाच्यसोपानपङ्क्त्याऽन्येऽपि दिवौकसः । स्वस्वासनेषु न्यषदन्, स्वाम्यग्रे नाऽऽसनात्ययः ॥ ३८४ ॥
सिंहासननिषण्णस्य, पौलोमीभर्तुरग्रतः । दर्पणप्रभृतीन्यष्टमङ्गलान्यष्ट रेजिरे ॥ ३८५ ॥
शुशुभे शशभृत्पाण्डु, पुण्डरीकं बिडौजसः । हंसाविवोपसर्पन्तौ, धूयमानौ च चामरौ ॥ ३८६ ॥
सहस्रयोजनोत्सेधो, विमानाग्रे हरिध्वजः । अशोभत पताकाभिर्निर्झरैरिव पर्वतः ॥ ३८७ ॥
ततः परिवृतो देवैः, शक्रः सामानिकादिभिः । कोटिसङ्ख्यैरराजिष्ट, स्रोतोभिरिव सागरः ॥ ३८८ ॥
विमानैरन्यदेवानां, विमानं तच्च वेष्टितम् । रुरुचे परिधिचैत्यैर्मूलचैत्यमिवोच्चकैः ॥ ३८९ ॥
अन्योऽन्यं चारुमाणिक्यभित्तिषु प्रतिबिम्बितैः । विमानैर्गर्भितानीव, विमानानि चकाशिरे ॥ ३९० ॥
मागधानां जयजयध्वानैर्दुन्दुभिनिस्वनैः । गन्धर्वानीकनाट्यानीकातोद्यध्वनितैरपि ॥ ३९१ ॥
दिङ्मुखप्रतिफलितैर्द्यां दारयदिवाऽभितः । सौधर्ममध्यतोऽचालीत्, तद् विमानं हरीच्छया ॥ ३९२ ॥
सौधर्मोत्तरतस्तिर्यग्मार्गेणँ च तदुत्तरत् । अलक्षि जम्बूद्वीपस्य, पिधानायेव भाजनम् ॥ ३९३ ॥
हस्तियायिन्नितो याहि, न मे सिंहः सहिष्यते । सादिन्नपसर क्रुद्धः, कासरो वाहनं मम ॥ ३९४ ॥
मृगवाहन ! माऽभ्यागा, नन्वहं द्वीपिवाहनः । सर्पध्वज ! व्रजेतस्त्वं, पश्य मे गरुडं ध्वजे ॥ ३९५ ॥
किं पतस्यन्तरे मे त्वं, गतिविघ्नकरः पुरः । विमानं घट्टयसि भोः !, स्वविमानेन किं मम ? ॥ ३९६ ॥
किं पश्चात्पतितोऽस्येहि, शीघ्रं याति सुराधिपः । मा कुप्य घर्षणेनाऽद्य, सम्मर्दः खलु पर्वणि ॥ ३९७ ॥
सौधर्मकल्पदेवानां, देवेन्द्रमुपसर्पताम् । एवमौत्सुक्यजन्माऽभून्मिथः कोलाहलो महान् ॥ ३९८ ॥
[ पञ्चभिः कुलकम् ]
महाध्वजपटं रेजे, तद् विमानं नभस्तलात् । अम्भोधिमध्यशिखराद्, यानपात्रमिवोत्तरत् ॥ ३९९ ॥
नक्षत्रचक्रमध्येन, मध्येद्रुममिव द्विपः । मतीकुर्वदिव दिवं, मेघमण्डलपङ्किलम् ॥ ४०० ॥
द्वीपाम्भोधीनसङ्ख्यातान्, वेगेनोल्लङ्घ्य वायुवत् । अधिनन्दीश्वरद्वीपं, तद् विमानं समापतत् ॥ ४०१ ॥
तत्र दक्षिणपूर्वस्मिन्, गत्वा रतिकराचले । सञ्चिक्षेप विमानं तदिन्द्रो ग्रन्थं सुधीरिव ॥ ४०२ ॥
समुल्लङ्घ्य समुल्लङ्घ्य, ततोऽर्वाग् द्वीपसागरान् । ततोऽपि सङ्क्षिपंस्तच्च, विमानं क्रमयोगतः ॥ ४०३ ॥
जम्बूद्वीपाऽभिधे द्वीपे, भरतार्द्धे तु दक्षिणे । आदितीर्थकृतो जन्मभवनं प्राप वासवः ॥ ४०४ ॥

१ आसनपरावृत्तिः । २ श्वेतच्छत्रम् । ३ बहिर्मण्डलस्थितचैत्यैः । ४ इन्द्रेच्छया । * °ण प्राचलत्तरम् सं १ ॥
५ हे अश्वारोह ! ।

अथ तेन विमानेन, स्वामिनः सूतिकागृहम् । स प्रदक्षिणयामास, सुमेरुमिव भास्करः ॥ ४०५ ॥
उदक्प्राच्यां तु ककुभि, स पूर्वककुभः प्रभुः । अस्थापयत् तद् विमानं, निधानं धामकोणवत् ॥ ४०६ ॥
ततो विमानादुत्तीर्य, मानादिव महामुनिः । प्रसन्नमानसः शक्रो, जगाम स्वामिसन्निधौ ॥ ४०७ ॥
प्रभुमालोकमात्रेऽपि, प्रणनामाऽमराग्रणीः । उपायनं हि प्रथमं, प्रणामः स्वामिदर्शने ॥ ४०८ ॥
ततः प्रदक्षिणीकृत्य, भगवन्तं समातरम् । प्रणनाम पुनः शक्रो, भक्तौ न पुनरुक्तता ॥ ४०९ ॥
मूर्ध्नि बद्धाञ्जलिर्मूर्द्धाभिषिक्तस्त्रिदिवौकसाम् । भक्तिमान् स्वामिनीमेवं, मरुदेवामवोचत ॥ ४१० ॥
कुक्षौ रत्नधरे ! देवि !, जगद्दीपप्रदायिके ! । नमस्तुभ्यं जगन्मातस्त्वं धन्या पुण्यवत्यसि ॥ ४११ ॥
त्वमेवाऽमोघजन्माऽसि, त्वमेवोत्तमलक्षणा । पुत्रिणीषु त्वमेवाऽसि, पवित्रा भुवनत्रये ॥ ४१२ ॥
धर्मोद्धरणधौरेयश्छन्नमोक्षाध्वदर्शकः । प्रथमस्तीर्थनाथोऽयं, भगवान् सुषुवे यया ॥ ४१३ ॥
अहं सौधर्मदेवेन्द्रो, देवि ! त्वत्तनुजन्मनः । अर्हतो जन्ममहिमोत्सवं कर्तुमिहाऽऽगमम् ॥ ४१४ ॥
भवत्या नैव भेतव्यमित्युदीर्य दिवस्पतिः । अवस्वापनिकां देव्यां, मरुदेव्यां विनिर्ममे ॥ ४१५ ॥
नाभिसूनोः प्रतिच्छन्दं, विदधे मघवा ततः । देव्याः श्रीमरुदेवायाः, पार्श्वे तं च न्यवेशयत् ॥४१६॥
स चक्रे पञ्चधाऽऽत्मानं, पञ्चशक्रास्ततोऽभवन् । तस्याऽर्हा स्वामिनो भक्तिर्नैकाङ्गैः कर्त्तुमीश्यते ॥४१७॥
एकः सङ्क्रन्दनस्तत्र, पुरोभूय प्रणम्य च । भगवन्ननुजानीहीत्युदित्वा [1]प्रश्रयाश्रितम् ॥ ४१८ ॥
गोशीर्षचन्दनाक्ताभ्यां, पाणिभ्यां भुवनेश्वरम् । मूर्त्तिस्थमिव कल्याणं, कल्याणीभक्तिराददे ॥ ४१९ ॥
जगत्तापापनोदैकातपत्रस्य जगत्पतेः । आतपत्रं दधौ मूर्द्धन्येकः शक्रस्तु पृष्ठगः ॥ ४२० ॥
स्वामिनः पार्श्वयोरन्यौ, बाहुदण्डाविव स्थितौ । बिभराञ्चक्रतुश्चारुचामरे चाऽमरेश्वरौ ॥ ४२१ ॥
दम्भोलिदण्डं बिभ्राणो, वल्गन् द्वास्थाग्रणीरिव । अग्रेसरः [3]शुनासीरो, बभूवाऽन्यो जगत्पतेः ॥ ४२२ ॥
वृताः सुरैर्जयजयेत्येकरावीकृताम्बरैः । उत्पेतुरम्बरेणेन्द्रा, अम्बरामलचेतसः ॥ ४२३ ॥
उत्कण्ठितानां देवानां, निपेतुर्भगवत्तनौ । सुधासरस्यां तृषिताध्वगानामिव दृष्टयः ॥ ४२४ ॥
प्रभोस्तदद्भुतं रूपं, द्रष्टुं प्रष्ठा दिवौकसः । पृष्ठवर्त्तीनि नेत्राणि, कामयामासुरात्मनः ॥ ४२५ ॥
अतृप्ताः स्वामिनं द्रष्टुममराः पारिपार्श्विकाः । नाशकन्नन्यतो नेतुं, नयने स्तम्भिते इव ॥ ४२६ ॥
अनुगास्तु सुरा द्रष्टुं, प्रभुमग्रे यियासवः । पर्यस्यन्तो न हि निजं, मित्रस्वाम्याद्यजीगणन् ॥ ४२७ ॥
हृदयान्तरिवाऽर्हन्तं, हृदयद्वारि धारयन् । दिवौकसामधिपतिः, प्राप मेरुमहीधरम् ॥ ४२८ ॥
तत्रान्तः पाण्डकवनं, चूलिकां दक्षिणेन तु । [4]अतिपाण्डुकम्बलायां, शिलायाममलत्विषि ॥ ४२९ ॥
सिंहासनेऽर्हत्स्नात्रार्हे, निजाङ्कस्थापितप्रभुः । सहर्षं न्यसदत् पूर्वाभिमुखः पूर्वदिक्पतिः ॥ ४३० ॥
अत्रान्तरे महाघोषाघण्टानादप्रबोधितैः । अष्टाविंशतिविमानलक्षवास्यमरैर्वृतः ॥ ४३१ ॥
[2]ऐशानकल्पाधिपतिः, शूलभृद् वृषवाहनः । पुष्पकाभियोग्यकृते, विमाने पुष्पके स्थितः ॥ ४३२ ॥
दक्षिणेनैशानकल्पमुत्तीर्णस्तिर्यगध्वना । अधिनन्दीश्वरमुदक्पूर्वे रतिकराचले ॥ ४३३ ॥
विमानमुपसंहृत्य, सौधर्मेन्द्र इव द्रुतम् । आगात् सुमेरुशिरसि, भक्त्या भगवदन्तिकम् ॥ ४३४ ॥
विमानद्वादशलक्षीवासिभिस्त्रिदशैर्वृतः । [3]सनत्कुमारः सुमनोविमानस्थः स चाऽऽययौ ॥ ४३५ ॥
विमानलक्षाष्टकजैर्[4]महेन्द्रोऽप्यन्वितः सुरैः । श्रीवत्सेन विमानेन, मनसेवाऽऽययौ द्रुतम् ॥ ४३६ ॥
चतुर्विमानलक्षस्थैर्वृतो [6]ब्रह्माऽपि नाकिभिः । नन्द्यावर्तविमानेन, स्वामिनोऽभ्यर्णमाययौ ॥ ४३७ ॥
आगाद् विमानपञ्चाशत्सहस्रीवासिभिः सुरैः । कामगवविमानेन, लान्तकोऽपि जिनान्तिकम् ॥ ४३८ ॥

* अयं श्लोक आ पुस्तके न दृश्यते । १ एतदाख्यां निद्राम् । २ विनयसहितम् । ३ इन्द्र । ४ पार्श्वकाः खला ॥
४ एतदाख्यायां शिलायाम् ।

चत्वारिंशत्सहस्राणां, विमानानां सुरैर्वृतः । प्रीतिगमविमानेन, शुक्रो[7]ऽगान्मेरुमूर्द्धनि ॥ ४३९ ॥
[8]सहस्रारः सह सुरैः, षड्विमानसहस्रजैः । मनोरमविमानेनाऽऽययावुपजिनेश्वरम् ॥ ४४० ॥
विमलेन विमानेनाऽऽनत[9]-प्राणतवासवः । चतुर्विमानशतजैः, सुरैः सह समाययौ ॥ ४४१ ॥
[10]आरणाच्युतराजोऽपि, विमानत्रिशतीसुरैः । तत्राऽऽगात् सर्वतोभद्रविमानेनाऽतिरंहसा ॥ ४४२ ॥
रत्नप्रभाया मेदिन्या, बाहल्यान्तर्निवासिनाम् । भवनव्यन्तरेन्द्राणामासनान्यचलंस्तदा ॥ ४४३ ॥
पुर्यां चमरचञ्चायां, सुधर्मायां च पर्षदि । सिंहासने च चमरे, निषण्ण[11]श्चमरासुरः ॥ ४४४ ॥
जिनजन्मावधेर्ज्ञात्वा, लोकज्ञस्यै द्रुमेण च । पत्त्यनीकाधिपेनौघस्वरां घण्टामवादयत् ॥४४५॥
चतुःषष्ट्या सहस्रैः स, सामानिकदिवौकसाम् । *त्रयस्त्रिंशित्रायस्त्रिंशैश्चतुर्भिर्लोकपालकैः ॥ ४४६ ॥
पञ्चभिश्चाग्र्यदेवीभिः, पर्षद्भिस्तिसृभिस्तथा । सप्तभिश्च महानीकैस्तदधीशैश्च सप्तभिः ॥ ४४७ ॥
प्रतिदिश चतुःषष्ट्या, सहस्रैरात्मरक्षिणाम् । वृतोऽपरैरप्यसुरकुमारैः परमर्द्धिभिः ॥ ४४८ ॥
पञ्चयोजनशत्युच्चं, महाध्वजविभूषितम् । पञ्चाशतं सहस्राणि, योजनानि तु विस्तृतम् ॥ ४४९ ॥
विमानमाभियोग्येन, सद्यो देवेन निर्मितम् । अधिरुह्याऽचलत् स्वामिजन्मोत्सवविधित्सया ॥ ४५० ॥
सङ्क्षिप्य शक्रवन्मार्गे, विमानं चमरासुरः । जगाम मेरुशिखरं, स्वाम्यागमपवित्रितम् ॥ ४५१ ॥
[12]बलिश्च बलिचञ्चाया, नगर्या असुरेश्वरः । घण्टां घोषयता तारं, प्राग् महौघस्वराभिधाम् ॥४५२॥
महाद्रुमेण सेनान्या†, सामानिकदिवौकसाम् । षष्ट्या सह§स्रैराहूतैरारक्षैश्च चतुर्गुणैः ॥ ४५३ ॥
त्रायस्त्रिंशादिभिश्चाऽपि, वृतश्चमरवत् सुरैः । जगामामन्दमानन्दमन्दिरं मन्दराचलम् ॥ ४५४ ॥
[ त्रिभिर्विशेषकम् ]

नागेन्द्रो धरणो मेघ[13]स्वराघण्टाप्रताडनात् । पत्तिसेनाधिपतिना, भद्रसेनेन बोधितैः ॥ ४५५ ॥
षट्सामानिकसहस्र्यात्मरक्षैस्तच्चतुर्गुणैः । षड्भिश्च पट्टदेवीभिर्वृतोऽन्यैरपि पन्नगैः ॥ ४५६ ॥
योजनानां सहस्राणि, पञ्चविंशानि विस्तृतम् । सार्द्धद्वियोजनशतीतुङ्गेन्द्रध्वजभूषितम् ॥ ४५७ ॥
विमानरत्नमारुह्य, भगवद्दर्शनोत्सुकः । मन्दराचलमूर्द्धानमाससाद क्षणादपि ॥ ४५८ ॥
[ चतुर्भिः कलापकम् ]

[14]भूतानन्दोऽपि नागेन्द्रो, घण्टां मेघस्वरां घ्नता । पत्त्यनीकेशदक्षेणाहूतैः सामानिकादिभिः ॥ ४५९ ॥
वृतो विमानमारुह्याभियोगिकसुरोद्भवम् । जगाम त्रिजगन्नाथसनाथं मन्दराचलम् ॥ ४६० [ युग्मम् ]
इन्द्रौ विद्युत्कुमाराणां, [15]हरिर्[16]हरिसहस्तथा । सुपर्णानां [17]वेणुदेवो, [18]वेणुदारी च वासवौ ॥ ४६१ ॥
इन्द्रावग्निकुमाराणामग्नि[19]शिखा[20]ग्निमाणवौ । समीरणकुमाराणां, [21]वेलम्बाख्य[22]प्रभञ्जनौ ॥४६२॥
स्तनितानां [23]सुघोषश्च, [24]महाघोषश्च नायकौ । तथोदधिकुमाराणां, [25]जलकान्त[26]जलप्रभौ ॥४६३॥
[27]पूर्णो [28]विशिष्टश्च द्वीपकुमाराणां पुरन्दरौ । तथैव दिक्कुमाराणाम[29]मिता[30]मितवाहनौ ॥ ४६४ ॥
व्यन्तरेषु [31]काल[32]महाकालौ पिशाचवासवौ । [33]सुरूपः [34]प्रतिरूपश्च, तथा भूतपुरन्दरौ ॥ ४६५ ॥
यक्षराजौ [35]पूर्णभद्रो, [36]माणिभद्रश्च नामतः । इन्द्रौ [37]भीम[38]महाभीमनामानौ रक्षसां पुनः ॥ ४६६ ॥
[39]किन्नरः [40]किम्पुरुषश्च, किन्नराणामधीश्वरौ । तथा [41]सत्पुरुष[42]महापुरुषौ किम्पुरुषपौ ॥ ४६७ ॥
[43]अतिकाय[44]महाकायौ, महोरगपुरन्दरौ । [45]गीतरति[46]र्गीतयशा, गन्धर्वाणां तु वासवौ ॥ ४६८ ॥
तथैवाऽप्रज्ञप्तिपञ्चप्रज्ञप्त्यादीनां षोडश । व्यन्तराष्टनिकायानां, वज्रिणः समुपाययुः ॥ ४६९ ॥
तत्राऽप्रज्ञप्तीनामिन्द्रौ, [47]सन्निहितः [48]समानकः । [49]धाता [50]विधाता च पञ्चप्रज्ञप्तीनां त्वधीश्वरौ ॥४७०॥

* त्रयस्त्रिंशत्राय° आ, त्रयस्त्रिंशैः पारिषद्यैश्चतु° सं १ ॥ † °न्याहूतैः सामानिकैः सुरैः आ ॥ § °हस्रैस्तेभ्योऽङ्गरक्षकैश्च सं १ आ ॥

ऋषिवादितकानां तु, ऋषिश्च[51] ऋषिपालकः[52] । तथा भूतवादितानामीश्वरो[53]ऽथ महेश्वरः[54] ॥४७१॥
क्रन्दितानां पुनरिन्द्रौ, सुवत्सक[55]विशालकौ[56] । महाक्रन्दितकानां तु, हास[57]हासरती[58] हरी ॥४७२॥
कुष्माण्डानां पुनः श्वेत[59]महाश्वेत[60]पुरन्दरौ । पवक[61]पवकपती[62], पावकानां तु वासवौ ॥ ४७३ ॥
ज्योतिष्काणामसङ्ख्यातौ[63], चन्द्रादित्यौ[64]वुपेयतुः । इतीन्द्राणां चतुःषष्टिराययौ मेरुमूर्द्धनि ॥ ४७४ ॥
आदिक्षदच्युतेन्द्रोऽथ, त्रिदशानाभियोगिकान् । जिनजन्माभिषेकोपकरणान्यानयन्त्विति ॥ ४७५ ॥
अथ किञ्चिदपक्रम्योत्तरपूर्वदिशि क्षणात् । ते वैक्रियसमुद्घातेनाकृष्योत्तमपुद्गलान् ॥ ४७६ ॥
सौवर्णान् राजतान् रत्नमयान् काञ्चनराजतान् । स्वर्णरत्नमयान् स्वर्णरूप्यरत्नमयानपि ॥ ४७७ ॥
रूप्यरत्नमयान् भौमान्, कलशान् पूजिताननान् । रम्यान् प्रत्येकमष्टाग्रसहस्रं ते विचक्रिरे ॥ ४७८ ॥
[ त्रिभिर्विशेषकम् ]

भृङ्गारान् दर्पणान् रत्नकरण्डान् सुप्रतिष्ठकान् । स्थालानि पात्रिकाश्चाऽपि, पुष्पचङ्गेरिका अपि ॥ ४७९ ॥
प्रत्येकं कुम्भसङ्ख्यातांस्तद्वत्स्वर्णादिवस्तुजान् । तत्कालं ढौकयामासुरग्रे निष्पादितानिव ॥ ४८० ॥
[ सन्दानितकम् ]

कलशांस्तानुपादाय, ते देवा आभियोगिकाः । क्षीरोदधावाददिरे, वारि वारिधरा इव ॥ ४८१ ॥
तत्रागृह्णन् पुण्डरीकोत्पलकोकनदानि[1] ते । तदम्भसामभिज्ञानमिव दर्शयितुं हरेः ॥ ४८२ ॥
उदधौ पुष्करोदेऽपि, जगृहुः पुष्कराणि ते । निपान[2] इव पानीय[3]हारिकाः कुम्भपाणयः ॥ ४८३ ॥
†भरतैरवतादीनां, तीर्थेषु मागधादिषु । तेऽम्भो मृत्स्नां च जगृहुः, कर्तुं कुम्भानिवाऽधिकान् ॥४८४॥
गङ्गादिकानां च महानदीनामुदकानि ते । समुपाददिरे स्वैरं, शौल्किका इव वर्णिकाम् ॥ ४८५ ॥
ते क्षुद्रहिमवत्येत्याग्रृह्णन् न्यासीकृतानिव । सिद्धार्थपुष्पतुवरगन्धान् सर्वौषधीरपि ॥ ४८६ ॥
तत्र पद्माभिधह्रदादम्भांस्यम्भोरुहाणि च । विमलानि सुगन्धीनि, जगृहुः पावनानि ते ॥ ४८७ ॥
तेऽन्यवर्षधरेभ्योऽम्बुपद्माद्याददिरे तथा । प्रस्पर्धिन इवाऽन्योन्यमेकस्मिन् कर्मणीरिताः ॥ ४८८ ॥
अगृह्णन्नखिलक्षेत्रवैताढ्यविजयेष्वपि । अम्भोऽम्भोजादिकं[4] तत्राऽतृप्ताः स्वामिप्रसादवत् ॥ ४८९ ॥
वक्षारकगिरिभ्योऽपि, ते पवित्रं सुगन्धि च । तत् तदाददिरे वस्तु, तदर्थमिव सञ्चितम् ॥ ४९० ॥
देवोत्तरकुरुभ्योऽपि, पूरयामासुरम्भसा । स्वामिव श्रेयसा तेऽथ, कलसानलसेतराः[5] ॥ ४९१ ॥
भद्रशाले नन्दने च, सौमनसेऽथ पाण्डके । जगृहुः सर्वं तुवरगोशीर्षचन्दनादि ते ॥ ४९२ ॥
गन्धकारा इवैकत्र, गन्धद्रव्यं जलानि च । मेलयित्वा समाजग्मुर्मङ्क्षु ते मेरुमूर्द्धनि ॥ ४९३ ॥
सामानिकानां दशभिः, सहस्रैस्तच्चतुर्गुणैः । आत्मरक्षैस्त्रायस्त्रिंशैस्त्रयस्त्रिंशन्मितैस्तथा ॥ ४९४ ॥
तिसृभिः परिषद्भिश्च, चतुर्भिर्लोकपालकैः । सप्तभिश्च महानीकैरनीकेशैश्च सप्तभिः ॥ ४९५ ॥
आरणाच्युतकल्पेन्द्रः, सर्वतः परिवारितः । भगवन्तं स्नपयितुं, ततः शुचिरुपास्थित ॥ ४९६ ॥
[ त्रिभिर्विशेषकम् ]

ततः कृतोत्तरासङ्गो, निःसङ्गाभक्तिरच्युतः । उन्निद्रपारिजातादिपुष्पाञ्जलिमुपाददे ॥ ४९७ ॥
अस्तोकधूपधूमेन, धूपायित्वा सुगन्धिना । मुमोच त्रिजगद्भर्तुः, पुरस्तं कुसुमाञ्जलिम् ॥ ४९८ ॥
देवैरानिन्यिरे गन्धाम्भस्कुम्भाः स्रग्भिरर्चिताः । स्मयमाना इव स्वामिसान्निध्योद्भूतया मुदा ॥ ४९९ ॥
चकासामासुरास्यस्थैस्ते पद्मैर्मुखरालिभिः । अधीयाना इव स्वामिस्नात्रमङ्गलमादिमम् ॥ ५०० ॥
अलक्ष्यन्त च ते कुम्भाः, स्वामिस्नपनहेतवे । पातालतः समायाताः, पातालकलशा इव ॥ ५०१ ॥

---

* योजनान° आ ॥   १ कमलभेदा ।   २ जलाशये ।   ३ जलग्राहिण्य. ।   † भरतैरावता° आ, सं २ ॥
४ जलकमलादिकम् ।   ५ आलस्यरहिताः ।

अच्युतेन्द्र उपादत्त, समं सामानिकादिभिः । कुम्भान् सहस्रमष्टाग्रं, फलानीव स्वसम्पदः ॥ ५०२ ॥
ते तेषां रेजुरुत्क्षिप्तभुजदण्डाग्रवर्त्तिनः । उदस्तोन्नालनलिनकोशलक्ष्मीविडम्बिनः ॥ ५०३ ॥
अच्युतेन्द्रः स्नपयितुमथाऽऽरेभे जगत्पतिम् । आत्मीयमिव मूर्द्धानं, कलसं नमयन् मनाक् ॥ ५०४ ॥
अथोच्चैर्वादयामासुर्नाकिनः केचिदानकान् । गुहाप्रतिरवैरुच्चैर्वाचालितसुराचलान् ॥ ५०५ ॥
दुन्दुभींस्ताडयामासुरपरे भक्तितत्पराः । मन्थायस्तमहाम्भोधिध्वानश्रीतस्करध्वनीन् ॥ ५०६ ॥
उत्तालाः कांस्यतालानि, केचिदास्फालयन् मिथः । पर्याकुलध्वनिस्रोतःकल्लोलाननिला इव ॥ ५०७ ॥
अवादयन् केऽपि तारं, भेरीरुन्मुखशालिनीः । ऊर्ध्वलोके जिनेन्द्राज्ञां, सर्वतस्तन्वतीरिव ॥ ५०८ ॥
अपूरयन् महानादबहलाः केऽपि काहलाः । नाहेला इव गोशृङ्गाण्यद्रिशृङ्गस्थिताः सुराः ॥ ५०९ ॥
दुष्टशिष्यानिवोद्घोषहेतवे मुरजान् मुहुः । पाणिभिस्ताडयामासुः, केचन त्रिदिवौकसः ॥ ५१० ॥
असङ्ख्यातागतार्केन्दुमण्डलश्रीविडम्बिनीः । स्वर्णरूप्यमयीर्देवा, झल्लरीः केऽप्यवादयन् ॥ ५११ ॥
गण्डैः पीयूषगण्डूषगर्भैरिव समुन्नतैः । तारमापूरयामासुः, शङ्खान् केऽपि दिवौकसः ॥ ५१२ ॥
इत्थं विचित्रातोद्येषु, वाद्यमानेषु नाकिभिः । अवादकमिवाऽऽतोद्यं, द्यौरासीत् प्रतिशब्दितैः ॥ ५१३ ॥
जय नन्द जगन्नाथ !, सिद्धिगामिन् ! कृपार्णव ! । धर्मप्रवर्त्तकेत्यादि, चारणश्रमणा जगुः ॥ ५१४ ॥
विचित्रैर्ध्रुवकैः श्लोकैरुत्साहैः स्कन्धकैरपि । गलितैर्वस्तुवदनैर्गद्यैरपि मनोहरैः ॥ ५१५ ॥
स्तुतिं पठित्वा मधुरां, कुम्भान् भुवनभर्त्तरि । शनैः प्रलोठयामासाऽच्युतेन्द्रः स्वामरैः समम् ॥५१६ ॥
तेऽम्भस्कुम्भाः शुशुभिरे, लुठन्तः स्वामिमूर्द्धनि । सुमेरुशैलशिखरे, वर्षन्त इव वारिदाः ॥ ५१७ ॥
अमरैर्नाम्यमानास्ते, मूर्द्धन्युभयतः प्रभुम् । सद्यः सङ्घटयामासुर्माणिक्योत्तंसविभ्रमम् ॥ ५१८ ॥
कुम्भेभ्यः पूजितास्येभ्यस्ताः पतन्त्यश्चकाशिरे । वारिधारा गिरिदरीमुखेभ्य इव निर्झराः ॥ ५१९ ॥
उच्छलन्त्यो मौलिदेशाद्, विष्वद्रीच्यो जलच्छटाः । स्वामिनो धर्मकन्दस्य, प्ररोहा इव रेजिरे ॥ ५२० ॥
परिवेषेण विस्तीर्णं, मूर्ध्नि श्वेतातपत्रवत् । ललाटपट्टे प्रसरच्चान्दनीव ललाटिका ॥ ५२१ ॥
कर्णयोः प्रान्तविश्रान्तनयनोपान्तकान्तिवत् । कपोलपाल्योः कर्पूरपत्रवल्लिवितानवत् ॥ ५२२ ॥
मनोज्ञयोरधरयोः, स्मितद्युतिकलापवत् । कण्ठकन्दलदेशे तूद्दाममौक्तिकदामवत् ॥ ५२३ ॥
स्कन्धदेशोपरिष्टाच्च, गोशीर्षस्थासकोपमम् । बाहुहृत्पृष्ठभागेषु, विशाल इव चोलकः ॥ ५२४ ॥
कटिजान्वन्तराले चोत्तरीयमिव विस्तृतम् । पतद् भगवति भ्रेजे, क्षीरोदाद्युदकं तदा ॥ ५२५ ॥
[ पञ्चभिः कुलकम् ]
स्वामिस्नात्रजलं तच्च, भूमावपतदेव हि । श्रद्धया जगृहे कैश्चिन्मेघाम्भश्चातकैरिव ॥ ५२६ ॥
क्व नाम प्राप्स्यतेऽस्माभिर्भूयोऽद इति मूर्द्धनि । तत्पयः केचिदमरा, न्यधुर्मरुनरा इव ॥ ५२७ ॥
पयसा सिषिचे तेन, साभिलाषैश्च कैश्चन । भूयो भूयो वपुर्देवैर्ग्रीष्मार्त्तैरिव कुञ्जरैः ॥ ५२८ ॥
रयेण प्रसरन्मेरुगिरिप्रस्थेषु तत् पयः । अकल्पयन्निर्झरिणीसहस्राणि समन्ततः ॥ ५२९ ॥
तत् पाण्डके सौमनसे, नन्दने भद्रशालके । उद्याने प्रसृतातुल्यकुल्यालीलामशिश्रियत् ॥ ५३० ॥
हरेः स्नपयतः कुम्भा, भवन्तोऽधोमुखा बभुः । स्नात्रस्तोकीभवद्वारिसम्पदा लज्जिता इव ॥ ५३१ ॥
तानेव बिभराञ्चक्रुः, कुम्भान् कुम्भान्तराम्बुभिः । आभियोगिकगीर्वाणाः, कुर्वाणाः स्वामिशासनम्॥५३२॥
वृन्दारकाणां हस्तेषु, हस्तेभ्यः सञ्चरिष्णवः । बभ्राजिरे ते कलशाः, श्रीमतां बालका इव ॥ ५३३ ॥
ढौक्यमानाऽभितो नाभिसूनुं कलशधोरणी । आरोप्यमाणस्वर्णाब्जमालालीलायितं दधौ ॥ ५३४ ॥

१ ढक्काविशेषान् । २ किराताः । ३ वादकजनरहितम् । * प्रभोः आ, सं २ ॥ † योजनास्येभ्यस्ताः आ ॥
४ ललाटालङ्कारः ।

पुनः प्रालोठयन् कुम्भानमराः स्वामिमूर्द्धनि । पयःशब्दायितमुखानर्हत्स्तुतिपरानिव ॥ ५३५ ॥
स्वामिस्नात्रे हरे रिक्तरिक्तान् कुम्भानपूरयन् । अमराश्चक्रिणो यक्षा, निधानकलशानिव ॥ ५३६ ॥
रिक्तरिक्ता भृतभृता, रेजिरे सञ्चरिष्णवः । भूयो भूयः कलशास्तेऽरघट्टघटिका इव ॥ ५३७ ॥
एवमच्युतनाथेन, यथेष्टं कुम्भकोटिभिः । स्वामिनो विदधे स्नात्रं, चित्रमात्मा पवित्रितः ॥ ५३८ ॥
दिव्यया गन्धकाषाय्याऽऽरणाच्युतविभुर्विभोः । अङ्गमुन्मार्जयामास, स्वयं मार्जितमान्यथ ॥ ५३९ ॥
सा रेजे गन्धकाषायी, स्पृशन्ती स्वामिनो वपुः । प्रातःसन्ध्याभ्रलेखेव, मण्डलं चण्डरोचिषः ॥ ५४० ॥
सुवर्णसारसर्वस्वं, सुवर्णाद्रेरिवैकतः । आहृतं शुशुभे तादृगुन्मृष्टं भगवद्वपुः ॥ ५४१ ॥
अथाऽऽभियोग्या गोशीर्षचन्दनद्रवकर्दमम् । पात्रिकाभिर्विचित्राभिरच्युतायोपनिन्यिरे ॥ ५४२ ॥
विलेपयितुमारेभे, प्रभुं तेन पुरन्दरः । सुमेरुशैलकटकं, ज्योत्स्नयेव निशाकरः ॥ ५४३ ॥
अभितः स्वामिनं केचिदुत्तरासङ्गधारिणः । उद्दामधूपदहनपाणयोऽस्थुरथाऽमराः ॥ ५४४ ॥
केऽपि तत्राऽक्षिपन् धूपं, स्निग्धया धूमलेखया । मेरोर्नीलमयीं चूलां, रचयन्त इवाऽपराम् ॥ ५४५ ॥
केऽपि श्वेतातपत्राणि, धारयामासुरुच्चकैः । कुमुद्वदिव कुर्वाणा, अन्तरिक्षमहासरः ॥ ५४६ ॥
केचिदन्दोलयामासुश्चामराण्यमरोत्तमाः । आह्वयन्त इवाऽऽत्मीयान्, स्वामिदर्शनहेतवे ॥ ५४७ ॥
केचिद् बद्धपरिकरा, बिभ्राणाः स्वस्वमायुधम् । परितः स्वामिनं तस्थुरात्मरक्षा इवाऽमराः ॥ ५४८ ॥
सुराः केचिन्मणिस्वर्णतालवृन्तान्यचीचलन् । उद्यद्विद्युल्लतालीलां, दर्शयन्तो नभस्तले ॥ ५४९ ॥
विचित्रदिव्यसुमनोवृष्टिं त्रिदिववासिनः । हर्षोत्कर्षजुषोऽकार्षुः, रङ्गाचार्या इवाऽपरे ॥ ५५० ॥
नितान्तसुरभिं गन्धद्रव्यक्षोदं चतुर्दिशम् । अवर्षन्नपरे चूर्णमुच्चाटनमिवांहसाम् ॥ ५५१ ॥
स्वामिनाऽधिष्ठितस्याऽद्रेर्मेरोरृद्धिमिवाऽधिकाम् । चिकीर्षवः केऽपि सुराः, स्वर्णवृष्टिं वितेनिरे ॥ ५५२ ॥
स्वामिपादप्रणामावतरत्ताराविडम्बिनीम् । केचिदुच्चै रत्नवृष्टिं, त्रिविष्टपसदो व्यधुः ॥ ५५३ ॥
गन्धर्वानीकमधरीकुर्वन्तो मधुरस्वरैः । ग्रामरागैर्नवनवैः, केचन स्वामिनं जगुः ॥ ५५४ ॥
ततान्यथाऽवनद्धानि, घनानि शुषिराणि च । वादयामासुरातोद्यान्यन्ये भक्तिर्ह्यनेकधा ॥ ५५५ ॥
निनर्त्तयिषव इव, स्वर्णशैलशिरांस्यपि । पादपातैः कम्पयन्तो, ननृतुः केऽपि नाकिनः ॥ ५५६ ॥
नाट्यं प्रवर्त्तयामासुर्वैचित्र्याभिनयोज्ज्वलम् । त्रिदशाः सह जायाभिर्जायाजीवा इवाऽपरे ॥ ५५७ ॥
गरुत्मन्त इवोत्पेतुरुग्मगाः केचिदम्बरे । निपेतुः क्रीडया केचित्, ताम्रचूडा इवाऽवनौ ॥ ५५८ ॥
ववल्गुर्वल्गु केऽप्यङ्ककारा इव दिवौकसः । केऽपि सिंहा इवाऽऽनन्दात्, सिंहनादं वितेनिरे ॥ ५५९ ॥
उच्चैश्चक्रिरे केचित्, कुञ्जरा इव बृंहितम् । महर्षा हेषितं केचित्, नेनिरे तुरगा इव ॥ ५६० ॥
स्यन्दना इव केचिच्च, व्यधुर्घणघणारवम् । विदूषका इवाऽन्येषां, चक्रुः शब्दचतुष्टयीम् ॥ ५६१ ॥
कूर्दमानाः केऽपि मेरुशिखराण्यङ्घ्रिदर्दरैः । अकम्पयन् भृशं शाखिशाखाः शाखामृगा इव ॥ ५६२ ॥
उद्भटं ताडयामासुश्चपेटाभिर्महीतलम् । रणप्रतिज्ञाकरणोद्यता वीरा इवाऽपरे ॥ ५६३ ॥
कोलाहलं विदधिरे, केचिज्जितपणा इव । स्कन्धातोद्यवदुत्फुल्लौ, गल्लौ केचिदवादयन् ॥ ५६४ ॥
विकृतीभूय विटवत्, केऽपि लोकानहासयन् । केऽप्यग्रे पार्श्वयोः पश्चाद्, ववल्गुः कन्दुका इव ॥५६५॥
केचिच्च मण्डलीभूय, रम्यावलयगायिनः । चक्रुर्नृत्तं मनोहारि, हल्लीसकमिव स्त्रियः ॥ ५६६ ॥
केऽप्यज्वलन् ज्वलनवदतपन् केऽपि सूर्यवत् । अगर्जन् मेघवत् केऽपि, केऽपि विद्युद्वदद्युतन् ॥ ५६७ ॥
केचिदोदनसम्पूर्णाश्छात्रा इव विचक्रिरे । तादृक् स्वाम्याप्तिजानन्दः, शक्यते केन गोपितुम् ? ॥५६८॥
बहुप्रकारमानन्दविकारं धारयत्स्वपि । देवेष्वच्युतदेवेन्द्रश्चक्रे भर्तुर्विलेपनम् ॥ ५६९ ॥

१ रङ्गाचार्या. । २ कुक्कुटा । ३ मल्ला. ।

पारिजातादिभिः पुष्पैर्विकसद्भिः स्वभक्तिवत् । ततोऽच्युतपतिः पूजां, चक्रे जिनपतेः स्वयम् ॥ ५७० ॥
अपसृत्य ततः किञ्चित्, स्वामिनं भक्तिवामनः । प्रणनाम ववन्दे च, सोऽन्तेवासीव वासवः ॥ ५७१ ॥
एवं द्वाषष्टिरन्येऽपि, शक्राश्चक्रुर्जगत्पतेः । स्नात्राङ्गरागौ पूजां चाऽनुज्येष्ठं सोदरा इव ॥ ५७२ ॥
विकृत्य पञ्चधाऽऽत्मानमथ सौधर्मराजवत् । उत्सङ्गे त्रिजगन्नाथं, जग्राहैशानवासवः ॥ ५७३ ॥
तत्रैकोऽधाद् विभोर्मूर्ध्नि, छत्रं कर्पूरपाण्डुरम् । मुक्तावचूलैः प्रेङ्खद्भिर्दिशां लास्यमिवोद्दिशत् ॥ ५७४ ॥
वीजयामासतुश्चाऽन्यौ, चामराभ्यां जिनेश्वरम् । विक्षिप्तकरणेनोच्चैर्नृत्यन्त्याविव सम्मदात् ॥ ५७५ ॥
शूलमुल्लालयन् पाणावपरः पुरतोऽभवत् । स्वामिनो दृष्टिपातैः स्वं, पूतीकर्त्तुमना इव ॥ ५७६ ॥
अथ सौधर्मकल्पेन्द्रो जगद्भर्तुश्चतुर्दिशम् । चत्वारि स्फाटिकोत्तुङ्गवृषरूपाणि निर्ममे ॥ ५७७ ॥
उत्तुङ्गशृङ्गरुचिरा, वृषभास्ते चकाशिरे । दिशां चतसृणां चान्द्रकान्ताः क्रीडाचला इव ॥ ५७८ ॥
तेषां स्फोटितपातालनालेभ्य इव सन्तताः । शृङ्गेभ्योऽष्टभ्य उत्पेतुर्वारिधारा नभस्तले ॥ ५७९ ॥
मूले भिन्नास्तोयधाराधोरण्यस्ता निरन्तराः । अन्ते मिलन्त्यः खे चक्रुर्नदीसङ्गमविभ्रमम् ॥ ५८० ॥
सकौतुकं वीक्ष्यमाणाः, सुरासुरवधूजनैः । ताः पेतुर्जगतांपत्यावपांपत्याविवाऽऽपगाः ॥ ५८१ ॥
शृङ्गेभ्यो जलयन्त्रेभ्य, इव निर्यद्भिरम्बुभिः । शक्रेण स्नपयाञ्चक्रे, भगवानादितीर्थकृत् ॥ ५८२ ॥
दूरमुच्छलता तेन, स्वामिस्नपनवारिणा । आसन् भक्त्या मनांसीव, वासांस्यार्द्राणि नाकिनाम् ॥ ५८३ ॥
चतुरोऽपि महोक्षांस्तानुपसंहृतवानथ । प्राचीनबर्हिः सहसेन्द्रजालमिव जालिकः ॥ ५८४ ॥
स्नपयित्वाऽतिविच्छर्दादिवं देवप्रभुः प्रभोः । रत्नादर्शमिवाऽमार्जदङ्गं देवाङ्गवाससा ॥ ५८५ ॥
अथ रत्नमये पट्टे, निर्मलै रूप्यतन्दुलैः । अखण्डैरालिखन् लेखाः, स्वामिनोऽग्रेऽष्टमङ्गलीम् ॥ ५८६ ॥
निजेनेवाऽनुरागेणाऽङ्गरागेण गरीयसा । अङ्गं विलेपयामास, वासवस्त्रिजगद्गुरोः ॥ ५८७ ॥
स्वामिनः सेरवक्त्रेन्दुकौमुदीभ्रमकारिभिः । विशदैर्दिव्यवासोभिः, पूजां व्यधित देवराट् ॥ ५८८ ॥
विश्वमूर्द्धन्यताचिह्नं, मूर्द्धनि त्रिजगत्पतेः । वज्रमाणिक्यमुकुटं, स्थापयामास वज्रभृत् ॥ ५८९ ॥
न्यधत्त मघवा भर्तुः, कर्णयोः स्वर्णकुण्डले । व्योम्नः पूर्वापरदिशोः, सायं शशिरवी इव ॥ ५९० ॥
लक्ष्म्या विभ्रमदोलेव, दिव्यमुक्तालता तता । न्यक्षेपि पुरुहूतेन, स्वामिनः कण्ठकन्दले ॥ ५९१ ॥
सोऽङ्गदे निदधे बाहुदण्डयोस्त्रिजगत्पतेः । सुवर्णवलये भद्रकलभस्येव दन्तयोः ॥ ५९२ ॥
वृत्तोरुमौक्तिकमणिकङ्कणे मणिबन्धयोः । स न्यधत्त प्रभोः शाखिशाखान्तस्तबकोपमे ॥ ५९३ ॥
स स्वर्णकटिसूत्रं च, कटिदेशे न्यधाद् विभोः । वर्षधरनितम्बस्थस्वर्णकूलाविलासभृत् ॥ ५९४ ॥
माणिक्यपादकटके, स न्यवीविशदीशितुः । अङ्घ्र्योर्लग्ने देवदैत्यतेजसी इव सर्वतः ॥ ५९५ ॥
अलङ्काराय यानीन्द्रो, भूषणानि न्यवीविशत् । अलङ्कृतानि तान्येव, प्रत्युताङ्गैर्जगद्गुरोः ॥ ५९६ ॥
उन्निद्रपारिजातादिदामभिः परमेश्वरम् । भक्तिवासितचेतस्कः, पूजयामास वासवः ॥ ५९७ ॥
कृतकृत्य इवाऽथाऽपसृत्य किञ्चित् पुरन्दरः । पुरोभूय जगद्भर्तुरारात्रिकमुपाददे ॥ ५९८ ॥
ज्वलद्दीपत्विषा तेन, चकासामास कौशिकः । भास्वदोषधिचक्रेण, शृङ्गेणेव महागिरिः ॥ ५९९ ॥
श्रद्धालुभिः सुरवरैः, प्रकीर्णकुसुमोत्करम् । भर्तुरुत्तारयामास, तत्रिस्त्रिदशपुङ्गवः ॥ ६०० ॥
शक्रः शक्रस्तवेनाऽथ !, वन्दित्वा परमेश्वरम् । रोमाञ्चितवपुर्भक्त्या, स्तोतुमित्युपचक्रमे ॥ ६०१ ॥
नमस्तुभ्यं जगन्नाथ !, त्रैलोक्याम्भोजभास्कर ! । संसारमरुकल्पद्रो !, विश्वोद्धरणबान्धव ! ॥ ६०२ ॥
वन्दनीयो मुहूर्तोऽयं, यत्र ते धर्मजन्मनः । अपुनर्जन्मनो जन्म, दुःखच्छिद् विश्वजन्मिनाम् ॥ ६०३ ॥
युष्मज्जन्माभिषेकाम्भःपूरैराप्लाविताऽधुना । अयत्नक्षालितमला, सत्या रत्नप्रभा प्रभो ! ॥ ६०४ ॥

१ समुद्रे । २ इन्द्रः । ३ देवाः । ४ इन्द्रः ।

मनुष्याः खलु ते धन्या, ये त्वां द्रक्ष्यन्त्यहर्निशम् । यथासमयमेव त्वां, द्रष्टारः कीदृशा वयम् ? ॥६०५॥
भरतक्षेत्रजन्तूनां, मोक्षमार्गोऽखिलः खिलः । त्वया नूतनपान्थेन, नाथ ! प्रकटयिष्यते ॥ ६०६ ॥
साऽस्तु तावत् तव सुधासध्रीची धर्मदेशना । त्वद्दर्शनमपि श्रेयो, विश्राणयति जन्मिनाम् ॥ ६०७ ॥
न कश्चिदुपमापात्रं, भवतो भवतारक ! । ब्रूमस्त्वत्तुल्यमेव त्वां, यदि का तर्हि ते स्तुतिः ? ॥ ६०८ ॥
नाऽस्मि वक्तुमलं नाथ !, सद्भूतानपि ते गुणान् । स्वयम्भूरमणाम्भोधेर्मातुमम्भांसि कः क्षमः ?॥६०९॥
इति स्तुत्वा जगन्नाथं, प्रमोदामोदिमानसः । विचक्रे पञ्चधाऽऽत्मानं, पूर्ववत् पूर्वदिक्पतिः ॥ ६१० ॥
ईशानोत्सङ्गतः शक्रः, एकस्तत्राऽग्रमद्वरः । रहस्यमिव जग्राह, हृदयेन जगत्पतिम् ॥ ६११ ॥
अपरे पूर्ववत् स्वानि, स्वानि कर्माणि चक्रिरे । विनियुक्ता इव स्वामिसेवाविज्ञा बिडौजसः ॥ ६१२ ॥
वृतो निजामरैः सर्पन्नम्बरेणाऽमराग्रणीः । जगाम धाम तद् देव्याऽलङ्कृतं मरुदेवया ॥ ६१३ ॥
तीर्थकृत्प्रतिरूपं तदुपसंहृत्य वासवः । तथैव स्थापयामास, स्वामिनं मातुरन्तिके ॥ ६१४ ॥
तामवस्वापनीं निद्रां, पद्मिन्या इव भास्करः । स्वामिन्या मरुदेवाया, व्यपनिन्ये दिवस्पतिः ॥६१५॥
कूलिनीकूललुलितहंसमालाविलासभृत् । एकं दुकूलयुगलमुच्छीर्षे सोऽमुचत् प्रभोः ॥ ६१६ ॥
तत्रैव स न्यधाद् रत्नकुण्डलद्वयमीशितुः । बालत्वेऽपि समुद्भूतभामण्डलविकल्पदम् ॥ ६१७ ॥
एकं श्रीदामगण्डं च, स्वर्णप्राकारनिर्मितम् । विचित्ररत्नहारार्धहाराढ्यं हेमभासुरम् ॥ ६१८ ॥
उपरि स्वामिनो दृष्टिविनोदाय पुरन्दरः । विताने स्थापयामास, नभसीव नभोमणिम् ॥ ६१९ ॥
[ सन्दानितकम् ]

अथ स श्रीदमादिक्षत्, प्रत्येकमपि सम्प्रति । हिरण्यस्वर्णरत्नानां, कोटीर्द्वात्रिंशतं द्रुतम् ॥ ६२० ॥
नन्दासन-भद्रासनान्यथ द्वात्रिंशतं पृथक् । अन्यच्च वस्त्रनेपथ्यप्रभृत्यतिमनोहरम् ॥ ६२१ ॥
सांसारिकसुखोत्पादि, महार्घं वस्तु सर्वतः । स्वामिनो भवनेऽमुष्मिन्निधेह्याप इवाऽम्बुदः ॥ ६२२ ॥
[ त्रिभिर्विशेषकम् ]

कुबेरः कारयामास, तत् सद्यो जृम्भकामरैः । आज्ञा ह्याखण्डलस्येनं, वचसा नहि सिध्यति ॥ ६२३ ॥
अथाभियोगिकान् देवानादिदेशेति वासवः । उच्चैर्देवनिकायेषु, चतुर्ष्वघोषयतामिदम् ॥ ६२४ ॥
अर्हतोऽर्हज्जनन्याश्च, योऽशुभं चिन्तयिष्यति । तस्यार्जकमञ्जरीव, सप्तधा भेत्स्यते शिरः ॥ ६२५ ॥
भवनपतिव्यन्तरज्योतिर्वैमानिकेषु तत् । ते समुद्घुघुषुः शिष्या, वाचमुच्चैर्गुरोरिव ॥ ६२६ ॥
शक्रः सङ्क्रमयामास, नानाहाररसामृतम् । स्वाम्यङ्गुष्ठेऽमृतनाडीं चक्रे मातुरिवाऽप्मयम् ॥ ६२७ ॥
अर्हन्तोऽस्तन्यपा यस्मात्, किन्तु क्षुदुदये सति । प्रक्षिपन्ति स्वकेऽङ्गुष्ठं, स्वमेव रसवर्षिणम् ॥ ६२८ ॥
धात्रीकर्माणि सर्वाणि, निर्मापयितुमीशितुः । धात्रीरप्सरसः पञ्चाऽऽदिदेश द्युसदांपतिः ॥ ६२९ ॥
तदा च बहवो देवा, जिनस्नात्रादनन्तरम् । सुमेरोरिव गत्वा, द्वीपं नन्दीश्वरं ययुः ॥ ६३० ॥
श्रीनाभिसूनुसदनात्, सौधर्मेन्द्रोऽपि च द्रुतम् । ययौ नन्दीश्वरद्वीपं, निवासं स्वर्गवासिनाम् ॥ ६३१ ॥
तत्र शक्रः क्षुद्रमेरुप्रमाणे पूर्वदिक्स्थिते । नामतो देवरमणेऽञ्जनाद्राववतीर्णवान् ॥ ६३२ ॥
तत्र चैत्ये चतुर्द्वारे, विचित्रमणिपीठिके । चैत्यद्रुमेन्द्रध्वजाङ्के, प्राविशद् द्युसदांपतिः ॥ ६३३ ॥
ऋषभप्रभृतीरर्हत्प्रतिमास्तत्र शाश्वतीः । यथावत् पूजयामास, सोऽष्टाह्निकामहपूर्वकम् ॥ ६३४ ॥
तस्य चाऽद्रेश्चतुर्दिक्स्थमहावापीविवर्तिषु । स्फाटिकेषु दधिमुखपर्वतेषु चतुर्ष्वपि ॥ ६३५ ॥
चैत्येष्वर्हत्प्रतिमानां, शाश्वतीनां यथाविधि । चत्वारः शक्रदिक्पालाश्चक्रुरष्टाह्निकोत्सवम् ॥ ६३६ ॥
ईशानेन्द्रोऽप्यवातारीदुत्तराशाप्रतिष्ठिते । रमणीयाह्वये नित्यरमणीयेऽञ्जनाचले ॥ ६३७ ॥

१ अप्रहतः केनाऽप्यनाक्रान्तः । २ ददाति । ३ सावधान । ४ अर्जकवृक्षस्य मञ्जरीवत् । ५ प्रभूता आपो यत्र तद् अप्मयम् ।

तत्र चैत्ये तावतीनां, शाश्वतीनां तथैव सः । प्रतिमानामार्हतीनां, चकाराऽष्टाह्निकोत्सवम् ॥ ६३८ ॥
तस्याऽपि लोकपालास्तद्वापीदधिमुखाद्रिषु । शाश्वतार्हत्प्रतिमानां, तद्वद् विदधुरुत्सवम् ॥ ६३९ ॥
चमरेन्द्रोऽप्युत्ततार, दक्षिणाशाव्यवस्थिते । नित्योद्द्योताभिधे रत्ननित्योद्द्योतेऽञ्जनाचले ॥ ६४० ॥
भक्त्या महत्या तत्राऽयमपि चैत्ये यथाविधि । शाश्वतीनां प्रतिमानां, विदधेऽष्टाह्निकोत्सवम् ॥ ६४१ ॥
तद्वाप्यन्तर्दधिमुखाचलेष्वचलचेतसः । चक्रुर्जिनप्रतिमानां, तद्दिक्पाला महोत्सवम् ॥ ६४२ ॥
अवातरद् बलीन्द्रोऽपि, पश्चिमाशानिवासिनि । स्वयम्प्रभाभिधेऽम्भोदप्रभाचौरेऽञ्जनाचले ॥ ६४३ ॥
शाश्वतीनामृषभादिप्रतिमानामसावपि । उत्सवं विदधे तद्वद्, दिविषदृष्टिपावनम् ॥ ६४४ ॥
तत्पुष्करिणीकान्तःस्थेषूच्चैर्दधिमुखाद्रिषु । चक्रुस्तस्याऽपि दिक्पालाः, शाश्वतप्रतिमोत्सवम् ॥ ६४५ ॥
इति नन्दीश्वरे चैत्यमहिमानं विधाय ते । पथा यथागतेनैव, स्वं स्वं स्थानं ययुः सुराः ॥ ६४६ ॥

स्वामिनी मरुदेवाऽपि, सम्प्रबुद्धाऽथ नाभये । नैशं स्वप्नमिवाऽमर्त्यसम्पातं तमचीकथत् ॥ ६४७ ॥
ऊरुप्रदेशे ऋषभो, लाञ्छनं यज्जगत्पतेः । ऋषभः प्रथमं यच्च, स्वप्ने मात्रा निरीक्षितः ॥ ६४८ ॥
तत् तस्य ऋषभ इति, नामोत्सवपुरःसरम् । तौ मातापितरौ हृष्टौ, विदधाते शुभे दिने ॥ ६४९ ॥
तदा च युग्मजातायाः, कन्याया अपि पावनम् । सुमङ्गलेति पितरौ, यथार्थं नाम चक्रतुः ॥ ६५० ॥
शक्रसङ्क्रमितां स्वामी, निजाङ्गुष्ठे सुधामथ । पिबति स्म यथाकालं, कुल्याजलमिवाऽङ्घ्रिपः ॥ ६५१ ॥
भगवान् शुशुभे बालः, पितुरुत्सङ्गमाश्रितः । अङ्के शिखरिणः सिंहकिशोर इव भासुरः ॥ ६५२ ॥
शक्रादिष्टाश्च धात्र्यस्ताः, पञ्चाऽपि परमेश्वरम् । महामुनिं समितय, इवाऽमुञ्चन् न जातुचित् ॥ ६५३ ॥

स्वामिनो जन्मनः किञ्चिदूने संवत्सरे सति । सौधर्मवासवो वंशस्थापनार्थमुपाययौ ॥ ६५४ ॥
भृत्येन रिक्तहस्तेन, न कार्यं स्वामिदर्शनम् । इति बुद्ध्येव महतीमिक्षुयष्टिं स आददे ॥ ६५५ ॥
सेक्षुयष्टिः सुनासीरः, शरत्काल इवाऽऽङ्गवान् । नाभ्युत्सङ्गनिषण्णस्य, जगाम स्वामिनोऽग्रतः ॥ ६५६ ॥
ज्ञात्वा च शक्रसङ्कल्पमवधिज्ञानतो विभुः । तामिक्षुयष्टिमादातुं, करीव करमक्षिपत् ॥ ६५७ ॥
प्रणम्य शिरसा शक्रः, स्वामिने भाववित् ततः । अर्पयामास तामिक्षुलतिकामुपदामिव ॥ ६५८ ॥
यदिक्षुरादे भर्त्रेक्ष्वाकुरित्याख्यया ततः । स्वामिवंशं प्रतिष्ठाप्य, दिवस्पतिरगाद् दिवम् ॥ ६५९ ॥

देहो युगादिनाथस्य, स्वेदामयमलोज्झितः । सुगन्धिः सुन्दराकारस्तपनीयारविन्दवत् ॥ ६६० ॥
गोक्षीरधाराधवले, अविस्रे मांसशोणिते । आहारनीहारविधिर्लोचनानामगोचरः ॥ ६६१ ॥
उत्फुल्लकुमुदामोदसोदरं श्वाससौरभम् । चत्वारोऽतिशया एते, बभूवुर्जन्मना सह ॥ ६६२ ॥
वज्रऋषभनाराचं, दधत् संहननं प्रभुः । मन्दं चचाल पादाभ्यां, भूमिभ्रंशभयादिव ॥ ६६३ ॥
प्रभुर्बभाषे बालोऽपि, गम्भीरमधुरध्वनिः । नृणां लोकोत्तराणां हि, बाल्यं वपुरपेक्षया ॥ ६६४ ॥
संस्थानं स्वामिनस्तुल्यचतुरस्रमशोभत । श्रियां रिरंसमानानां, क्रीडावेदीव काञ्चनी ॥ ६६५ ॥
सवयोभूय सम्भूयाऽऽयातैः सुरकुमारकैः । अरंस्त वृषभस्वामी, तेषां चित्तानुवृत्तये ॥ ६६६ ॥
धूलीधूसरसर्वाङ्गो, बिभ्राणो घर्घरस्रजम् । कलभोऽन्तर्मदावस्थ, इव क्रीडन् बभौ विभुः ॥ ६६७ ॥
जग्राह पाणिना स्वामी, यत् किञ्चिल्लीलयाऽपि हि । महर्द्धिकोऽपि त्रिदशो, न तदाच्छेत्तुमीश्वरः ॥६६८॥
बलं परीक्षितुमधादङ्गुलीमपि यः प्रभोः । स श्वासपवनेनाऽपि, ययौ दूरेण रेणुवत् ॥ ६६९ ॥
स्वामिनं रमयामासुः, केचित् सुरकुमारकाः । विचित्रैः कन्दुकैर्भूमौ, लुठन्तः कन्दुका इव ॥ ६७० ॥
चाटूनि जीव जीवेति, नन्द नन्देत्यनेकशः । केऽपि राजशुकीभूय, चाटुकारा इवाऽवदन् ॥ ६७१ ॥
स्वामिनो रमणायैके, केकीभूय दिवौकसः । केकाप्रधानाः पुरतो, ननृतुः षड्जगायिनः ॥ ६७२ ॥
हंसीभूयाऽपरे चेरुः, पार्श्वे गान्धाररविणः । प्रभोः सलीलहस्ताब्जग्रहणस्पर्शतृष्णया ॥ ६७३ ॥

क्रौञ्चीभूयाऽग्रतः केऽपि, मध्यमाराविणो*ऽरसन् । स्वामिनः प्रीतिमद्दृष्टिपातामृतपिपासिताः ॥ ६७४ ॥
केऽपि पुंस्कोकिलीभूय, पञ्चमस्वरमुज्जगुः । स्थित्वोपस्वामितरुषु, तन्मनःप्रीतिहेतवे ॥ ६७५ ॥
आययुस्तुरगीभूय, धैवतध्वनिहेषिणः । स्वामियानतयाऽऽत्मानं, पिपावयिषवोऽपरे ॥ ६७६ ॥
केऽप्येयुः कलभीभूय, निषादस्वरराविणः । स्पृशन्तोऽधोमुखीभूय, करेण चरणौ प्रभोः ॥ ६७७ ॥
केचिच्च वृषभीभूय, ऋषभस्वरबन्धुराः । ताडयन्तस्तटीः शृङ्गैर्दृग्विनोदं व्यधुर्विभोः ॥ ६७८ ॥
महिषीभूय केऽप्यस्थुरञ्जनाचलसन्निभाः । युध्यमाना मिथो युद्धक्रीडां भर्त्तुरदर्शयन् ॥ ६७९ ॥
केऽपि भर्तुर्विनोदायाऽऽस्फालयन्तो भुजान् मुहुः । मल्लीभूयाऽक्षवाटान्तराह्वासैत परस्परम् ॥ ६८० ॥
एवं विनोदैर्विविधैर्वृन्दारककुमारकैः । उपास्यमानः सततं, परमात्मेव योगिभिः ॥ ६८१ ॥
ताभिर्धात्रीभिरुद्यानपालीभिरिव पादपः । अप्रमत्तं लाल्यमानः, क्रमेण ववृधे प्रभुः ॥६८२॥ [सन्दानितकम्]
अङ्गुष्ठपानावस्थायाः, परस्ताद् वयसि स्थिताः । गृहवासेऽपरेऽर्हन्तः, सिद्धमन्नं हि भुञ्जते ॥ ६८३ ॥
देवानीतोत्तरकुरुफलानि बुभुजे सदा । क्षीरोदवारि च पपौ, भगवान्नाभिनन्दनः ॥ ६८४ ॥
बाल्यं कल्यमिवोल्लङ्घ्य, मध्यन्दिनमिवाऽर्यमा । विभुर्विभक्तावयवं, द्वितीयं शिश्रिये वयः ॥ ६८५ ॥
यौवनेऽपि मृदू रक्तौ, कमलोदरसोदरौ । उष्णावकम्प्रावस्वेदौ, पादौ समतलौ प्रभोः ॥ ६८६ ॥
नतार्त्तिच्छेदनायेव, प्रपेदे चक्रमीशितुः । सदास्थितश्रीकरेणोरिव दामाङ्कुशध्वजाः ॥ ६८७ ॥
स्वामिनः पादयोर्लक्ष्मीलीलासदनयोरिव । शङ्खकुम्भौ तले पार्ष्णौ, स्वस्तिकश्च विरेजिरे ॥ ६८८ ॥
मांसलो वर्तुलस्तुङ्गो, भुजङ्गमफणोपमः । अङ्गुष्ठः स्वामिनो वत्स, इव श्रीवत्सलाञ्छितः ॥ ६८९ ॥
प्रभोर्निर्वातनिष्कम्पस्निग्धदीपशिखोपमाः । नीरन्ध्रा ऋजवोऽङ्गुल्यो, दलानीव पदाब्जयोः ॥ ६९० ॥
नन्द्यावर्त्ता जगद्भर्तुः, पादाङ्गुलितलेष्वभान् । यद्बिम्बानि क्षितौ धर्मप्रतिष्ठाहेतुतां ययुः ॥ ६९१ ॥
यवाः पर्वस्वङ्गुलीनामधो वापीभिराबभुः । उप्ता इव जगल्लक्ष्मीविवाहाय जगत्प्रभोः ॥ ६९२ ॥
कन्दः पादाम्बुजस्येव, पार्ष्णिर्वृत्तायतः पृथुः । अङ्गुष्ठाङ्गुलिफणिनां, फणामणिनिभा नखाः ॥ ६९३ ॥
हेमारविन्दमुकुलकर्णिकागोलकश्रियम् । गूढौ गुल्फौ वितेनाते, नितान्तं स्वामिपादयोः ६९४ ॥
प्रभोः पादावुपर्यानुपूर्व्या कूर्मवदुन्नतौ । अप्रकाशशिरौ स्निग्धच्छवी लोमविवर्जितौ ॥ ६९५ ॥
अन्तर्मग्नास्थिपिशितपुष्कले क्रमवर्त्तुले । एणीजङ्घाविडम्बिन्यौ, जङ्घे गौर्यौ जगत्पतेः ॥ ६९६ ॥
जानुनी स्वामिनोऽधातां, वर्त्तुले मांसपूरिते । तूलपूर्णपिधानान्तःक्षिप्तदर्पणरूपताम् ॥ ६९७ ॥
ऊरू च मृदुलौ स्निग्धावानुपूर्व्येण पीवरौ । बिभराञ्चक्रतुः प्रौढकदलीस्तम्भविभ्रमम् ॥ ६९८ ॥
स्वामिनः कुञ्जरस्येव, मुष्कौ गूढौ समस्थिती । अतिगूढं च पुंश्चिह्नं, कुलीनस्येव वाजिनः ॥ ६९९ ॥
तच्चाऽसिरमनिम्नोच्चमह्रस्वादीर्घमश्लथम् । सरलं मृदु निर्लोम, वर्तुलं सुरभीन्द्रियम् ॥ ७०० ॥
शीतप्रदक्षिणावर्त्तशब्दयुक्तैकधारकम् । अबीभत्सावर्त्ताकारकोशस्थं पिञ्जरं तथा ॥ ७०१ ॥
आयता मांसला स्थूला, विशाला कठिना कटिः । मध्यभागस्तनुत्वेन, कुलिशोदरसोदरः ॥ ७०२ ॥
नाभिर्बभार गम्भीरा, सरिदावर्त्तविभ्रमम् । कुक्षी स्निग्धौ मांसवन्तौ, कोमलौ सरलौ समौ ॥ ७०३ ॥
अधाद् वक्षःस्थलं स्वर्णशिलापृथुलमुन्नतम् । श्रीवत्सरत्नपीठाङ्कं, श्रीलीलावेदिकाश्रियम् ॥ ७०४ ॥
दृढपीनोन्नतौ स्कन्धौ, ककुद्मत्ककुदोपमौ । अल्परोमोन्नते कक्षे, गन्धस्वेदमलोज्झिते ॥ ७०५ ॥
पीनौ पाणिफणाच्छत्रौ, भुजावाजानुलम्बिनौ । चञ्चलाया नियमने, नागपाशाविव श्रियः ॥ ७०६ ॥
नवाम्रपल्लवाताम्रतलौ निष्कर्मकर्कशौ । अस्वेदनावपच्छिद्रावुष्णौ पाणी जगत्पतेः ॥ ७०७ ॥
दण्डचक्रधनुर्मत्स्यश्रीवत्सकुलिशाङ्कुशैः । ध्वजाब्जचामरच्छत्रशङ्खकुम्भाब्धिमन्दरैः ॥ ७०८ ॥

* णो बभुः स १, ख ॥ १ मल्लयुद्धभूमिषु । २ आहूतवन्तः ।

मकरर्षभसिंहाश्वरथस्वस्तिकदिग्गजैः । प्रासादतोरणद्वीपैः, पाणी पादाविवाऽङ्कितौ ॥ ७०९ ॥ [ युग्मम् ]
अङ्गुष्ठोऽङ्गुलयः शोणाः, सरलाः शोणपाणिजाः । प्ररोहा इव कल्पद्रोः, प्रान्तमाणिक्यपुष्पिताः ॥ ७१० ॥
यवाः स्पष्टमशोभन्त, स्वामिनोऽङ्गुष्ठपर्वसु । यशोवरतुरङ्गस्य, पुष्टिवैशिष्ट्यहेतवः ॥ ७११ ॥
अङ्गुलीमूर्द्धसु विभोः, सर्वसम्पत्तिशंसिनः । दधुः प्रदक्षिणावर्त्ता, दक्षिणावर्त्तशङ्खताम् ॥ ७१२ ॥
कृच्छ्राद्‌दुद्धरणीयानि, जगन्ति त्रीण्यपीत्यभात् । सङ्ख्यालेखा इव तिस्रो, लेखा मूले कराब्जयोः ॥७१३॥
वर्त्तुलोऽनतिदीर्घश्च, लेखात्रयपवित्रितः । गम्भीरध्वनिराधत्त, कण्ठः कम्बुविडम्बनाम् ॥ ७१४ ॥
विमलं वर्त्तुलं कान्तितरङ्गि वदनं विभोः । पीयूषदीधितिरिवाऽपरो लाञ्छनवर्जितः ॥ ७१५ ॥
मसृणौ मांसलौ स्निग्धौ, कपोलफलकौ प्रभोः । दर्पणाविव सौवर्णौ, वाग्लक्ष्म्योः सहवासयोः ॥ ७१६ ॥
अन्तरावर्तसुभगौ, कर्णौ स्कन्धावलम्बिनौ । प्रभोर्मुखप्रभासिन्धुतीरस्थे शुक्तिके इव ॥ ७१७ ॥
ओष्ठौ बिम्बोपमौ दन्ता, द्वात्रिंशत् कुन्दसोदराः । क्रमस्फारा क्रमोत्तुङ्गवंशा नासा महेशितुः ॥ ७१८ ॥
अह्रस्वदीर्घं चिबुकं, मांसलं वर्तुलं मृदु । मेचकं बहलं स्निग्धं, कोमलं श्मश्रु तायिनः ॥ ७१९ ॥
प्रत्यग्रकल्पविटपिप्रवालारुणकोमला । प्रभोर्जिह्वाऽनतिस्थूला, द्वादशाङ्गागमार्थसूः ॥ ७२० ॥
अन्तरा कृष्णधवले, प्रान्तरक्ते विलोचने । नीलस्फटिकशोणाश्ममणिन्यासमये इव ॥ ७२१ ॥
ते च कर्णान्तविश्रान्ते, कज्जलश्यामपक्ष्मणी । विकस्वरे तामरसे, निलीनालिकुले इव ॥ ७२२ ॥
बिभराश्चक्रतुर्भर्त्तुः, श्यामले कुटिले भ्रुवौ । दृष्टिपुष्करिणीतीरसमुद्भिन्नलताश्रियम् ॥ ७२३ ॥
विशालं मांसलं वृत्तं, कठिनं मसृणं समम् । भालस्थलं जगद्भर्तुरष्टमीसोमसोदरम् ॥ ७२४ ॥
भुवनस्वामिनो मौलिरानुपूर्व्या समुन्नतः । दधावधोमुखीभूतच्छत्रसब्रह्मचारिताम् ॥ ७२५ ॥
मौलिच्छत्रे महेशस्य, जगदीशत्वशंसिनि । वृत्तमुत्तुङ्गमुष्णीषं, शिश्रिये कलसश्रियम् ॥ ७२६ ॥
केशाश्चकाशिरे मूर्ध्नि, प्रभोर्भ्रमरमेचकाः । कुञ्चिताः कोमलाः स्निग्धाः, कालिन्द्या इव वीचयः ॥ ७२७ ॥
गोरोचनागर्भगौरी, स्निग्धस्वच्छा त्वगाबभौ । स्वर्णद्रवविलिप्तेव, तनौ त्रिजगदीशितुः ॥ ७२८ ॥
मृदूनि भ्रमरश्यामान्यद्वितीयोद्गमानि च । बिसतन्तुतनीयांसि, लोमानि स्वामिनस्तनौ ॥ ७२९ ॥
इत्यसाधारणैर्नानालक्षणैर्लक्षितः प्रभुः । रत्नै रत्नाकर इव, सेव्यः कस्येव नाऽभवत् ? ॥ ७३० ॥
दत्तहस्तो महेन्द्रेण, यक्षैरुत्क्षिप्तचामरः । धरणेन्द्रकृतद्वास्थ्यो, धृतच्छत्रः प्रचेतसा ॥ ७३१ ॥
विष्वक् परिवृतो देवैर्जीव जीवेति वादिभिः । अनुत्सिक्तो जगत्स्वामी, विजहार यथासुखम् ॥७३२॥ [युग्मम्]
देवानीतासनासीनो, बलीन्द्राङ्काहितक्रमः । चमरेन्द्राङ्कपर्यङ्कविन्यस्तोत्तरविग्रहः ॥ ७३३ ॥
अप्सरोभिरुभयतो, हस्तशाटकपाणिभिः । उपास्यमानोऽनासक्तः, सङ्गीतं दीव्यमैक्षत ॥७३४॥ [युग्मम्]
अन्येद्युः क्रीडया क्रीडद्, बालभावानुरूपया । मिथो मिथुनकं किञ्चित्, तले तालतरोरगात् ॥७३५॥
तदैव दैवदुर्योगात्, तन्मध्यान्नरमूर्द्धनि । तडिद्दण्ड इवैरण्डेऽपतत् तालफलं महत् ॥ ७३६ ॥
प्रहतः काकतालीयन्यायेन स तु मूर्द्धनि । विपन्नो दारकस्तत्र, प्रथमेनाऽपमृत्युना ॥ ७३७ ॥
ययौ सोऽल्पकषायत्वाद्, दिवं मिथुनदारकः । तूलमप्यल्पभारत्वादाकाशमनुधावति ॥ ७३८ ॥
पुरा हि मृतमिथुनकशरीराणि महाखगाः । नीडकाष्ठमिवोत्पाट्य, सद्यश्चिक्षिपुरम्बुधौ ॥ ७३९ ॥
भ्रंशात् तस्याऽनुभावस्य, तदानीं तत्कलेवरम् । तस्थौ तथैवाऽवसर्पत्प्रभावा ह्यवसर्पिणी ॥ ७४० ॥
बालिकाऽस्य द्वितीयाऽथ, निसर्गान्मौग्ध्यशालिनी । सा विक्रयावशिष्टेव, तस्थौ तरलितेक्षणा ॥ ७४१ ॥
आदाय तां तज्जनकमिथुनं पर्यवर्द्धयत् । नामधेयं पुनस्तस्याः, सुनन्देति विनिर्ममे ॥ ७४२ ॥
दिनैः कतिपयैस्तस्या, विपन्नौ पितरावपि । जातापत्यानि युग्मानि, जीवन्ति कियदेव हि ? ॥ ७४३ ॥

१ निर्गर्वः । २ उत्तरकायः । ३ महापक्षिणः । ४ हीयमानप्रभावा ।

किङ्कर्त्तव्यजडा साऽपि, बालिका लोललोचना । यूथभ्रष्टा कुरङ्गीव, बभ्रामैकाकिनी वने ॥ ७४४ ॥
सरलाङ्गुलिपत्राभ्यां, सा पदाभ्यां पदे पदे । विकस्वराणि पद्मानि, रोपयन्तीव भुव्यपि ॥ ७४५ ॥
जङ्घे काञ्चनतूणीराविव कामस्य बिभ्रती । आनुपूर्व्यपृथू वृत्तावूरू करिकरोपमौ ॥ ७४६ ॥
कन्दर्पद्यूतकृत्स्वर्णशाराफलकविभ्रमम् । विभ्राणेन नितम्बेन, मांसलेन गरीयसा ॥ ७४७ ॥
मुष्टिग्राह्येण मध्येनाऽऽकर्षणेव मनोभुवः । तस्यैवाऽऽक्रीडवाप्येव, नाभिदेशेन शोभिता ॥ ७४८ ॥
रूपास्तत्रिजगत्स्त्रैणजयरेखात्रयीमिव । वलीतरङ्गत्रितयीमुदरेण च बिभ्रती ॥ ७४९ ॥
धारयन्ती रतिप्रीत्योः, क्रीडाशैलाविव स्तनौ । तयोरेव स्वर्णदोलायष्टी इव च दोर्लते ॥ ७५० ॥
कण्ठेन च त्रिरेखेण, कम्बुविभ्रमहारिणा । अधरेण पराभूतपक्वबिम्बफलत्विषा ॥ ७५१ ॥
दन्तैरधरशुक्त्यन्तःस्थितैर्मुक्ताकणैरिव । नासया नेत्रनलिननालेनेवाऽतिहारिणी ॥ ७५२ ॥
गण्डौ भालस्पर्द्धयेवाऽर्द्धेन्दुलक्ष्मीमलिम्लुचौ । दधती कुन्तलांश्चाऽऽस्यपद्मलग्नालीनिव ॥ ७५३ ॥
सर्वाङ्गसुभगा पुण्यलावण्यामृतकूलिनी । वनान्तर्वनदेवीव, सञ्चरन्ती व्यराजत ॥७५४॥[दशभिः कुलकम् ]
ततश्चैकाकिनीं मुग्धां, मिथुनान्यवलोक्य ताम् । किङ्कर्त्तव्यविमूढानि, श्रीनाभेरुपनिन्यिरे ॥ ७५५ ॥
एषा ऋषभनाथस्य, धर्मपत्नी भवत्विति । प्रतिजग्राह तां नाभिर्नेत्रकैरवकौमुदीम् ॥ ७५६ ॥
अत्रान्तरेऽवधिज्ञानप्रयोगेण पुरन्दरः । भर्तुर्विवाहसमयं, ज्ञात्वा तत्र समाययौ ॥ ७५७ ॥
प्रणम्य चरणौ पत्युः, पत्तिमात्र इवाऽग्रतः । स्थित्वा दिवस्पतिर्बद्धाञ्जलिरेवं व्यजिज्ञपत् ॥ ७५८ ॥
अज्ञो ज्ञाननिधिं नाथं, यो मन्त्रणधिया पुमान् । प्रविवर्त्तयिषेत् कार्येषूपहासास्पदं हि सः ॥ ७५९ ॥
स्वामिनाऽतिप्रसादेन, सदा भृत्या हि वीक्षिताः । स्वच्छन्दमपि जल्पन्ति, कदाचिदपि किञ्चन ॥ ७६० ॥
विदित्वा स्वाम्यभिप्रायं, ये प्राहुस्ते हि सेवकाः । अज्ञात्वा यद् ब्रुवे तत्राऽप्रसादं नाथ ! मा कृथाः ॥७६१॥
मन्ये स्वामी वीतरागो, गर्भवासात् प्रभृत्यपि । चतुर्थपुरुषार्थाय, सज्जोऽन्यार्थानपेक्षया ॥ ७६२ ॥
तथाऽपि नाथ ! लोकानां, व्यवहारपथोऽपि हि । त्वयैव मोक्षवर्त्मेव, सम्यक् प्रकटयिष्यते ॥ ७६३ ॥
तल्लोकव्यवहाराय, पाणिग्रहमहोत्सवम् । विधीयमानं भवतेच्छामि नाथ ! प्रसीद मे ॥ ७६४ ॥
सुमङ्गलासुनन्दे च, देव्यौ भुवनभूषणे । स्वानुरूपे रूपवत्यौ, स्वामिन्नुद्वोढुमर्हसि ॥ ७६५ ॥
स्वाम्यप्यवधिनाऽज्ञासीत् कर्म भोगफलं दृढम् । त्र्यशीतिं पूर्वलक्षाणां, यावद् भोक्तव्यमस्ति न ॥७६६॥
अवश्यभोक्तव्यमिदं, कर्मेत्याधूनयन् शिरः । तस्थावधोमुखः स्वामी, तदा सायं सरोजवत् ॥ ७६७ ॥
अथ भर्तुरभिप्रायमुपलक्ष्य पुरन्दरः । विवाहकर्मारम्भाय, सद्यो देवानजूहवत् ॥ ७६८ ॥
अथाभियोगिका देवाः, पाकशासनशासनात् । मण्डपं रचयामासुः, सुधर्माया इवाऽनुजम् ॥ ७६९ ॥
स्वर्णमाणिक्यरजतस्तम्भास्तत्र चकाशिरे । मेरुरोहणवैताढ्यचूलिका इव रोपिताः ॥ ७७० ॥
शातकुम्भमयास्तत्र, कुम्भाः प्रद्योतकारिणः । चक्रिणः काकणीरत्नमण्डलानीव रेजिरे ॥ ७७१ ॥
सुवर्णवेदिकास्तत्र, बभुरुद्यद्भिरंशुभिः । पयस्यन्त्य इवाऽऽदित्यं, तेजोऽन्यदसहिष्णवः ॥ ७७२ ॥
प्रविशन्तो मणिशिलाभित्तिषु प्रतिबिम्बिताः । के के न प्रापुस्तत्र, परिवारपरिक्रियाम् ? ॥ ७७३ ॥
रत्नस्तम्भव्यवष्टब्धाः, सङ्गीतश्रान्तनर्त्तकीः । विडम्बयन्त्यस्तत्रोच्चैः, शालभञ्ज्यो बभासिरे ॥ ७७४ ॥
तोरणानि प्रतिदिशं, सन्तानतरुपल्लवैः । तत्राऽभूवन् धनूंषीव, सज्जितानि मनोभुवा ॥ ७७५ ॥
स्फाटिकद्वारशाखासु, बभुर्नीलाश्मतोरणाः । शरदभ्रावलीमध्यस्थितकीरालिसन्निभाः ॥ ७७६ ॥
क्वचित् स्फटिकबद्धोर्वीनिरन्तरमरीचिभिः । सोऽतनोन्मण्डपः क्रीडापीयूषसरसीभ्रमम् ॥ ७७७ ॥
पद्मरागशिलाशोचिर्निचयैः प्रसृतैः क्वचित् । सोऽदिशद् दिव्यविस्तारिकौसुम्भांशुकसंशयम् ॥ ७७८ ॥

१ मोक्षाय । * त्रिषष्टि पूर्व° अ. । २ पुत्तलिका ।

क्वचिन्नीलशिलारश्मिप्ररोहैः सोऽतिहारिभिः । पुनरुक्तोप्तमङ्गल्ययवाङ्कुर इवाऽऽबभौ ॥ ७७९ ॥
क्वचिन्मरकतक्षोणिरश्मिदण्डैरखण्डितैः । आर्द्रोपनीतमङ्गल्यवंशशङ्कां दिदेश सः ॥ ७८० ॥
श्वेतदिव्यांशुकोल्लोचच्छलेन गगनस्थया । गङ्गयेवाऽऽश्रितः सोऽभूत्, तत्कौतुकदिदृक्षया ॥ ७८१ ॥
उल्लोचं परितस्तं च, लम्बिता मौक्तिकस्रजः । अष्टानां ककुभां हर्षहसितानीव रेजिरे ॥ ७८२ ॥
चतस्रो रत्नकलसश्रेणयोऽभ्रंलिहाग्रकाः । पर्यष्ठाप्यन्त देवीभिर्निधानानि रतेरिव ॥ ७८३ ॥
आर्द्राः शुशुभिरे वंशाः, कुम्भावष्टम्भदायिनः । विश्वावष्टम्भदस्वामिवंशवृद्धेर्नु सूचकाः ॥ ७८४ ॥
आरभस्व स्रजो रम्भे !, दूर्वामुर्वशि ! सज्जय । घृताचि ! घृतदध्यादि, वरार्घाय समाहर ॥ ७८५ ॥
मञ्जुघोषे ! मञ्जुघोषयाऽऽलीर्धवलमङ्गलान् । त्वं सुगन्धे ! सुगन्धीनि, वस्तूनि प्रगुणीकुरु ॥ ७८६ ॥
स्वस्तिकानुत्तमान् द्वारदेशे देहि तिलोत्तमे ! । मेने ! सम्मानयाऽऽयातानुचितालापभङ्गिभिः ॥ ७८७ ॥
सुकेशि ! केशाभरणं, वधूवरकृते धर । सहजन्ये ! जन्ययात्रानृणां स्थानं प्रदर्शय ॥ ७८८ ॥
चित्रलेखे ! लिखाऽऽलेख्यं, विचित्रं मातृवेश्मनि । प्रगुणीकुरु तूर्णं त्वं, पूर्णपात्राणि पूर्णिनि ! ॥७८९॥
पुण्डरीके ! पुण्डरीकैः, पूर्णकुम्भान् विभूषय । त्वं स्थापय यथास्थानमम्लोचे ! वरमञ्चिकाम् ॥ ७९० ॥
आपादय हंसपादि !, त्वं वधूवरपादुकाः । त्वं पुञ्जिकास्थले ! वेदिस्थलीं लिम्पाऽऽशु गोमयैः ॥७९१॥
रामे ! किं रमसेऽन्यत्र !, हेमे ! किं हेम वीक्षसे ? । ऋतुस्थले ! प्रमत्तेव, किमसि त्वं विसंस्थुला ? ॥७९२॥
किं चिन्तयसि मारीचि!?, सुमुख्यसि किमुन्मुखी?। किमर्वाग्[१]नाऽसि गान्धर्वि!?, दिव्ये!दीव्यसि किं मुधा?
आसन्नं वर्त्तते लग्नं, ननु सर्वात्मना ततः । स्वे स्वे त्वरध्वं कर्त्तव्ये, विवाहोचितकर्मणि ॥ ७९४ ॥
मिथ इत्यादिशन्तीनां, नामग्राहं मुहुर्मुहुः । सरसोऽप्सरसां जज्ञे, तुमुलस्तत्र सम्भ्रमात् ॥ ७९५ ॥
[ एकादशभिः कुलकम् ]

सुमङ्गलां सुनन्दां च, मङ्गलस्नानहेतवे । ततश्चाऽप्सरसः काश्चिदासयामासुरासने ॥ ७९६ ॥
तयोरुद्गीयमाने च, धवले मङ्गले कले । व्यधुः सर्वाङ्गमभ्यङ्गं, तैलेनाऽथ सुगन्धिना ॥ ७९७ ॥
पतदुद्वर्त्तनीपुञ्जपवित्रितमहीतलम् । पिष्टातकैः सूक्ष्मपिष्टैश्चक्रुश्चोद्वर्त्तनं तयोः ॥ ७९८ ॥
पादयोर्जानुनोः पाण्योरंसयोरलिके तयोः । सुधाकुण्डाम्भवेवाऽङ्गलीनांस्तास्तिलकान् व्यधुः ॥ ७९९ ॥
कौसुम्भसूत्रैस्तर्कुस्थैरङ्गं सव्यापसव्ययोः । ताः पस्पृशुः समचतुरस्रतामिव वीक्षितुम् ॥ ८०० ॥
एवं ते वरवर्णिन्यौ, वर्णके ताभिरा[२]हिते । प्रयत्नाद् वारयन्तीभिर्धात्रीभिरिव चापलात् ॥ ८०१ ॥
तदैवोद्वर्णकमपि, वर्णकस्येव सोदरम् । व्यधुस्तेनैव विधिना, तयोस्ताः प्रमदोन्मदाः ॥ ८०२ ॥
निवेश्य चाऽऽसनेऽन्यस्मिन्, स्वर्णकुम्भोदकैरथ । स्नपयन्ति स्म तास्ते स्वकुलयोरिव देवते ॥ ८०३ ॥
विदधुर्गन्धकाषाय्या, तयोरङ्गप्रमार्जनम् । केशांश्च वेष्टयामासुर्वाससा मसृणेन ताः ॥ ८०४ ॥
तास्ते क्षौमाणि संव्याय्याऽऽसयित्वा चाऽऽसनान्तरे । केशेभ्योऽश्चोतयन् वारि, मुक्तावृष्टिभ्रमं दिशत् ८०५
ईषदार्द्रानधूपायन्, दिव्यधूपेन कुन्तलान् । स्निग्धधूमलतापुष्टश्रीविशेषांस्तयोश्च ताः ॥ ८०६ ॥
पद्मखण्डपतद्बालारुणरोचिर्विडम्बिना । अमण्डयंस्तयोः पादानलक्तकरसेन ताः ॥ ८०७ ॥
अङ्गनारत्नयोरङ्गमङ्गरागेण चारुणा । काञ्चनं गैरिकेणेव, विलिम्पन्ति स्म तास्तयोः ॥ ८०८ ॥
ग्रीवाभुजाग्रवक्षोजगण्डदेशेषु तास्तयोः । प्रशस्तीरिव कामस्य, लिलिखुः पत्रवल्लरीः ॥ ८०९ ॥
अ[३]लिके तिलकं चारु, चक्रुस्ताश्चान्दनं तयोः । रतिदेव्यवताराय, प्र[४]त्यग्रमिव मण्डलम् ॥ ८१० ॥
तयोः प्रसाधयामासुर्नयनान्यञ्जनेन ताः । नीलोत्पलवनापातिभृङ्गसब्रह्मचारिणा ॥ ८११ ॥
तयोर्बबन्धुर्धम्मिल्लमुन्मीलन्माल्यदाम ताः । पुष्पायुधेनेव कृतमायुधागारमात्मनः ॥ ८१२ ॥

१ स्थापिते । २ प्ररिधाप्य । ३ ललाटे । ४ नवीनम् ।

पारिणेत्राणि वस्त्राणि, ताभ्यां ताः पर्यधापयन् । लम्बमानदशाश्रेणिन्यक्कृतेन्दुकराण्यथ ॥ ८१३ ॥
तयोरधिशिरो न्यासन्, विचित्रमणिभासुरौ । ताः किरीटौ पुष्पदन्तौ[1], पूर्वापरदिशोरिव ॥ ८१४ ॥
तत्कर्णयोर्मणिमयावतंसौ ता न्यवीविशन् । रत्नाङ्कुरितमेरूर्वीगर्वसर्वस्वतस्करौ ॥ ८१५ ॥
ताः समारोपयामासुर्दिव्ये मौक्तिककुण्डले । तत्कर्णलतयोर्नव्यपुष्पगुच्छविडम्बिनी ॥ ८१६ ॥
निष्कं[2] ताश्चित्रमाणिक्यदीप्तिदन्तुरिताम्बरम् । सङ्क्षिप्तेन्द्रधनुर्लक्ष्मीहरं कण्ठे न्यधुस्तयोः ॥ ८१७ ॥
हारमारोपयामासुरधिस्तनतटं तयोः । आतन्वानं स्थलारोहदवरोहन्नदीभ्रमम् ॥ ८१८ ॥
भुजयोर्योजयामासुः, केयूरे रत्नमण्डिते । पुष्पबाणधनुर्बद्धवीरपट्टोपमे तयोः ॥ ८१९ ॥
आमुक्तौ च तयोर्मुक्ताकङ्कणौ पाणिमूलयोः । आवालाविव पानीयशालिनौ लतयोस्तले ॥ ८२० ॥
प्रक्वणत्किङ्किणीश्रेणिं, श्रोणौ व्यश्राणयंस्तयोः । मणिकाञ्चीं रतेर्देव्या, इव मङ्गलपाठिकाम् ॥ ८२१ ॥
तयोरारोपयामासुः, पादयो रत्ननूपुरौ । झणज्झणिति कुर्वाणौ, स्तुवन्ताविव तद्गुणान् ॥ ८२२ ॥
सज्जयित्वैवमुत्पाट्य, देव्यौ देवीजनेन ते । नीत्वा मातृगृहस्याऽन्तरासिते काञ्चनासने ॥ ८२३ ॥
विवाहसज्जीभवनायोपेत्य नमुचिद्विषा । विज्ञप्यमानो निर्बन्धात्, प्रभुर्वृषभलाञ्छनः ॥ ८२४ ॥
दर्शनीया स्थितिर्लोके, भोक्तव्यं भोग्यकर्म च । अस्ति मे चिन्तयित्वैवमन्वमन्यत तद्वचः ॥ ८२५ ॥
[ युग्मम् ]
अथ स्वामी महेन्द्रेण, स्नपयित्वा विलिप्य च । यथाविधि विधिज्ञेन, भूषितो भूषणादिना ॥ ८२६ ॥
वेत्रिणेव महेन्द्रेण, शोध्यमानाग्रवर्त्मकः । उत्तार्यमाणलवणः, पार्श्वयोरप्सरोजनैः ॥ ८२७ ॥
इन्द्राणीभिर्गीयमानश्रेयोधवलमङ्गलः । सामानिकादिदेवीभिः, क्रियमाणावतारणः ॥ ८२८ ॥
गन्धर्वौघैर्वाद्यमानातोद्यः सद्योभुवा मुदा । स्वामी दिव्येन यानेन, मण्डपद्वारमाययौ ॥ ८२९ ॥
स्वामी स्वयं विधिज्ञोऽथ, यानादुत्तीर्य तत्र तु । अब्धिवेलेव मर्यादालताभूमाववास्थित ॥ ८३० ॥
तत्र त्रिदशनाथेन, दत्तबाहुर्बभौ विभुः । महीरुहमवष्टभ्य, स्तम्बेरम इव स्थितः ॥ ८३१ ॥
तटत्रटिति कुर्वाणलवणानलगर्भितम् । सरावसम्पुटं द्वारि, मुमुचुर्मण्डपस्त्रियः ॥ ८३२ ॥
रूप्यस्थालं च दूर्वादिमङ्गल्यद्रव्यलाञ्छितम् । काऽप्यग्रे धारयामास, राकेव मृगलाञ्छनम् ॥ ८३३ ॥
पञ्चशाखेन वैशाखं, प्रत्यक्षमिव मङ्गलम् । उत्क्षिप्याऽर्घाय काऽप्यग्रे, कौसुम्भवसनाऽभवत् ॥ ८३४ ॥
देह्यर्घमर्घदेऽर्घ्याय, क्षणं म्रक्षणमुत्क्षिप । स्थालादुद्धेहि च दधि, पीयूषमुदधेरिव ॥ ८३५ ॥
सुन्दरे ! नन्दनाऽऽनीतचन्दनद्रवमुन्नय । आहृतां भद्रशालोर्व्या, दूर्वां सम्मृदमुद्धर ॥ ८३६ ॥
मिलल्लोकेक्षणश्रेणिजातजङ्गमतोरणः । तोरणद्वारि नन्वेष, जगत्त्रयवरो वरः ॥ ८३७ ॥
ऊर्ध्वस्तिष्ठत्युत्तरीयाच्छादिताशेषविग्रहः । गङ्गातरङ्गान्तरितराजहंसयुवोपमः ॥ ८३८ ॥
वातेनोद्वान्ति पुष्पाणि, चन्दनं च विशुष्यति । तद्द्वारि सुन्दरि ! चिरं, वरं मा धर मा धर ॥ ८३९ ॥
देवस्त्रीभिर्गीयमानेषूच्चकैर्धवलेष्विति । अर्घं त्रिजगदर्घ्याय, ददावथ वराय सा ॥ ८४० ॥
[ षड्भिः कुलकम् ]
प्रारब्धधवलेवोच्चैः, क्वणद्भिर्भुजकङ्कणैः । मंथा[3] चुचुम्ब बिम्बौष्ठी, त्रिर्भालं त्रिजगत्पतेः ॥ ८४१ ॥
सरावसम्पुटं सार्ग्निं, हिमकर्परलीलया । पदा सपादुकेनाऽथ, वामेनाऽदलयद् विभुः ॥ ८४२ ॥
ततस्तयाऽर्घदायिन्या, कण्ठे कौसुम्भवाससा । प्रक्षिप्तेनाऽऽकृष्यमाणो, ययौ मातृगृहं प्रभुः ॥ ८४३ ॥
कन्देन मदनस्येव, मदनेनोपशोभितम् । वधूवरस्य हस्तेषु, हस्तसूत्रमबध्यत ॥ ८४४ ॥
अग्रतो मातृदेवीनामथोच्चैः काञ्चनासने । आसाञ्चक्रे प्रभुर्मेरुशिलायामिव केसरी ॥ ८४५ ॥

१ चन्द्रसूर्यौ । २ कण्ठाभरणम् । ३ मन्थानेन ।

शम्यश्वत्थत्वचौ पिष्ट्वा, हस्तालेपं ततः स्त्रियः । निदधुः कन्ययोः पाणौ, सरद्रोरिव दोहदम् ॥ ८४६ ॥
शुभलग्नोदये तूर्णमविह्वस्ततः प्रभुः । हस्तालेपयुतौ हस्तौ, हस्ताभ्यामग्रहीत् तयोः ॥ ८४७ ॥
हस्तसम्पुटमध्यस्थहस्तालेपान्तरूर्मिकाम् । चिक्षेप तत्र सुत्रामा, पल्वले शालिबीजवत् ॥ ८४८ ॥
ताभ्यामुभाभ्यामुभयहस्ताताभ्यां बभौ विभुः । शाखाद्वितयलग्नाभ्यां, लताभ्यामिव पादपः ॥ ८४९ ॥
वधूवरदृशोऽन्योऽन्यं, तारामेलकपर्वणि । सरित्पतिसरित्तोयानीवाऽभिमुखमापतन् ॥ ८५० ॥
दृष्टिर्दृष्ट्या तदानीं च, निर्वातजलनिश्चला । मनसेव मनस्तेषां, परस्परमयुज्यत ॥ ८५१ ॥
कनीनिकासु तेऽन्योऽन्यं, रेजिरे प्रतिबिम्बिताः । प्रविशन्त इवाऽन्योऽन्यं, हृदयेष्वनुरागतः ॥ ८५२ ॥
इतश्चाऽनुचरीभूय, सुराः सामानिकादयः । पार्श्वेष्वस्थुः प्रभोर्मेरोरिव विद्युत्प्रभादयः ॥ ८५३ ॥
वधूव्योः पारिपार्श्विक्यश्चतुरा नर्मकर्मणि । एवं कौतुकधवलान्, गातुमारेभिरे स्त्रियः ॥ ८५४ ॥
ज्वरीवाऽब्धिं शोषयितुं, मोदकान् परिखादितुम् । श्रद्धालुरनुवरको, मनसा केन नन्वसौ ? ॥ ८५५ ॥
मण्डकेभ्योऽखण्डदृष्टिः, कान्दुकस्येव कुक्कुरः । स्पृहयालुरनुवरो, मनसा केन नन्वसौ ? ॥ ८५६ ॥
आजन्मादृष्टपूर्वी किं, वटकान् रोरबालवत् ? । श्रद्धत्तेऽत्तुमनुवरो, मनसा केन नन्वसौ ? ॥ ८५७ ॥
तोयानां चातक इव, धनानामिव याचकः । पूगानां श्राद्धोऽनुवरो, मनसा केन नन्वसौ ? ॥ ८५८ ॥
ताम्बूलवल्लीपत्राणां, तृणानामिव तर्णकः । श्रद्धालुरद्याऽनुवरो, मनसा केन नन्वसौ ? ॥ ८५९ ॥
हैयङ्गवीनपिण्डस्य, बिडाल इव लम्पटः । श्राद्धश्चूर्णस्याऽनुवरो, मनसा केन नन्वसौ ? ॥ ८६० ॥
विलेपनस्य केदारकर्दमस्येव कासरः । श्रद्धां दधात्यनुवरो, मनसा केन नन्वसौ ? ॥ ८६१ ॥
निर्माल्यानामिवोन्मत्तो, माल्यानां लोललोचनः । श्रद्धानुबन्ध्यनुवरो, मनसा केन नन्वसौ ? ॥ ८६२ ॥
एवं कौतुकधवलान्, कौतुकोत्कर्णिताननाः । आकर्णयन्तोऽस्थुर्लेखा, आलेख्यलिखिता इव ॥ ८६३ ॥
लोकेषु व्यवहारोऽयं, दर्शनीय इति प्रभुः । विवाद इव मध्यस्थस्तदुपेक्षितवांस्तदा ॥ ८६४ ॥
नावोरिवाञ्चलौ देव्योरञ्चलाभ्यां जगत्पतेः । महाप्रवहणस्येव, बबन्ध बलसूदनः ॥ ८६५ ॥
कट्यां स्वामिनमारोह्याऽऽभियोगिक इवाऽमरः । अमराधिपतिर्भक्त्याऽचलद् वेदिगृहं प्रति ॥ ८६६ ॥
इन्द्राणीभ्यां द्रुतं देव्यावप्यारोह्य कटीतटे । अवियोजितहस्ताग्रं, चालिते स्वामिना समम् ॥ ८६७ ॥
शिरोरत्नैस्त्रिजगतस्ते तैः सह वधूवरैः । पूर्वद्वारेण विविशुर्मध्येवेदिनिकेतनम् ॥ ८६८ ॥
त्रायस्त्रिंशसुरस्तत्र, वह्निमह्नाय कोऽप्यथ । आविश्चक्रे वेदिकुण्डे, पृथ्वीमध्यादिवोत्थितम् ॥ ८६९ ॥
समिदाधानतो धूमलेखा व्यानशिरे दिवम् । कर्णावतंसतां यान्त्यश्चिरं खेचरयोषिताम् ॥ ८७० ॥
तमग्निं परितोऽभ्राम्यत्, स्वामी स्त्रीगीतमङ्गलः । सुमङ्गलासुनन्दाभ्यां, यावत् पूर्णाष्टमङ्गली ॥ ८७१ ॥
सहैव पाणिमोक्षेण, तेषामञ्चलमोक्षणम् । गीयमानाभिराशीर्भिः, कारयामास वासवः ॥ ८७२ ॥
सकलत्रोऽथ मघवा, हस्ताभिनयलीलया । ननर्त रङ्गाचार्यवन्ति, स्वाम्युत्सवभवा मुदः ॥ ८७३ ॥
तमन्वनृत्यन् मुदिता, अपरेऽपि दिवौकसः । मरुता नर्तितं वृक्षमन्वाश्रितलता इव ॥ ८७४ ॥
कैश्चिज्जयजयारावकारिभिश्चारणैरिव । कैश्चिद् विचित्रचारीकं, नृत्यद्भिर्भरतैरिव ॥ ८७५ ॥
गन्धर्वैरिव गायद्भिरपरैर्जातिबन्धुरम् । वादयद्भिर्मुखान्यन्यैरातोद्यानीव सुस्फुटम् ॥ ८७६ ॥
सम्भ्रमेण प्लवमानैः, प्लवगैरिव कैश्चन । हासयद्भिर्जनं सर्वमन्यैर्वैहासिकैरिव ॥ ८७७ ॥
अपसारयद्भिर्लोकं, प्रतीहारैरिवाऽपरैः । हर्षोन्मत्तैः सुरैरेवं, दृश्यमानस्वभक्तिकः ॥ ८७८ ॥
सुमङ्गलासुनन्दाभ्यां, भूषितोभयपार्श्वकः । दिव्ययानाधिरूढोऽथ, स्वस्थानमगमद् विभुः ॥ ८७९ ॥
[ पञ्चभिः कुलकम् ]

१ अव्याकुलः । २ इन्द्रः । ३ हास्यकर्मणि । ४ अनुवरको लोके "अणवर" इति प्रसिद्धः । ५ रङ्कुणाककवत् । ६ देवाः । ७ इन्द्रः । * सपत्नीकोऽथ आ ॥ † रङ्गाचार्यवत् सं १ ॥ ‡ रङ्गाचार्यवद्वावन्ति ।

एवं निवर्त्तितोद्वाहः, प्रभुं नत्वा स्वमाश्रयम्। ययौ समाप्तसङ्गीतो, रङ्गाचार्य इवाऽद्रिभित् ॥ ८८० ॥
ततः प्रभृति सोद्वाहस्थितिः स्वामिप्रदर्शिता। प्रावर्त्तत परार्थाय, महतां हि प्रवृत्तयः ॥ ८८१ ॥
भोगान् स्वाम्यप्यनासक्तः, पत्नीभ्यां बुभुजे चिरम्। सद्वेदनीयमपि हि, न कर्म क्षीयतेऽन्यथा ॥८८२॥
विवाहाऽनन्तरं ताभ्यां, समं विलसतः प्रभोः। गतेषु किञ्चिदूनेषु, पूर्वलक्षेषु षट्स्वथ ॥ ८८३ ॥
बाहुजीवपीठजीवौ, च्युत्वा सर्वार्थसिद्धतः। कुक्षौ सुमङ्गलादेव्या, युग्मत्वेनाऽवतेरतुः ॥ ८८४ ॥
तौ सुबाहुमहापीठजीवौ सर्वार्थसिद्धतः। च्युत्वा कुक्षौ सुनन्दायास्तद्वद्देवाऽवतेरतुः ॥ ८८५ ॥
चतुर्दश महास्वप्नान्, गर्भमाहात्म्यशंसिनः। तदैव मरुदेवीव, देव्यपश्यत् सुमङ्गला ॥ ८८६ ॥
स्वामिनी स्वामिने स्वप्नान्, कथयामास तानथ। चक्रभृत् ते सुतो भावीत्याख्यत् प्रभुरपि स्फुटम् ॥८८७॥
सूर्यसन्ध्ये इव प्राची, द्युतिद्योतितदिङ्मुखे। अपत्ये भरतब्राह्म्यौ, सुषुवेऽथ सुमङ्गला ॥ ८८८ ॥
अजीजनद् बाहुबलि-सुन्दर्यौ सुन्दराकृती। सुनन्दा स्वामिनी प्रावृडिव वारिदविद्युतौ ॥ ८८९ ॥
देवी सुमङ्गलैकोनपञ्चाशतमथ क्रमात्। असूत सुतयुग्मानि, रत्नानीव विदूरभूः ॥ ८९० ॥
अवर्धन्त क्रमेणाऽमी, रममाणा इतस्ततः। महौजसो महोत्साहा, विन्ध्याद्रौ कलभा इव ॥ ८९१ ॥
शुशुभे वृषभस्वामी, समन्तात् परिवारितः। तैरपत्यैर्महाशाखी, शाखाभिरिव भूरिभिः ॥ ८९२ ॥
तदा च कालदोषेण, प्रभावः कल्पभूरुहाम्। अहीयत प्रदीपानामिव तेजो दिवामुखे ॥ ८९३ ॥
प्रादुरासन् कषायाश्च, मिथुनानां क्रुदादयः। लाक्षाकणा इवाऽश्वत्थपादपानां शनैः शनैः ॥ ८९४ ॥
अथ हाकारमाकारधिक्काराख्यं नयत्रयम्। यतत्रयमिव व्याला, मिथुनान्यत्यलङ्घयन् ॥ ८९५ ॥
सम्भूय ऋषभनाथं, मिथुनान्युपतस्थिरे। तच्चाऽसमञ्जसं सर्वं, जायमानं व्यजिज्ञपन् ॥ ८९६ ॥
ज्ञानत्रयधरो जातिस्मरः स्वामीत्यवोचत। मर्यादोल्लङ्घिनां लोके, राजा भवति शासिता ॥ ८९७ ॥
आसयित्वाऽऽसनेऽत्युच्चेऽभिषिक्तः प्रथमं हि सः। चतुरङ्गबलोपेतः, स्यादखण्डितशासनः ॥ ८९८ ॥
तेऽप्यूचुर्भव राजा नस्त्वमेव किमुपेक्षसे?। ईक्ष्यते नाऽपरः कोऽपि, मध्येऽस्माकं य ईदृशः ॥ ८९९ ॥
अभ्यर्थयध्वमभ्येत्य, नाभिं कुलकरोत्तमम्। स वो दास्यति राजानमित्यभाषत नाभिभूः ॥ ९०० ॥
राजानं याचितस्तैस्तु, नाभिः कुलकराग्रणीः। भवतामृषभो राजा, भवत्विति जगाद तान् ॥ ९०१ ॥
अथो मिथुनधर्माणो, मुदिताः समुपेत्य ते। अस्माकं नाभिना राजाऽर्पितोऽसीन्यूचिरे प्रभुम् ॥ ९०२ ॥
ततः स्वाम्यभिषेकार्थं, तेऽयुर्नीराय युग्मिनः। सिंहासनं चाऽकम्पिष्ट, त्रिविष्टपपतेस्तदा ॥ ९०३ ॥
विज्ञायाऽवधिना राज्याभिषेकसमयं प्रभोः। तत्राऽऽजगाम सुत्रामा, गेहाद् गेहमिव क्षणात् ॥ ९०४ ॥
सौधर्मकल्पाऽधिपतिः, कृत्वा काञ्चनवेदिकाम्। अतिपाण्डुकम्बलावत्, तत्र सिंहासनं न्यधात् ॥९०५॥
राज्याभिषेकमृषभस्वामिनः पूर्वदिक्पतिः। देवानीतैस्तीर्थतोयैः, सौवस्तिक इव व्यधात् ॥ ९०६ ॥
स्वामिना वासयाञ्चक्रे, दिव्यवासांसि वासवः। चारुचन्द्रातपमयानीव नैर्मल्यसम्पदा ॥ ९०७ ॥
प्रभोर्जगत्किरीटस्य, किरीटादीनि वृत्रहा। रत्नालङ्करणान्यङ्गे, यथास्थानं न्यवेशयत् ॥ ९०८ ॥
आजग्मुर्युग्मिनोऽप्यम्भो, गृहीत्वाऽम्भोजिनीदलैः। उदर्घा इव तस्थुस्ते, पश्यन्तो भूषितं प्रभुम् ॥ ९०९ ॥
दिव्यनेपथ्यवस्त्रालङ्कृतस्य शिरसि प्रभोः। न युज्यते क्षेप्तुमिति, तेऽक्षिपन् पादयोः पयः ॥ ९१० ॥
विनीताः साध्वमी नेन, विनीताख्यां प्रभोः पुरीम्। निर्मातुं श्रीदमादिश्य, मघवा त्रिदिवं ययौ ॥९११॥
द्वादशयोजनायामां, नवयोजनविस्तृताम्। अयोध्येत्यपराभिख्यां, विनीतां सोऽकरोत् पुरीम् ॥९१२॥
तां च निर्माय निर्मायः, पूरयामास यक्षराट्। अक्षय्यवस्त्रनेपथ्यधनधान्यैर्निरन्तरम् ॥ ९१३ ॥
वज्रेन्द्रनीलवैडूर्यहर्म्यकिर्मीररश्मिभिः। भित्तिं विनाऽपि खे तत्र, चित्रकर्म विरच्यते ॥ ९१४ ॥

१ इन्द्रस्य। २ पुरोहित.। * मूर्त्तच° सता ॥ ३ इन्द्र.। ४ निष्कपट।

तत्रोच्चैः काञ्चनैर्हर्म्यैर्मेरुशैलशिरांस्यभि । पत्रालम्बनलीलेव, ध्वजव्याजाद् वितन्यते ॥ ९१५ ॥
तदग्रे दीप्तमाणिक्यकपिशीर्षपरम्पराः । अयत्नादर्शतां यान्ति, चिरं खेचरयोषिताम् ॥ ९१६ ॥
तस्यां गृहाङ्गणभुवि, स्वस्तिकन्यस्तमौक्तिकैः । स्वैरं कर्करकक्रीडां, कुरुते बालिकाजनः ॥ ९१७ ॥
तत्रोद्यानोच्चवृक्षाग्रस्खल्यमानान्यहर्निशम् । खेचरीणां विमानानि, क्षणं यान्ति कुलायताम् ॥ ९१८ ॥
तत्र दृष्ट्वाऽट्टहर्म्येषु, रत्नराशीन् समुच्छ्रितान् । †तदवकरकूटोऽयं, तर्क्यते रोहणाचलः ॥ ९१९ ॥
जलकेलिरतस्त्रीणां, त्रुटितैर्हारमौक्तिकैः । ताम्रपर्णीश्रियं तत्र, दधते गृहदीर्घिकाः ॥ ९२० ॥
तत्रेभ्याः सन्ति ते येषां, कस्याऽप्येकतमस्य सः । व्यवहर्तुं गतो मन्ये, वणिक्पुत्रो धनाधिपः ॥ ९२१ ॥
नक्तमिन्दुदृषद्भित्तिमन्दिरस्यन्दिवारिभिः । प्रशान्तपांसवो रथ्याः, क्रियन्ते तत्र सर्वतः ॥ ९२२ ॥
वापीकूपसरोलक्षैः, सुधासोदरवारिभिः । नागलोकं नवसुधाकुण्डं परिबभूव सा ॥ ९२३ ॥
गतायां जन्मतः पूर्वलक्षाणां विंशतौ तदा । तस्यां नगर्यां राजाऽभूत्, प्रभुः पालयितुं प्रजाः ॥९२४ ॥
ॐकार इव मन्त्राणां, नृपाणां प्रथमो नृपः । अपत्यानि निजानीव, पालयामास स प्रजाः ॥ ९२५ ॥
असाधुशासने साधुपालने कृतकर्मणः । प्रत्यङ्गानि स्वकानीव, मन्त्रिणो विदधे विभुः ॥ ९२६ ॥
चौर्यादिरक्षणे दक्षानारक्षानप्यसूत्रयत् । सुत्रामेव लोकपालान्, राजा वृषभलाञ्छनः ॥ ९२७ ॥
अनीकस्याङ्गमुत्कृष्टमुत्तमाङ्गं तनोरिव । राज्यस्थित्यै राजहस्ती, हस्तिनः स समग्रहीत् ॥ ९२८ ॥
आदित्यतुरगस्पर्द्धयेवात्युद्धुरकन्धरान् । बन्धुरान् धारयामास, तुरगान् वृषभध्वजः ॥ ९२९ ॥
सुश्लिष्टकाष्ठघटितान्, स्यन्दनान् नाभिनन्दनः । विमानानीव भूस्थानि, सूत्रयामास च स्वयम् ॥९३०॥
सुपरीक्षितसत्त्वानां, पत्तीनां च परिग्रहम् । नाभिसूनुस्तदा चक्रे, चक्रवर्तिभवे यथा ॥ ९३१ ॥
नव्यसाम्राज्यसौधस्य, स्तम्भानिव बलीयसः । अनीकाधिपतींस्तत्र, स्थापयामास नाभिभूः ॥ ९३२ ॥
* गो-बलीवर्द-करभ-सैरिभा-ऽश्वतरादिकम् । आददे तदुपयोगविदुरो हि जगत्पतिः ॥ ९३३ ॥
कल्पद्रुषु समुच्छन्नेष्वनपत्यान्वयेष्विव । कन्दमूलफलादीनि, तदा बुभुजिरे जनाः ॥ ९३४ ॥
शालि-गोधूम-चणक-मुद्गाद्या ओषधीरपि । तृणवत् स्वयमुत्पन्नास्ते चखादुरपाकिमाः ॥९३५ ॥
तस्मिन्नजीर्यत्याहारे, तैर्विज्ञप्तोऽवदद् विभुः । मृदित्वा त्वचयित्वा च, हस्तैस्ताः खादताऽधुना ॥ ९३६ ॥
उपदेशं जगद्भर्तुस्तेषां पालयतामपि । काठिन्यादोषधीनां तु, नाऽऽहारो जीर्यति स्म सः ॥ ९३७ ॥
तैर्विज्ञप्तः पुनः स्वामीत्यूचे सङ्घृष्य पाणिभिः । तास्तिमित्वा जलैः पत्रपुटे धृत्वा च खादत ॥ ९३८ ॥
ते तथा चक्रिरे तत्राऽप्यजीर्णाहारवेदनाम् । तैर्विज्ञप्तो जगन्नाथः, पुनरप्येवमादिशत् ॥ ९३९ ॥
पूर्वोक्तविधिमाधायौषधीर्मुष्टौ निधाय च । आतपे कक्ष्ययोः क्षिप्त्वा, भक्षयन्तु ततः सुखम् ॥ ९४० ॥
तत्राऽप्यजीर्णाहारेण, विधुरेषु जनेष्वथ । तरुखण्डे मिथः शाखाघर्षणादग्निरुत्थितः ॥ ९४१ ॥
तृणकाष्ठादि स प्रोषन्‡, दीप्ररत्नभ्रमेण तु । धावित्वाऽऽदातुमारेभे, प्रसारितकरैर्जनैः ॥ ९४२ ॥
तेनाऽग्निना दह्यमाना, भीताः प्रभुमुपेत्य ते । नूतनं भूतमुद्भूतं, किञ्चिदप्येवमूचिरे ॥ ९४३ ॥
स्वाम्यप्यूचे स्निग्धरूक्षकालादेषोऽग्निरुत्थितः । नैकान्तरूक्षे नैकान्तस्निग्धे काले भवत्यसौ ॥ ९४४ ॥
स्थित्वाऽस्य पार्श्वतो वह्नेः, पर्यन्तस्थं तृणादिकम् । अपसारयताऽशेषं, पश्चाद् गृह्णीत तं ननु ॥ ९४५ ॥
ततः पूर्वोक्तविधिना, साधयित्वौषधीरिमाः । ज्वलनेऽस्मिन् परिक्षिप्य, परिपच्य च खादत ॥ ९४६ ॥
ते तथा चक्रिरे मुग्धा, दग्धाश्चौषधयोऽग्निना । आगत्य कथयामासुरिति च स्वामिने पुनः ॥ ९४७ ॥
स्वामिन् ! न किञ्चिदस्मभ्यं, ददात्येष बुभुक्षितः । कुक्षिम्भरिरिवैकोऽस्ति, क्षिप्ताः सर्वत ओषधीः ॥९४८॥
तदानीं सिन्धुरस्कन्धाधिरूढः प्रभुरप्यभूत् । तैः समानाययामास, मृत्तिकापिण्डमार्द्रकम् ॥ ९४९ ॥

* दीप्रमा° स १, २ ॥ † तदावकरकू° आ, सं २ ॥ ‡ स्रोषन् सता ॥

कुम्भिकुम्भे मृदं न्यस्य, प्रवितन्य च पाणिना । पात्रं चक्रे तदाकारं, शिल्पानां प्रथमं प्रभुः ॥ ९५० ॥
स्वामीत्यूचे कुरुतैवं, भाजनान्यपराण्यपि । तान्यग्नौ न्यस्य पचतौषधीस्तदनु खादत ॥ ९५१ ॥
ततश्च चक्रिरे ते तु, तथैव स्वामिशासनम् । तदादि जज्ञिरे कुम्भकाराः प्रथमकारवः ॥ ९५२ ॥
*चक्रे वर्द्धक्ययस्कारं, गृहाद्यर्थं जगत्पतिः । विश्वस्य सुखसृष्ट्यै हि, महापुरुषसृष्टयः ॥ ९५३ ॥
गृहादिचित्रकृतये, कृती चित्रकृतोऽपि सः । सूत्रयामास लोकानां, क्रीडावैचित्र्यहेतुना ॥ ९५४ ॥
कुविन्दान्[1] कल्पयामास, लोकसंव्यानहेतवे । सर्वकल्पद्रुमस्थाने, ह्येकः कल्पद्रुमः प्रभुः ॥ ९५५ ॥
रोम्णां नखानां वृद्ध्या च, बाध्यमाने भृशं जने । जगदेकपिता स्वामी, नापितानप्यसूत्रयत् ॥ ९५६ ॥
तानि पञ्चाऽपि शिल्पानि, प्रत्येकं †विंशिभेदतः । शतधा प्रासरल्लोके, स्रोतांसि सरितामिव ॥ ९५७ ॥
तृणहारकाष्ठहारकृषिवाणिज्यकान्यपि । कर्माण्यासूत्रयामास, लोकानां जीविकाकृते ॥ ९५८ ॥
स्वामी सामदानभेददण्डोपायचतुष्टयम् । जगद्व्यवस्थानगरीचतुष्पथमकल्पयत् ॥ ९५९ ॥
द्वासप्ततिकलाकाण्डं, भरतं सोऽध्यजीगपत् । ब्रह्म[2] ज्येष्ठाय पुत्राय, ब्रूयादिति नयादिव ॥ ९६० ॥
भरतोऽपि स्वसोदर्यांस्तनयानितरानपि । सम्यगध्यापयत् पात्रे, विद्या हि शतशाखिका ॥ ९६१ ॥
नाभेयो बाहुबलिनं, भिद्यमानान्यनेकशः । लक्षणानि च हस्त्यश्वस्त्रीपुंसानामजिज्ञपत् ॥ ९६२ ॥
अष्टादश लिपीर्ब्राह्म्या, अपसव्येन[3] पाणिना । दर्शयामास सव्येन, सुन्दर्या गणितं पुनः ॥ ९६३ ॥
‡मानोन्मानाऽवमानानि, प्रतिमानानि वस्तुषु । पोतान् प्रोतांश्च मण्यादीन्, प्रभुः प्रावर्तयत् तदा ॥ ९६४ ॥
राजाध्यक्षकुलगृहसाक्षिभिः समजायत । व्यवहारस्तदादिष्टो, विवादिप्रतिवादिनाम् ॥ ९६५ ॥
नागाद्यर्चा[4] धनुर्वेदश्चिकित्सोपासने रणः । अर्थशास्त्रं वन्धघातवधगोष्ठ्यस्ततोऽभवन् ॥ ९६६ ॥
असौ माता पिता भ्राता, भार्या पुत्रो गृहं धनम् । ममेत्यादि च ममताऽभूज्जनानां तदादिका ॥ ९६७ ॥
दृष्ट्वा स्वामिनमुद्वाहे, प्रसाधितमलङ्कृतम् । प्रासाधयदलञ्चक्रे, लोकोऽपि स्वं ततः परम् ॥ ९६८ ॥
तदा दृष्ट्वा प्रभुकृतं, पाणिग्रहणमादिमम् । लोकोऽपि कुरुतेऽद्याऽपि, ध्रुवो[5] ह्यध्वा महत्कृतः ॥ ९६९ ॥
दत्तकन्योपयमनं, प्रभृद्वाहात् प्रभृत्यभूत् । चूडोपनयनक्ष्वेडापृच्छा अपि ततोऽभवन् ॥ ९७० ॥
एतच्च सर्वं सावद्यमपि लोकानुकम्पया । स्वामी प्रवर्त्तयामास, जानन् कर्त्तव्यमात्मनः ॥ ९७१ ॥
तदाम्नायात् कलादीदमद्याऽपि भुवि वर्त्तते । अर्वाचीनैर्बुद्धिमद्भिर्निबद्धं शास्त्ररूपतः ॥ ९७२ ॥
स्वामिनः शिक्षया दक्षो, लोकोऽभूदखिलोऽपि सः । अन्तरेणोपदेष्टारं, पशवन्ति[6] नरा अपि ॥ ९७३ ॥
तदोग्र-भोग-राजन्य-क्षत्रभेदैश्चतुर्विधान् । जनानासूत्रयद् विश्वस्थितिनाटकसूत्रभृत् ॥ ९७४ ॥
आरक्षपुरुषा उग्रा, उग्रदण्डाधिकारिणः । भोगा मन्त्र्यादयो भर्तुस्त्रायस्त्रिंशा हरेरिव ॥ ९७५ ॥
राजन्या जज्ञिरे ते ये, समानवयसः प्रभोः । अवशेषास्तु पुरुषा, बभूवुः क्षत्रिया इति ॥ ९७६ ॥
विरचय्य नवामेवं, व्यवहारव्यवस्थितिम् । नवोढामिव बुभुजे, नवां राज्यश्रियं विभुः ॥ ९७७ ॥
यथाऽपराधं दण्ड्येषु, दण्डं प्रायुङ्क्त नाभिभूः । व्याधितेषु यथा व्याधिचिकित्सक इवाऽगदम् ॥ ९७८ ॥
दण्डभीतस्तदालोकश्चक्रे चौर्यादिकं न हि । एकैव दण्डनीतिर्हि, सर्वान्यायाहिजाङ्गुली[7] ॥ ९७९ ॥
क्षेत्रोद्यानगृहादीनां, मर्यादां कोऽपि कस्यचित् । नाऽत्यक्रामत् प्रभोराज्ञामिव लोकः सुशिक्षितः ॥ ९८० ॥
कालेऽवर्षञ्जलधराः, सस्यनिष्पत्तिहेतवे । न्यायधर्मं जगद्भर्तुर्गर्जाव्याजात् स्तुवन्निव ॥ ९८१ ॥
सस्यक्षेत्रैरिक्षुवाटैर्गोकुलैश्चाऽऽकुलास्तदा । रेजुर्जनपदाः स्वर्ध्या, स्वाम्यगर्द्धाभिधायिनः ॥ ९८२ ॥
हेयादेयविवेकज्ञीकृतैर्लोकैर्व्यधाद् विभुः । प्रायेण भरतक्षेत्रं, विदेहक्षेत्रसन्निभम् ॥ ९८३ ॥

---

* लोकानां गृहहेतोश्च, प्रभुर्व्यधित वर्द्धकीन् आ ॥ १ तन्तुवायकान् । † विंशभे° स १, २, आ ॥ २ परमतत्त्वम् । ३ दक्षिणेन । ‡ °न्मानप्रमाणानि स १ ॥ ४ गजादिपूजा । ५ स्थिरः । ६ पशुवदाचरन्ति । ७ सर्पोच्चाटनी मन्त्रविद्या ।

राज्याभिषेकात् प्रभृति, पृथिवीं परिपालयन् । त्रिषष्टिं पूर्वलक्षाणि, नाभिभूरत्यवाहयत् ॥ ९८४ ॥
प्रभुः स्मरकृतावासे, मधुमासे समेयुषि । अगादन्येद्युरुद्याने, परिवारानुरोधतः ॥ ९८५ ॥
पुष्पवासगृहे तत्र, पुष्पाभरणभूषितः । आसाञ्चक्रे जगत्स्वामी, पुष्पमास इवाऽङ्गवान् ॥ ९८६ ॥
गुञ्जद्भिः फुल्लमाकन्दमकरन्दोन्मदालिभिः । मधुलक्ष्मीर्बभूवेव, स्वागतिकी जगत्प्रभोः ॥ ९८७ ॥
पूर्वरङ्ग इवाऽऽरब्धे, पञ्चमोच्चारिभिः पिकैः । अदर्शयल्लतालास्यं, मलयानिललासकः ॥ ९८८ ॥
कामुकेभ्य इवाऽऽश्लेषपादघातमुखासवान् । ददुः कुरबकाऽशोकबकुलेभ्यो मृगेक्षणाः ॥ ९८९ ॥
तिलकः प्रबलामोदप्रमोदितमधुव्रतः । अशोभयद् युवभालस्थलीमिव वनस्थलीम् ॥ ९९० ॥
पुष्पस्तबकभारेण ननाम लवलीलता । पीनोरसिजभारेण, भूयसेव कृशोदरी ॥ ९९१ ॥
सहकारलतां मन्दमन्दं मुग्धां वधूमिव । विदग्धः कामुक इव, सस्वजे मलयानिलः ॥ ९९२ ॥
जम्बूकदम्बमाकन्दचम्पकाशोकयष्टिभिः । प्रवासिनो हन्तुमलं, याष्टीक इव मन्मथः ॥ ९९३ ॥
प्रत्यग्रपाटलापुष्पसम्पर्कसुरभीकृतः । वारिवत् कस्य न ददौ, मुदं मलयमारुतः ? ॥ ९९४ ॥
अन्तःसारो मधुरसैर्मधूको मधुभाण्डवत् । मधुपैरुपसर्पद्भिश्चक्रे कलकलाकुलः ॥ ९९५ ॥
गोलिकाधनुरभ्यासं, कर्त्तुं कुसुमधन्वना । गोलिकाः सज्जिता मन्ये, कदम्बकुसुमच्छलात् ॥ ९९६ ॥
इष्टापूर्त्तप्रियेणेव, वसन्तेन प्रकल्पिता । वासन्ती भृङ्गपान्थानां, मकरन्दरसप्रपा ॥ ९९७ ॥
सिन्दुवारेण दुर्वारकुसुमामोदसम्पदा । चक्रे घ्राणविषेणेव, महामोहः प्रवासिनाम् ॥ ९९८ ॥
वसन्तोद्यानपालेन, चम्पकेषु नियोजिताः । आरक्षा इव निःशङ्कं, भ्रमन्ति स्म मधुव्रताः ॥ ९९९ ॥
उत्तमानुत्तमानामप्यवनीरुहवीरुधाम् । श्रियं मधुर्दिदेश स्त्रीपुंसानामिव यौवनम् ॥ १००० ॥
तत्राऽवचेतुं कुसुमान्यारभन्त मृगीदृशः । महातिथेर्वसन्तस्य, दातुमर्घमिवोत्सुकाः ॥ १००१ ॥
अस्मास्वायुधभूतासु, स्मरस्याऽन्यैः किमायुधैः ? । इति बुद्ध्येव कामिन्यः, कुसुमान्यवचिच्यिरे ॥१००२॥
उच्चितेषु च पुष्पेषु, तद्वियोगरुजार्दिता । अरोदीदिव वासन्ती, मञ्जुगुञ्जन्मधुव्रता ॥ १००३ ॥
मल्लीमुच्चित्य गच्छन्ती, काचित् तल्लग्नवाससा । तस्थौ निषिध्यमानेव, तया माऽन्यत्र गा इति ॥१००४॥
चम्पकं चिन्वती काचिदलियूनोत्पतिष्णुना । दश्यते स्माऽधरदले, क्रुधेवाऽऽश्रयभङ्गतः ॥ १००५ ॥
उच्चैरुच्चैः सुमनसः, काचिदुत्क्षिप्तदोर्लता । जहार मनसा सार्द्धं, यूनां दोर्मूलदर्शिनाम् ॥ १००६ ॥
प्रत्यग्रपुष्पस्तबकसनाथीकृतपाणयः । रेजुः पुष्पावचायिन्यो, जङ्गमा इव वल्लयः ॥ १००७ ॥
प्रतिशाखं विलग्नाभिः, पुष्पोच्चयकुतूहलात् । रेजिरे शाखिनः स्त्रीभिः, सञ्जातस्त्रीफला इव ॥ १००८ ॥
मल्लिकाकोरकैः कोऽपि, कामिन्याः स्वयमुच्चितैः । सर्वाङ्गाभरणं चक्रे, मुक्तादामविडम्बकम् ॥ १००९ ॥
प्रियायाः कोऽपि धम्मिल्लं, विकचैर्निजपाणिना । कुसुमैः पूरयामास, कुसुमेषोरिवेषुधिम् ॥ १०१० ॥
पञ्चवर्णैः स्रजं कश्चिद्, ग्रथित्वा कुसुमैः स्वयम् । विडम्बितेन्द्रधनुषं, दत्त्वा कान्तामतोषयत् ॥ १०११ ॥
सलीलं प्रियया कोऽपि, प्रक्षिप्तं पुष्पकन्दुकम् । प्रतीच्छति स्म पाणिभ्यां, प्रसादमिव किङ्करः ॥१०१२॥
दोलान्दोलनसञ्जातयातायाता मृगीदृशः । जघ्नुः पादैः पादपाग्रान्, सापराधान् पतीनिव ॥ १०१३ ॥
दोलारूढा नवोढा, पृच्छन्तीनां धवाभिधाम् । काऽप्यालीनां लताघातान्, सेहे ह्रीमुद्रितानना ॥१०१४॥
कातराक्ष्या समं कश्चिदारूढः सम्मुखीनया । गाढमन्दोलयद् दोलां, तद्गाढालिङ्गनेच्छया ॥ १०१५ ॥
प्रतिशाखं लम्बमानदोलान्दोलनलीलया । रेजुरुद्यानवृक्षेषु, युवानः प्लवगा इव ॥ १०१६ ॥
एवं खेलायमानेषु, तत्र पौरजनेष्वथ । दध्यौ स्वामी किमीदृक्षा, क्रीडाऽन्यत्राऽपि कुत्रचित् ? ॥१०१७॥
जज्ञेऽथाऽवधिना स्वामी, स्वःसुखं चोत्तरोत्तरम् । अनुत्तरस्वर्गसुखं, भुक्तपूर्वं स्वयं च यत् ॥ १०१८ ॥
भूयोऽप्यचिन्तयदिदं, विगलन्मोहबन्धनः । धिगेष विषयाक्रान्तो, वेत्ति नाऽऽत्महितं जनः ॥ १०१९ ॥

अहो ! संसारकूपेऽस्मिन्, जीवाः कुर्वन्ति कर्मभिः । अरघट्टघटीन्यायेनैहिरेयाहिराक्रियाम् ॥ १०२० ॥
धिग् धिग् मोहान्धमनसां, जन्मिनां जन्म गच्छति । सर्वथाऽपि मुधैवेदं, सुप्तानामिव शर्वरी ॥ १०२१ ॥
एते रागद्वेषमोहा, उद्यन्तमपि देहिनाम् । मूलाद् धर्मं निकृन्तन्ति, मूषिका इव पादपम् ॥ १०२२ ॥
अहो ! विवर्ध्यते मुग्धैः, क्रोधो न्यग्रोधवृक्षवत् । अपि वर्द्धयितारं स्वं, यो भक्षयति मूलतः ॥ १०२३ ॥
न किञ्चिन्मानवा मानाधिरूढा गणयन्त्यमी । मर्यादालङ्घिनो हस्त्यारूढा हस्तिपका इव ॥ १०२४ ॥
कपिकच्छूबीजकोशीमिव मायां दुराशयाः । उपतापकरीं नित्यं, न त्यजन्ति शरीरिणः ॥ १०२५ ॥
दुग्धं तुषोदकेनेवाऽञ्जनेनेव सितांशुकम् । निर्मलोऽपि गुणग्रामो, लोभेनैकेन दूष्यते ॥ १०२६ ॥
कषाया भवकारायां, चत्वारो यामिका इव । यावज्जाग्रति पार्श्वस्थास्तावन्मोक्षः कुतो नृणाम् ? ॥ १०२७ ॥
अङ्गनालिङ्गनव्यग्रा, भूतात्ता इव देहिनः । समन्ततः क्षीयमाणमप्यात्मानं न जानते ॥ १०२८ ॥
तत्तत्प्रकारैराहारैरात्मनोन्माद आत्मनः । उत्पाद्यतेऽनर्थकृते, सिंहारोग्यमिवौषधैः ॥ १०२९ ॥
सुगन्धीदं सुगन्धीदं, किं श्रयामीति लम्पटः ? । मूढो भ्रमरवद् भ्राम्यन्न जातु लभते रतिम् ॥ १०३० ॥
आपातरमणीयैर्धिग्, रमणीप्रायवस्तुभिः । प्रतारयति लोकः स्वं, बालं क्रीडनकैरिव ॥ १०३१ ॥
वेणुवीणादिनादेषु, दत्तकर्णो निरन्तरम् । स्वार्थाद् भ्रश्यति निद्रालुरिव शास्त्रानुचिन्तनात् ॥ १०३२ ॥
युगपद् विषयैरेभिर्वातपित्तकफैरिव । लुप्यते प्रबलीभूतैश्चैतन्यं धिक् शरीरिणाम् ॥ १०३३ ॥

एवं संसारवैराग्यचिन्तासन्ततितन्तुभिः । निःस्यूतमानसो यावद्, बभूव परमेश्वरः ॥ १०३४ ॥
तावत् सा[1]रस्वता[2]दित्यव[3]ह्नयो व[4]रुणा अपि । गर्दतो[5]यास्तुषि[6]ताश्चाऽव्या[7]बाधा म[8]रुतस्तथा ॥
रि[9]ष्टाश्चेति नवभेदा, ब्रह्मलोकान्तवासिनः । देवा लोकान्तिकाः पादान्तिकमेत्य जगत्प्रभोः ॥ १०३६ ॥
मूर्ध्नि न्यस्तैरञ्जलिभिः, पद्मकोशसहोदरैः । आम्रत्रितापरोत्तंसा, इवैवं ते व्यजिज्ञपन् ॥ १०३७ ॥

[ चतुर्भिः कलापकम् ]

शक्रचूडामणिविभाम्भोमग्नचरणाम्बुज ! । भरतक्षेत्रनिर्नष्टमोक्षमार्गप्रदीपक ! ॥ १०३८ ॥
लोकव्यवस्था प्रथमा, यथा नाथ ! प्रवर्त्तिता । प्रवर्त्तय तथा धर्मतीर्थं कृत्यं निजं स्मर ॥ १०३९ ॥

एवं देवास्ते प्रभुं विज्ञपय्य, स्वं स्वं स्थानं ब्रह्मलोके दिवीयुः ।
प्रव्रज्येच्छुः स्वाम्यपि स्वं निशान्तं, सद्योऽयासीन्नन्दनोद्यानमध्यात् ॥ १०४० ॥

**इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये प्रथमे पर्वणि भगवज्जन्म-व्यवहार-राज्यस्थितिप्रकाशनो नाम द्वितीयः सर्गः ॥ २ ॥**

## तृतीयः सर्गः ।

आजूहवदथ स्वामी, सामन्तादीन् समन्ततः । भरतं बाहुबल्यादींस्तनयानितरानपि ॥ १ ॥
प्रभुर्बभाषे भरतं, राज्यमादत्स्व वत्स ! नः । वयं संयमसाम्राज्यमुपादास्यामहेऽधुना ॥ २ ॥
स्वामिनो वचसा तेन, स्थित्वा क्षणमधोमुखः । प्राञ्जलिर्भरतो नत्वा, जगादैवं सगद्गदम् ॥ ३ ॥
त्वत्पादपद्मपीठाग्रे, लुठतो मे यथा सुखम् । रत्नसिंहासने स्वामिन्नासीनस्य तथा नहि ॥ ४ ॥
त्वदग्रे धावतः पद्भ्यां, यथा मम सुखं विभो ! । सलीलसिन्धुरस्कन्धाधिरूढस्य तथा नहि ॥ ५ ॥
त्वत्पादपङ्कजच्छायानिलीनस्य यथा सुखम् । जायते मे सितच्छत्रच्छायाच्छन्नस्य नो तथा ॥ ६ ॥
त्वया विरहितः स्यां चेत्, तत् किं साम्राज्यसम्पदा ? । त्वत्सेवासुखदुग्धाब्धे, राज्यसौख्यं हि बिन्दुवत् ॥७॥
स्वाम्यपीत्यवदद् राज्यमस्माभिस्तावदुज्झितम् । पृथ्व्यां च पार्थिवाभावे, मात्स्यो न्यायः प्रवर्तते ॥ ८ ॥
पृथिवीं तदिमां वत्स !, यथावत् परिपालय । आदेशकारकोऽसि त्वमादेशोऽप्ययमेव नः ॥ ९ ॥
सिद्धादेशं प्रभोरेवं, स लङ्घितुमनीश्वरः । आमेत्यभाषत गुरुष्वेषैव विनयस्थितिः ॥ १० ॥
प्रणम्य स्वामिनं मूर्ध्ना, विनीतो भरतस्ततः । सिंहासनमलञ्चक्रे, पित्र्यं वंशमिवोन्नतम् ॥ ११ ॥
स्वाम्यादेशादथाऽऽमात्यसामन्तानीकपादिभिः । प्रभोरिव सुरैश्चक्रेऽभिषेको भरतस्य* तु ॥ १२ ॥
तदा च शुशुभे छत्रं, पार्वणेन्दुसहोदरम् । स्वामिनः शासनमिवाऽखण्डं भरतमूर्द्धनि ॥ १३ ॥
तत्पार्श्वयोश्चकाशाते, आपतन्तौ च चामरौ । भरतार्द्धद्वयादेष्यच्छ्रियोर्दूताविवाऽऽगतौ ॥ १४ ॥
चकास्तामास वासोभिर्मुक्तालङ्करणैरपि । गुणैरिव स्वैरत्यन्तविशदैर्वृषभात्मजः ॥ १५ ॥
शशीव स नवो राजा, महामहिमभाजनम् । नमश्चक्रे राजचक्रेणाऽऽत्मकल्याणकाम्यया ॥ १६ ॥
अथो ददौ बाहुबलिप्रभृतिभ्यो यथोचितम् । अन्येभ्योऽपि च पुत्रेभ्यो, विभज्य विषयान् विभुः ॥१७॥
ततश्च सांवत्सरिकं, दानमारभत प्रभुः । कल्पद्रुम इव स्वेच्छाप्रार्थनानुगुणं नृणाम् ॥ १८ ॥
यो येनाऽर्थी स तद् गृह्णात्वेवमाघोषणां विभुः । चतुष्पथप्रतोल्यादिस्थानेषूच्चैरकारयत् ॥ १९ ॥
चिरभ्रष्टानि नष्टानि, प्रक्षीणस्वामिकानि च । अतिप्रनष्टसेतूनि, गिरिकुञ्जगतानि च ॥ २० ॥
श्मशानस्थानगूढानि, गुप्तानि च गृहान्तरे । रजतस्वर्णरत्नादिधनान्याहृत्य सर्वतः ॥ २१ ॥
वासवादिष्टधनदप्रेरिता जृम्भकाः सुराः । ददतोऽपूरयन् भर्त्तुः, पयांसीव पयोमुचः ॥ २२ ॥
[ त्रिभिर्विशेषकम् ]
एकां कोटीं हिरण्यस्य, लक्षाण्यष्टौ च नाभिभूः । दिने दिने ददौ सूरोदयादाभोजनक्षणम् ॥ २३ ॥
वत्सरेण हिरण्यस्य, ददौ कोटीशतत्रयम् । अष्टाशीतिं च कोटीनां, लक्षाशीतिं च नाभिभूः ॥ २४ ॥
जातसंसारवैराग्या, दीक्षया स्वामिनो जनाः । शेषामात्रमदोऽगृह्णन्निच्छादानेऽपि नाऽधिकम् ॥ २५ ॥
अथ वार्षिकदानान्ते, वासवश्चलितासनः । भक्त्याऽन्य इव भरतो, भगवन्तमुपास्थित ॥ २६ ॥
समं सुरवरैरम्भस्कुम्भहस्तैर्जगत्पतेः । दीक्षोत्सवाभिषेकं स, चक्रे राज्याभिषेकवत् ॥ २७ ॥
मङ्क्षूपनीतं तदधिकारिणेव बलारिणा । दिव्यालङ्कारवस्त्रादि, पर्यधत्त जगद्विभुः ॥ २८ ॥
अनुत्तरविमानानां, विमानमिव किञ्चन । सुदर्शनाख्यां शिबिकां, पत्ये हरिरसूत्रयत् ॥ २९ ॥
दत्तहस्तो महेन्द्रेण, शिबिकामारुरोह ताम् । प्रभुः प्रथमसोपानमिव लोकाग्रवेश्मनः ॥ ३० ॥
आदौ रोमाञ्चितैर्मर्त्यैरमर्त्यैस्तदनन्तरम् । उदध्रे शिबिका मूर्त्तपुण्यभार इवाऽऽत्मनः ॥ ३१ ॥
वर्यमङ्गलतूर्याणि, ताडितानि सुरासुरैः । अपूरयन् दिशो नादैः, पुष्करावर्त्तका इव ॥ ३२ ॥
चकाशे चामरद्वन्द्वं, पार्श्वतस्त्रिजगत्पतेः । नैर्मल्यमिव मूर्तिस्थं, परलोकेहलोकयोः ॥ ३३ ॥

---

१ यथा गुरुलघुमत्स्यान् मत्स्याः भक्षयन्ति तद्वद् राजानं विना लोका अपि एवं कुर्वन्ति । * भरतेशितुः सं १, २ खं ॥

प्रीणितश्रवणो नृणामुच्चैर्जयजयारवः । चक्रे पत्युर्बन्दिवृन्दैरिव वृन्दारकव्रजैः ॥ ३४ ॥
नाथोऽपि शिबिकारूढः, पथि गच्छन्नराजत । सुरोत्तमविमानस्थशाश्वतप्रतिमोपमः ॥ ३५ ॥
भगवन्तं तथाऽऽयान्तं, दृष्ट्वा सर्वेऽपि नागराः । सम्भ्रमादन्वधावन्त, पितरं बालका इव ॥ ३६ ॥
दूरतः स्वामिनं द्रष्टुं, जीमूतमिव केकिनः । उच्चपादपशाखासु, केचिदारुरुहुर्नराः ॥ ३७ ॥
केचिच्च स्वामिनं द्रष्टुमारूढा मार्गवेश्मसु । चन्द्रातपमिव प्रौढं, सूर्यातपमजीगणन् ॥ ३८ ॥
अश्वानारुरुहुः केऽपि, कालक्षेपासहिष्णवः । त्वरितं स्वयमेवाऽश्वा, इव पुप्लुविरे पथि ॥ ३९ ॥
अन्तः प्रविश्य लोकानां, केऽपि वारामिवाऽऽतर्यः । अग्रे प्रादुर्भवन्ति स्म, स्वामिनो दर्शनेच्छया ॥ ४० ॥
अभि त्रिभुवनाधीशं, धावन्त्यः काश्चिदङ्गनाः । वेगात् त्रुटितहारेण, लाजाञ्जलिमिवाऽमुचन् ॥ ४१ ॥
आगच्छतो जगद्भर्तुरग्रे तस्थुर्दिदृक्षया । कटिस्थबाला आरूढवानरा इव वीरुधः ॥ ४२ ॥
भुजावुभयतः सख्योः, काश्चिदालम्ब्य सत्वरम् । कृत्वा पक्षानिवाऽऽगच्छन्, कुचकुम्भभरालसाः ॥ ४३ ॥
गतिभङ्गकरान् भारान्, स्वान् नितम्बान् मृगीदृशः । निनिन्दुः काश्चन स्वामिप्रेक्षणक्षणकाङ्क्षया ॥ ४४ ॥
शुभकौसुम्भवसना, वर्त्मवेश्मकुलाङ्गनाः । पूर्णपात्राम् दधुः काश्चित्, सेन्दुसन्ध्यासहोदराः ॥ ४५ ॥
काश्चिदप्यञ्चलान् पाणिपद्मैश्चपललोचनाः । चामराणीव चलयामासुरालोकने प्रभोः ॥ ४६ ॥
काश्चिदप्यभि नाभेयं, नार्यो लाजान् निचिक्षिपुः । आत्मनः पुण्यबीजानि, वपन्त्य इव निर्भरम् ॥४७॥
चिरं जीव चिरं नन्देत्याद्याशीर्वचनानि च । काश्चिज्जगुर्निजकुलसुवासिन्य इवोच्चकैः ॥ ४८ ॥
निश्चलाक्ष्यश्चलाक्ष्योऽपि, मञ्जुगा मन्दगा अपि । प्रभुं पश्यन्त्योऽनुयान्त्यश्चाऽभूवन् पुरयोषितः ॥ ४९ ॥
नभस्यथ समापेतुरपि देवाश्चतुर्विधाः । महाविमानैः कुर्वाणा, एकच्छायं महीतलम् ॥ ५० ॥
मदाम्भोवर्षिभिः केचित्, कुञ्जरैर्निर्जरोत्तमाः । आपतन्तो विदधिरे, दिवं मेघमयीमिव ॥ ५१ ॥
अपारगगनाम्भोधेस्तरण्डैस्तुरगोत्तमैः । कशानौदण्डसहिता, आपतन् पतिमीक्षितुम् ॥ ५२ ॥
मूर्तिमद्भिः पवमानैरिवाऽतिशयिरंहसा । स्यन्दनैर्द्युसदः केचिदासदन्नाभिनन्दनम् ॥ ५३ ॥
अन्योऽन्यं वाहनक्रीडाप्रतिज्ञातपणा इव । प्रतीक्षाञ्चक्रिरे मित्रमपि न त्रिदिवौकसः ॥ ५४ ॥
स्वाम्यसौ स्वाम्यसावेवं, कथयन्तो मिथः सुराः । वाहनानि स्थिरीचक्रुः, प्रासग्रामा इवाऽध्वगाः ॥ ५५ ॥
विमानहर्म्यैः करिभिस्तुरगैः स्यन्दनैरपि । नभस्यभूद् द्वितीयेव, विनीता नगरी तदा ॥ ५६ ॥
परिवव्रे जगन्नाथः, प्रकृष्टसुरमानुषैः । मानुषोत्तरशिखरीवाऽहस्करनिशाकरैः ॥ ५७ ॥
पार्श्वयोर्भरतबाहुबलिभ्यामुपसेवितः । रोधोभ्यामिव पाथोधिर्बभासे वृषभध्वजः ॥ ५८ ॥
अष्टानवत्या तनयैर्विनीतैरितरैरपि । अन्वगामि जगत्स्वामी, यूथनाथ इव द्विपैः ॥ ५९ ॥
माता पत्न्यौ च पुत्र्यौ च, स्त्रियोऽन्या अपि साश्रवः । सावश्यायकणाः पद्मिन्य इव प्रभुमन्वगुः ॥ ६० ॥
विमानमिव सर्वार्थसिद्धं प्राक्तनजन्मनि । नाम्ना सिद्धार्थमुद्यानमाससाद जगत्पतिः ॥ ६१ ॥
तस्माच्च शिबिकारत्नात्, संसारादिव निर्ममः । समुत्ततार नाभेयस्तत्राऽशोकतरोस्तले ॥ ६२ ॥
तानि वस्त्राणि माल्यानि, भूषणानि च नाभिभूः । उज्झाञ्चकार सपदि, कषायानिव सर्वतः ॥ ६३ ॥
कोमलं धवलं सूक्ष्मं, व्यूतं चन्द्रकरैरिव । देवदूष्यं देवराजः, स्कन्धदेशे न्यधाद् विभोः ॥ ६४ ॥
तदा च चैत्रबहुलाष्टम्यां चन्द्रमसि श्रिते । नक्षत्रमुत्तराषाढामह्नो भागेऽथ पश्चिमे ॥ ६५ ॥
भवजयजयारावकोलाहलमिषाद् भृशम् । उद्गिरद्भिर्मुदमिव, वीक्ष्यमाणो नरामरैः ॥ ६६ ॥
उदखानम चतसृभिर्मुष्टिभिः शिरसः कचान् । चतसृभ्यो दिग्भ्यः शेषामिव दातुमनाः प्रभुः ॥ ६७ ॥
[ त्रिभिर्विशेषकम् ]

१ आति- जलनिवासी पक्षी । २ चैत्रकृष्णाष्टम्याम् ।

प्रतीच्छति स्म सौधर्माधिपतिः कुन्तलान् प्रभोः । वस्त्राञ्चले वर्णान्तरतन्तुमण्डनकारिणः ॥ ६८ ॥
मुष्टिना पञ्चमेनाऽथ, शेषान् केशान् जगत्पतिः । समुंचिखनिषन्नेवं, ययाचे नमुंचिद्विषा ॥ ६९ ॥
नाथ! त्वदंसयोः स्वर्णरुचोर्मरकतोपमा । वातानीता विभात्येषा, तदास्तां केशवल्लरी ॥ ७० ॥
तथैव धारयामास, तामीशः केशवल्लरीम् । याञ्चामेकान्तभक्तानां, स्वामिनः खण्डयन्ति न ॥ ७१ ॥
सौधर्मेशः क्षीरसिन्धौ, केशान् क्षिप्त्वाऽभ्युपेत्य च । रङ्गाचार्य इवारक्षत्, तुमुलं मुष्टिसंज्ञया ॥ ७२ ॥
कृतषष्ठतपःकर्मा, कृतसिद्धनमस्कृतिः । देवासुरमनुष्याणां, समक्षमथ नाभिभूः ॥ ७३ ॥
सावद्ययोगं सकलं, प्रत्याख्यामीत्युदीरयन् । मोक्षाध्वनो रथमिव, चारित्रं प्रत्यपद्यत ॥ ७४ ॥ [ युग्मम् ]
स्वामिदीक्षोत्सवेनाऽऽसीन्नारकाणामपि क्षणम् । शरदातपतप्तानामिवाऽभ्रच्छायया सुखम् ॥ ७५ ॥
ज्ञानं प्रभोर्मर्त्यक्षेत्रमनोद्रव्यप्रकाशकम् । मनःपर्यँयमुत्पेदे, दीक्षासङ्केतभागिव ॥ ७६ ॥
वार्यमाणाः सुहृद्वर्गैः, रुध्यमानाश्च बन्धुभिः । निषिध्यमाना भरतेश्वरेणाऽपि मुहुर्मुहुः ॥ ७७ ॥
स्मरन्तः स्वामिनः पूर्वप्रसादमतिशायिनम् । तत्पादपद्मविरहस्याऽसहाः षट्पदा इव ॥ ७८ ॥
हित्वा पुत्रकलत्रादि, राज्यं च तृणलीलया । या गतिः स्वामिनोऽस्माकमपि सैवेति निश्चयात् ॥ ७९ ॥
नृपाः कच्छमहाकच्छादय आददिरे मुदा । दीक्षां सहस्राश्चत्वारो, भृत्यानामेष हि क्रमः ॥ ८० ॥
[ चतुर्भिः कलापकम् ]

आदिनाथं प्रणम्याऽथ, शचीनाथादयः सुराः । एवं विरचयामासुः, रचिताञ्जलयः स्तुतिम् ॥ ८१ ॥
गुणांस्तव यथावस्थान्, वयं वक्तुमनीश्वराः । स्तुमस्तथाऽपि प्रज्ञा हि, त्वत्प्रभावाद् भृशायते ॥ ८२ ॥
त्रसस्थावरजन्तूनां, हिंसायाः परिहारतः । स्वामिन्नभयदानैकसत्रिणे भवते नमः ॥ ८३ ॥
नमस्तुभ्यं मृषावादपरित्यागेन सर्वथा । पथ्यतथ्यप्रियवचःसुधारसपयोधये ॥ ८४ ॥
भगवन्नदत्तादानप्रत्याख्यानखिलाध्वनि । प्रथमायाऽध्वनीनाय, नमस्तुभ्यं जगत्पते! ॥ ८५ ॥
अखण्डितब्रह्मचर्यमहातेजोविवस्वते । भगवन्! मन्मथध्वान्तमथनाय नमोस्तु ते ॥ ८६ ॥
सर्वमेकपदे नाथ!, पृथिव्यादिपरिग्रहम् । पलालवत् त्यक्तवते, तुभ्यं मुक्त्यात्मने नमः ॥ ८७ ॥
तुभ्यं नमः पञ्चमहाव्रतभारककुद्मते । संसारसिन्धुतरणकर्मठाय महात्मने ॥ ८८ ॥
महाव्रतानां पञ्चानामिव पञ्चाऽपि सोदराः । बिभ्रते समितीस्तुभ्यमादिनाथ! नमो नमः ॥ ८९ ॥
आत्मारामैकमनसे, वचःसंवृतिशालिने । सर्वचेष्टानिवृत्ताय, नमस्तुभ्यं त्रिगुप्तये ॥ ९० ॥
इति नाथमभिष्टुत्य, यथास्थानं ययुस्तदा । जन्माभिषेकवन्नन्दीश्वरमध्येन नाकिनः ॥ ९१ ॥
प्रणम्य नाथं भरतबाहुबल्यादयोऽपि ते । जग्मुर्निजनिजस्थानं, कथञ्चिदमरा इव ॥ ९२ ॥
अनुप्रव्रजितैः कच्छमहाकच्छादिभिर्नृपैः । अनुयातः प्रभुर्मौनी, क्ष्मां विहर्तुं प्रचक्रमे ॥ ९३ ॥
भगवान् पारणाहेऽपि, भिक्षां न प्राप कुत्रचित् । भिक्षादानानभिज्ञो हि, तदैकान्तऋजुर्जनः ॥ ९४ ॥
केऽपि वेगपराभूतोच्चैःश्रवस्कांस्तुरङ्गमान् । शौर्यनिर्जितदिग्नागानपरे नागकुञ्जरान् ॥ ९५ ॥
रूपलावण्यविजिताप्सरसः केऽपि कन्यकाः । विद्युद्विभ्रमधारीणि, केचिदाभरणानि तु ॥ ९६ ॥
नानावर्णानि सन्ध्याभ्राणीव वासांसि केचन । माल्यदामानि मन्दारदामस्पर्द्धीनि केऽपि च ॥ ९७ ॥
केचित् काञ्चनराशिं च, मेरुशृङ्गसहोदरम् । रोहणाचलचूलाभं, रत्नकूटमथाऽपरे ॥ ९८ ॥
स्वामिने ढौकयामासुर्लोका भिक्षार्थमीयुषे । राजानमेव नाथं स, जानते ते हि पूर्ववत् ॥ ९९ ॥
[ पञ्चभिः कुलकम् ]

---

१ समुत्खनितुमिच्छन् । २ इन्द्रेण । * °पर्याय° खं आ, ॥ ३ भ्रमराः । ४ भृशा भवतीति भृशायते । † °खिलेऽध्व° खंता ॥ ५ पथिकाय ।

भिक्षामलभमानोऽपि, स्वाम्यदीनमनाः सदा । विहरन् जङ्गमं तीर्थमिव पृथ्वीमपावयत् ॥ १०० ॥
सप्तधातुविनाभूतशरीर इव सुस्थितः । भगवान् क्षुत्पिपासादीनधिसेहे परीषहान् ॥ १०१ ॥
अनुयान्तः स्वामिनं ते, पोता इव समीरणम् । तथैव विहरन्ति स्म, राजानो दीक्षिताः स्वयम् ॥ १०२ ॥

अथ क्षुदादिभिः क्लान्तास्तत्त्वज्ञानविवर्जिताः । स्वबुद्ध्यनुगुणं दध्युस्ते राजन्यास्तपस्विनः ॥ १०३ ॥
किम्पाकानीव नाऽत्त्येष, फलानि मधुराण्यपि । न स्वादून्यपि पिबति, क्षाराणीव पयांसि च ॥ १०४ ॥
परिकर्मानपेक्षश्च, न स्नाति न विलिम्पति । वस्त्रालङ्कारमाल्यानि, नोपादत्ते च भारवत् ॥ १०५ ॥
आलिङ्ग्यते शैल इव, वातोद्धूताध्वधूलिभिः । नितान्त सहते मूर्ध्नि, ललाटंतपमातपम् ॥ १०६ ॥
शयनादिविहीनोऽपि, नाऽऽयासमनुगच्छति । न परिक्लिश्यते शीतोष्णाभ्यां गिरिवरेभवत् ॥ १०७ ॥
न हि क्षुधां गणयति, न जानाति तृषामपि । सवैरः क्षत्रिय इव, निद्रामपि न सेवते ॥ १०८ ॥
अस्मानुचरीभूतान्, कृतागस इवाऽधुना । न प्रीणयति दृष्ट्याऽपि, सङ्कथायास्तु का कथा ? ॥ १०९ ॥
अपि पुत्रकलत्रादिपरिग्रहपराङ्मुखः । न जानीमः किमपि यच्चित्ते चिन्तयति प्रभुः ॥ ११० ॥

अथ कच्छमहाकच्छौ, भर्तुरभ्यर्णसेवकौ । आत्मवृन्दपुरोभूतावित्यूचाते तपस्विभिः ॥ १११ ॥
क्वैष स्वामी क्षुद्विजयी ?, क्व वयं चाऽन्नकीटकाः ? । क्व वा जितपिपासोऽयं ?, क्व वयं वारिदर्दुराः ? ॥११२॥
क्व चाऽयमातपजयी ?, क्व च्छायामत्कुणा वयम् ? । क्व शीतापरिभूतोऽयं ?, क्व शीतकपयो वयम् ? ॥११३॥
क्व च निद्रादरिद्रोऽयं ?, क्व निद्राजगरा वयम् ? । क्वाऽयं नित्यमनासीनो ?, वयं क्वाऽऽसनपङ्गवः ? ॥
व्रतेऽनुगमनं भर्त्तुस्तद्स्माभिः प्रचक्रमे । उदन्वल्लङ्घनविधौ, काकैरिव गरुत्मतः ॥ ११५ ॥
किं निजान्येव राज्यानि, गृह्णीमो जीविकाकृते ? । किन्तु तानि गृहीतानि, भरतेन क्व गम्यताम् ? ।
किं वा व्रजामो भरतमेव जीवनहेतवे ? । अस्माकं स्वामिनं हित्वा, गतानां तत्र एव भो ॥ ११७ ॥
तदार्यौ ! कार्यमूढानां, किं कार्यं ? ब्रूतमद्य नः । अग्रेऽपि नित्यमासन्नौ, भावानिनौ युवां विभोः ॥११८॥
तावप्येवं बभाषाते, स्वयम्भूरमणाम्बुधेः । आसाद्यते यदि स्तावो मानोऽपि स्वामिनस्तदा ॥ ११९ ॥
अग्रेऽपि स्वामिनाऽऽदिष्टमेव नित्यमकुर्वहि । अधुना कृतमौनस्तु, नाऽऽदिशत्येष किञ्चन ॥ १२० ॥
वित्थ यूयं यथा नैव, विद्वो नाऽऽवां तथैव हि । गतिः समाना सर्वेषां तन्नाऽऽवां किमु कुर्वहे ? ॥१२१॥
सम्भूयाऽऽलोच्य सर्वेऽपि, गङ्गातीरवनानि ते । भेजुर्बुभुजिरे स्वैरं, कन्दमूलफलाद्यथ ॥ १२२ ॥
प्रावर्त्तन्त ततः कालात्, तापसा वनवासिनः । जटाधराः कन्दफलाद्याहारा इह भूतले ॥ १२३ ॥

अथ कच्छमहाकच्छतनयौ विनयान्वितौ । स्वाम्यादेशाद् दूरदेशान्तराणि गतपूर्विणौ ॥ १२४ ॥
आयान्तौ नमि-विनमिनामानौ तद्वनाध्वना । अपश्यतां स्वपितरावित्यचिन्तयतां च तौ ॥ १२५ ॥
नाथे वृषभनाथेऽपि, किमनाथाविवेदृशीम् । अवस्थां प्रतिपेदाते, पितरावावयोरिमौ ? ॥ १२६ ॥
क्व तच्चीनांशुकमिदं, किराताहं क्व वल्कलम् ? । क्व सोऽङ्गरागो वपुषि ?, मृगजः क्व पशूचितम् ? ॥१२७॥
क्व माल्यगर्भो धम्मिल्लः ?, क्व जटा वटवृक्षवत् ? । क्व गजारोहणं ? क्वेयं, पादचारः पदातिवत् ? ॥ १२८ ॥
एवं विचिन्तयन्तौ तौ, प्रणम्य पितरौ तदा । पप्रच्छतुः कच्छमहाकच्छावप्येवमूचतुः ॥ १२९ ॥
त्यक्त्वा राज्यं जगन्नाथो, भगवानृषभध्वजः । भुवं विभज्य भरतादिभ्यो दत्त्वाऽग्रहीद् व्रतम् ॥१३०॥
स्वामिना सममस्माभिरशेषै रभसावशात् । तदा तद् व्रतमारेभे, हस्तिनेवेक्षुभक्षणम् ॥ १३१ ॥
क्षुधापिपासाशीतोष्णप्रभृतिक्लेशपीडितैः । तद् व्रतं मुमुचेऽस्माभिर्न्यस्ता धूः कर्मगैरिव ॥ १३२ ॥
यद्यपि स्वामिनो गत्या, वयं गन्तुं न शक्नुमः । तथाऽपि मुक्त्वा गार्हस्थ्यं, रमामोऽत्र तपोवने ॥१३३॥

स्वामिनो भूसंविभागमावामप्यर्थयावहे । इत्युक्त्वा नमि-विनमी, स्वामिपादावुपेयतुः ॥ १३४ ॥
निःसङ्ग इत्यजानन्तौ, प्रभुं प्रतिमया स्थितम् । प्रणम्यैवं विज्ञपयाम्बभूवतुरुभावपि ॥ १३५ ॥

आवां प्रेष्य प्रेषणेन, दूरदेशान्तरं विभो ! । पुत्रेभ्यो भरतादिभ्यस्त्वया दत्ता विभज्य भूः ॥ १३६ ॥
मही गोष्पदमात्राऽपि, त्वयाऽऽवाभ्यां न किं ददे ? । इदानीमपि तद्देहि, विश्वनाथ ! प्रसादतः ॥ १३७ ॥
दोषः किमावयोः कोऽपि, देवदेवेन वीक्षितः ? । यद् दत्से नोत्तरमपि, दूरेऽन्यद् देयमस्तु तत् ॥१३८॥
प्रभुर्न किञ्चित् प्रत्यूचे, वदन्तावपि तौ तदा । निर्ममा हि न लिप्यन्ते, कस्याऽप्यैहिकचिन्तया ॥ १३९ ॥
न ब्रूते यद्यपि स्वामी, तथाऽपि गतिरेष नौ । इति निश्चित्य तौ देवं, प्रवृत्तावुपसेवितुम् ॥ १४० ॥
जलं जलाशयान्नित्यमानीय नलिनीदलैः । ववृषुः स्वामिनोऽभ्यर्णे, रजःप्रशमहेतवे ॥ १४१ ॥
तावुज्झाञ्चक्रतुर्धर्मचक्रिणः पुरतः प्रगे । पुष्पप्रकरमामोदमाद्यन्मधुकरोत्करम् ॥ १४२ ॥
कृष्टासी च सिषेवाते, स्वामिनं पारिपार्श्विकौ । अहर्निशं मेरुगिरिं, सूर्याचन्द्रमसाविव ॥ १४३ ॥
त्रिसन्ध्यं च प्रणम्यैवं, ययाचाते कृताञ्जली । आवयोर्नाऽपरः स्वामी, स्वामिन् ! राज्यप्रदो भव ॥१४४॥
अन्येद्युर्धरणो नागकुमाराणामधीश्वरः । श्राद्धः समाययौ तत्र, स्वामिपादान् विवन्दिषुः ॥ १४५ ॥
स्वामिनं सेवमानौ तौ, याचमानौ श्रियं ततः । बालाविव ऋजू नागराजः साश्चर्यमैक्षत ॥ १४६ ॥
स तौ जगाद पीयूषस्यन्दसोदरया गिरा । कौ युवां ? किं च याचेथे, दृढं विरचिताग्रहौ ? ॥ १४७ ॥
संवत्सरं जगत्स्वामी, महादानं किमीप्सितम् । प्रददावनवच्छिन्नं, तदानीं क्व गतौ युवाम् ? ॥ १४८ ॥
वर्त्तते सम्प्रति स्वामी, निर्ममो निष्परिग्रहः । रोषतोषविनिर्मुक्तो, निराकाङ्क्षो वपुष्यपि ॥ १४९ ॥
स्वामिनः सेवकः कश्चिदेषोऽपीति सगौरवम् । धरणं पन्नगाधीशं, प्रत्यूचतुरुभावपि ॥ १५० ॥
भृत्यावावामसौ भर्त्ता, क्वचिद्*प्यादिशत् स्वयम् । राज्यं विभज्य सर्वेभ्यः, स्वपुत्रेभ्यो ददावथ ॥ १५१ ॥
अपि प्रदत्तसर्वस्वो, दाताऽसौ राज्यमावयोः । अस्ति नाऽस्तीति का चिन्ता ?, कार्या सेवैव सेवकैः ॥१५२॥
याचेथां भरतं गत्वा, स्वामिवत् स्वामिभूरपि । इत्युक्तौ धरणेन्द्रेण, पुनस्तावेवमूचतुः ॥ १५३ ॥
विश्वस्वामिनमाप्याऽमुं, कुर्वः स्वाम्यन्तरं न हि । कल्पपादपमासाद्य, कः करीरं निषेवते ? ॥ १५४ ॥
आवां याचावहे नाऽन्यं, विहाय परमेश्वरम् । पयोमुचं विमुच्याऽन्यं, याचते चातकोऽपि किम् ? ॥१५५॥
स्वस्त्यस्तु भरतादिभ्यस्तव किं चिन्तयाऽऽनया ? । स्वामिनोऽस्माद् यद् भवति, तद् भवत्वपरेण किम् ? ॥
तदुक्तिमुदितोऽवादीदथेदं पन्नगेश्वरः । पातालपतिरेषोऽस्मि, स्वामिनोऽस्यैव किङ्करः ॥ १५७ ॥
महाभागौ महासत्त्वौ, स्वाम्यसावेव नाऽपरः । सेवनीय इति दृढा, प्रतिज्ञा साधु साधु वाम् ॥ १५८ ॥
भुवनस्वामिनोऽमुष्य, सेवया राज्यसम्पदः । पुमांसमुपसर्पन्ति, पाशाकृष्टा इव द्रुतम् ॥ १५९ ॥
सेवया चाऽस्य वैताढ्यगिरौ विद्याधरेन्द्रता । नितान्तसुलभैवेह, प्रालम्बफलवन्नृणाम् ॥ १६० ॥
सेवामात्रेण चाऽमुष्य, भवनाधिपतिश्रियः । अयत्नप्राप्यतां यान्ति, पादाधःस्थनिधानवत् ॥ १६१ ॥
अमुं च सेवमानानां, पुंसामुपनमत्यलम् । वशंवदा व्यन्तरेन्द्रश्रीः कार्मणवशादिव ॥ १६२ ॥
अस्यैव सेवकं ज्योतिष्पतिश्रीरपि सत्वरम् । स्वयं वृणीते सुभगं, स्वयंवरवधूरिव ॥ १६३ ॥
भवन्त्यस्यैव सेवातः, पौरन्दर्योऽपि सम्पदः । वसन्तादेव जायन्ते, विचित्राः कुसुमर्द्धयः ॥ १६४ ॥
अस्यैव सेवनादाशु, लभन्ते दुर्लभामपि । अहमिन्द्रश्रियं मुक्तेरिव यामिं कनीयसीम् ॥ १६५ ॥
अमुमेव जगन्नाथं, सेवमानः शरीरभाक् । प्राप्नोत्यपुनरावृत्ति, सदानन्दमयं पदम् ॥ १६६ ॥
इह त्रिभुवनाधीशः, सिद्धरूपः परत्र च । असाविव भवेद् देही, स्वामिनोऽस्यैव सेवया ॥ १६७ ॥
दासोऽहं स्वामिनोऽमुष्य, युवामपि च सेवकौ । तत्सेवायाः फलं विद्याधरैश्वर्यं ददामि वाम् ॥ १६८ ॥
स्वामिसेवाफलमेवैतद्, बुध्येथां हन्त ! माऽन्यथा । उद्योतोऽरुणजन्माऽपि, सूर्यजन्मैव यद् भुवि ॥ १६९ ॥
सम्बोध्यैवं ददौ गौरीप्रज्ञप्तीप्रमुखां तयोः । अष्टचत्वारिंशद्विद्यासहस्रीं पाठसिद्धिदाम् ॥ १७० ॥

* °दादिशवान्° सं १, °दृप्यादिदेश च खं, भा ॥ १ भगिनीम् ।

आदिदेश च वैताढ्ये, गत्वा श्रेणिद्वये युवाम् । नगराणि परिष्ठाप्य, कुर्वाथां राज्यमक्षयम् ॥ १७१ ॥
नत्वाऽर्हन्तं तौ विमानं, पुष्पकाख्यं विकृत्य च । आरुह्य च प्रचलितौ, पन्नगस्वामिना समम् ॥१७२॥
स्वामिसेवातरुफलभूतां तां सम्पदं नवाम् । गत्वा पित्रोः कच्छमहाकच्छयोस्तावशंसताम् ॥ १७३ ॥
ज्ञापयामासतुः स्वर्द्धिं, गत्वाऽयोध्यापतेश्च तौ । मानिनां मानसिद्धिर्हि, सफला स्थानदर्शिता ॥ १७४ ॥
तत्र स्वजनमादाय, सर्वं परिजनं च तौ । विमानवरमारोह्य, प्रति वैताढ्यमीयतुः ॥ १७५ ॥
प्रान्तयोर्लवणाम्भोधिवीचीनिचयचुम्बितम् । पूर्वापरदिशोरन्तर्मानदण्डमिव स्थितम् ॥ १७६ ॥
आघाटभूतं भरतदक्षिणोत्तरभागयोः । पञ्चाशतं योजनानि, दक्षिणोत्तरयोः पृथुम् ॥ १७७ ॥
षड् योजनानि सक्रोशान्यवगाढं महीतले । उत्सेधं धारयन्तं च, पञ्चविंशतियोजनीम् ॥ १७८ ॥
प्रसारिताभ्यां बाहुभ्यामिव दूराद् हिमाद्रिणा । गङ्गासिन्धुस्रवन्तीभ्यां, समाश्लिष्टं समन्ततः ॥१७९॥
भरतार्धश्रियो लीलाविश्रामसदने इव । खण्डप्रपाता-तमिस्राऽभिधाने दधतं गुहे ॥ १८० ॥
सिद्धायतनकूटेन, शाश्वतप्रतिमाजुषा । बिभ्राणमद्भुतां शोभां, सुमेरुमिव चूलया ॥ १८१ ॥
नानारत्नमयान्युच्चैर्लीलास्थानानि नाकिनाम् । नवग्रैवेयकाणीव, नवकूटानि बिभ्रतम् ॥ १८२ ॥
ऊर्ध्वं योजनविंशत्या, दक्षिणोत्तरपार्श्वयोः । दधानं व्यन्तरावासश्रेण्यौ निवसने इव ॥ १८३ ॥
आमूलचूलिकं चारुकलधौतशिलामयम् । पृथिव्यां पादकटकमिवैकं विच्युतं दिवः ॥ १८४ ॥
मरुदन्दोलितोद्दामशाखिशाखाभुजैर्मुहुः । आह्वयन्तमिवाऽऽरात् तौ, वैताढ्यगिरिमापतुः ॥ १८५ ॥

[ दशभिः कुलकम् ]

क्ष्मातलाद् दशयोजन्या, उपरिष्टान्नमिर्नृपः । तत्राऽद्रौ दक्षिणश्रेण्यां, चक्रे पञ्चाशतं पुरीः ॥ १८६ ॥
आकिन्नरनरगीतं, बहुकेतुपुरं ततः । पुण्डरीकं हरिकेतु, सेतुकेतुपुरं तथा ॥ १८७ ॥
सर्पारिकेतुनगरं, श्रीबहुश्रीगृहं तथा । लोहार्गला-ऽरिञ्जये च, स्वर्गलीलपुरं तथा ॥ १८८ ॥
वज्रार्गलपुरं वज्रविमोकनगरं तथा । तथा महीसार-पुरञ्जये सुकृतमुख्यपि ॥ १८९ ॥
चतुर्मुखी बहुमुखी, रता च विरताऽपि च । आखण्डलपुरं चाऽपि, विलासयोनिपत्तनम् १९०
अपराजितं काञ्ची-दामाख्ये सुविनयं नभः । क्षेमङ्करसह-चिह्नपुरं कुसुमपुर्यपि ॥ १९१ ॥
सञ्जयन्ती शक्रपुरं, जयन्ती वैजयन्त्यपि । विजया क्षेमङ्करं च, चन्द्रभासपुरं तथा ॥१९२॥
रविभासपुरं सप्तभूतलावासमेव च । सुविचित्रं महाग्रं च, चित्रकूटं त्रिकूटकम् ॥ १९३ ॥
वैश्रवणकूट-शशिपुरे रविपुरं तथा । विमुखी-वाहिन्यौ सुमुखी नित्योद्योतिनी तथा ॥१९४॥
श्रीरथनूपुरचक्रवालं तु नगरोत्तमम् । एषां पुराणां मध्यस्थमध्युवास स्वयं नमिः ॥ १९५ ॥
तथैव चोत्तरश्रेण्यां, विनमिः पर्यमन्त्रयन् । षष्टिं पुराणि मघोऽपि, नागराजस्य शासनात् ॥ १९६ ॥
पुर्यर्जुनी वारुणी च, वैरिसंहारिणी तथा । कैलासवारुणी विद्युद्दीप्तं किलिकिलं तथा ॥१९७॥
चारुचूडामणिश्चैव, चन्द्रभाभूषणं तथा । वंशवत् कुसुमचूलं, हंसगर्भं च मेघकम् ॥ १९८ ॥
शङ्करं लक्ष्मिहर्म्यं च, चामरं विमलं तथा । असुमत्कृतं च शिवमन्दिरं वसुमत्यपि ॥१९९॥
सर्वसिद्धस्तुतं चैव, सर्वशत्रुञ्जयं तथा । केतुमालाङ्कनगरमिन्द्रकान्ताभिधं ततः ॥ २०० ॥
महानन्दनाशोकं च, वीतशोकं विशोककम् । सुखालोका-ऽलकतिलक-नभस्तिलकान्यपि २०१
मन्दिरं कुमुदकुन्दं, ततो गगनवल्लभम् । युवतीतिलकसंज्ञमवनीतिलकं ततः ॥ २०२ ॥
सगन्धर्वं मुक्तहारं, ततोऽनिमिषविष्टपम् । अग्निज्वाला गुरुज्वाला, श्रीनिकेतपुरं तथा ॥ २०३ ॥
ततो जयश्रीनिवासं, रत्नकुलिशपत्तनम् । वसिष्ठाश्रयं द्रविणजयं चाऽथ सभद्रकम् ॥ २०४ ॥
भद्राश्रयपुरं तस्मात्, फेनशिखरमप्यथ । गोक्षीरवरशिखराभिधानं तदनन्तरम् ॥ २०५ ॥

**वैर्यक्षो[50]भशिखरकं, गिरि[51]शिखरकं ततः । धरणी[52]वारणीसंज्ञं, सु[53]दर्शनपुरं ततः ॥ २०६ ॥**
**[54]दुर्गं [55]दुर्धर-[56]माहेन्द्रे, [57]विजयं च सु[58]गन्धिनी । सु[59]रत्ननागरपुरं, ततो र[60]त्नपुराभिधम् ॥ २०७ ॥**
एषां प्रधानभूतं तु, पुरं गगनवल्लभम् । विनमिः स्वयमध्यष्ठाद्, धरणेन्द्रमधिष्ठितः ॥ २०८ ॥
ते च विद्याधरश्रेण्यौ, शुशुभाते महर्द्धिके । ऊर्ध्वस्थव्यन्तरश्रेण्याविवाऽधःप्रतिबिम्बिते ॥ २०९ ॥
ग्रामाननेकशः कृत्वा, तौ शाखानगराणि च । स्थापयामासतुः स्थानौचित्याज्जनपदानपि ॥ २१० ॥
यस्माद् यस्माज्जनपदान्नीत्वा तत्राऽऽहिता नराः । तत्संज्ञयैव तत्राऽपि, ताभ्यां जनपदाः कृताः ॥ २११ ॥
तेष्वथो नमि-विनमी, पुरेष्वधिसभं विभुम् । स्थापयामासतुर्नाभिनन्दनं मनसीव तौ ॥ २१२ ॥
मा विद्यादुर्मदा विद्याधराः कार्षुः स्म दुर्नयम् । धरणेन्द्रस्ततस्तेषां, मर्यादामेवमादिशत् ॥ २१३ ॥
जिनानां जिनचैत्यानां, तथा चरमवर्ष्मणाम् । प्रतिमाप्रतिपन्नानां, सर्वेषां चाऽनगारिणाम् ॥ २१४ ॥
पराभवं लङ्घनं च, ये करिष्यन्ति दुर्मदाः । विद्यास्त्यक्ष्यन्ति तान् सद्यः, कृतालस्यानिव श्रियः २१५॥ [युग्मम्]
सात्मस्त्रीकं हनिष्यन्ति, ये नरं येऽपि च स्त्रियम् । रमयिष्यन्त्यनिच्छन्तीं, विद्यास्त्यक्ष्यन्ति तान् क्षणात्॥२१६
उच्चैरुदीर्य मर्यादामेवमाचन्द्रकालिकीम् । अलीलिखदहिस्वामी, रत्नभित्तिप्रशस्तिषु ॥ २१७ ॥
विद्याधराधिराजत्वे, सप्रसादं निवेश्य तौ । विरचय्य व्यवस्थां च, धरणेन्द्रस्तिरोदधे ॥ २१८ ॥
**गौरीणां नाम्ना गौरेया, मनूनां मनुपूर्वकाः। गान्धारीणां तु गान्धारा, मानवीनां तु मानवाः२१९**
**कैशिकीनां तु विद्यानां, कैशिकीपूर्वका मताः। विद्यानां भूमितुण्डानां, कीर्तिता भूमितुण्डकाः २२०**
**विद्यानां मूलवीर्याणां, विश्रुता मूलवीर्यकाः। शङ्कुकानां शङ्कुकास्तु, पाण्डुकीनां तु पाण्डुकाः२२१**
**कालीनां कालिकेयास्तु,श्वपाकीनां श्वपाककाः। मातङ्गीनां तु मातङ्गाः,पार्वतीनां तु पार्वताः२२२**
**वंशालयानां विद्यानां, ख्याता वंशालया इति। विद्यानां पांसुमूलानां, प्रथिताः पांसुमूलकाः २२३**
**विद्यानां वृक्षमूलानां,विख्याता वृक्षमूलकाः। स्वस्वविद्याख्यया ख्याता, निकायाः षोडशाऽभवन्॥२२४॥**
एवं विद्याधराणां तु, निकाया नमिभूभुजा । आदीयन्त विभज्याऽष्टावष्टौ विनमिना पुनः ॥ २२५ ॥
स्वके स्वके निकाये च, स्वकाय इव भक्तितः । स्थापयाञ्चक्रिरे ताभ्यां, विद्याधिपतिदेवताः ॥ २२६ ॥
तौ नित्यमृषभस्वामिमूर्तिपूजाकृतक्षणौ । धर्माबाधया भोगान्, बुभुजाते सुराविव ॥ २२७ ॥
द्वीपान्तजगतीजालकटकेषु कदाऽपि तौ । रेमाते सह कान्ताभिः, शक्रेशानाविवाऽपरौ ॥ २२८ ॥
सुमेरुशैलोद्यानेषु, कदाचिन्नन्दनादिषु । सदानन्दौ विजह्राते, स्वैरिणौ तौ समीरवत् ॥ २२९ ॥
नन्दीश्वरादितीर्थेषु, जग्मतुस्तौ कदाचन । शाश्वतप्रतिमार्चायै, श्राद्धश्रीणां फलं ह्यदः ॥ २३० ॥
तौ कदाचिद् विदेहादिक्षेत्रेषु श्रीमदर्हताम् । गत्वा समवसरणे, पपतुर्वाक्सुधारसम् ॥ २३१ ॥
चारणश्रमणेभ्यश्च, कदाचिद् धर्मदेशनाम् । तौ शुश्रुवतुरुत्कर्णौ, गीतं युवमृगाविव ॥ २३२ ॥
सम्यक्त्ववन्तावक्षीणकोशौ विद्याधरीवृतौ । त्रिवर्गाबाधया राज्यं, यथावत् तौ प्रचक्रतुः ॥ २३३ ॥
ते तु कच्छमहाकच्छादयो राजन्यतापसाः । गङ्गाया दक्षिणे कूले, मृगा इव वनेचराः ॥ २३४ ॥
वल्कलाच्छादनधराः, पादपा इव जङ्गमाः । आहारमुद्वान्तमिवाऽस्पृशन्तो गृहमेधिनाम् ॥ २३५ ॥
चतुर्थषष्ठादितपःपरिशोषितधातुकम् । धारयन्तः कृशतरं, रिक्तभस्त्रोपमं वपुः ॥ २३६ ॥
भुञ्जानाः पारणाहेऽपि, शीर्णपर्णफलादिकम् । हृदये भगवत्पादान्, ध्यायन्तोऽस्थुरनन्यगाः ॥ २३७ ॥
आर्यानार्येषु मौनेन, विहरन् भगवानपि । संवत्सरं निराहारश्चिन्तयामासिवानिदम् ॥ २३८ ॥
प्रदीपा इव तैलेन, पादपा इव वारिणा । आहारेणैव वर्त्तन्ते, शरीराणि शरीरिणाम् ॥ २३९ ॥
द्विचत्वारिंशता भिक्षादोषैर्भृशमदूषितः । स तु वृत्त्या माधुकर्या, काले ग्राह्योऽनगारिणा ॥ २४० ॥
अद्याऽपि यदि वाऽऽहारमतिक्रान्तदिनेष्विव । न गृह्णाम्यभिग्रहाय, किन्तूत्तिष्ठे पुनर्यदि ॥ २४१ ॥

अमी सहस्राश्चत्वार, इवाऽभोजनपीडिताः । तदा भङ्गं ग्रहीष्यन्ति, भाविनो मुनयोऽपरे ॥ २४२ ॥
स्वामी मनसिकृत्यैवं, भिक्षार्थं चलितस्ततः । पुरं गजपुरं प्राप, पुरमण्डलमण्डनम् ॥ २४३ ॥
तस्मिन् पुरे बाहुबलिसूनोः सोमप्रभस्य तु । राज्ञः कुमारेण तदा, स्वप्ने श्रेयांसभूभुजा ॥ २४४ ॥
अदृश्यत स्वर्णगिरिः, परितः श्यामलो मया । अभिषिच्य पयस्कुम्भैर्विहितोऽधिकमुज्ज्वलः ॥ २४५ ॥ [युग्मम्]
सुबुद्धिश्रेष्ठिनाऽप्यैक्षि, गोसहस्रं रवेश्च्युतम् । श्रेयांसेनाऽऽहितं तत्र, ततोऽर्कोऽप्यतिभासुरः ॥ २४६ ॥
अदर्शि सोमयशसा, राज्ञैको बहुभिः परैः । रुद्धः समन्ताच्छ्रेयांससाहाय्याज्जयमीयिवान् ॥ २४७ ॥
त्रयस्ते सदसि स्वप्नानन्योऽन्यस्य न्यवीविदन्* । तन्निर्णयमजानन्तः, स्वं स्वं स्थानं पुनर्ययुः ॥ २४८ ॥
प्रादुर्भावयितुमिव, तदा तत्स्वप्ननिर्णयम् । भिक्षार्थं प्राविशत् स्वामी, नगरं हस्तिनापुरम् ॥ २४९ ॥
संवत्सरं निराहारोऽप्यायान् वृषभलीलया । ददृशे वृषभस्वामी, नागरैर्जातसम्मदैः ॥ २५० ॥
उत्थायोत्थाय धावित्वा, धावित्वा च ससम्भ्रमम् । पौरैर्देशान्तरायातबन्धुवत् स्वाम्यवेष्ट्यत ॥ २५१ ॥
कोऽप्युवाचैहि भगवन् !, गृहाण्यनुगृहाण नः । वसन्तोत्सववद् देव !, चिरादसि निरीक्षितः ॥ २५२ ॥
कोऽप्यवादीदिदं सज्जं, स्नानीयं वसनं जलम् । तैलं पिष्टातकश्चेति, स्नाहि स्वामिन् ! प्रसीद नः ॥ २५३ ॥
कोऽप्यूचे स्वोपयोगेन, स्वामिन् ! मम कृतार्थय । जात्यचन्दनकर्पूरकस्तूरीयक्षकर्दमान् ॥ २५४ ॥
कोऽप्युवाच जगद्रत्न !, रत्नालङ्करणानि नः । स्वाङ्गाधिरोपणात् स्वामिन्नलङ्कुरु दयां कुरु ॥ २५५ ॥
एवं व्यज्ञपयत् कोऽपि, गृहे समुपविश्य मे । स्वामिन्नङ्गानुकूलानि, दुकूलानि पवित्रय ॥ २५६ ॥
कश्चिदप्यब्रवीदेवं, देव ! देवाङ्गनोपमाम् । प्रभो ! गृहाण नः कन्यां, धन्याः स्मस्त्वत्समागमात् ॥ २५७ ॥
कोऽप्यूचे पादचारेण, क्रीडयाऽपि कृतेन किम् ? । इममारोह शैलाभं, कुञ्जरं राजकुञ्जर ! ॥ २५८ ॥
कोऽप्यजल्पन्मम हयान्, गृहाणा†ऽर्कहयोपमान् । किमातिथेयाग्रहणादयोग्यान् विदधासि नः ? ॥ २५९ ॥
कोऽप्युवाचाऽऽदत्स्व रथान्, सनाथान् जात्यवाजिभिः । किमेभिर्ननु कर्त्तव्यं, पादचारिणि भर्त्तरि ? ॥ २६० ॥
कोऽप्यूचेऽमूनि पक्वानि, सहकारफलानि नः । उपादत्स्व प्रभो ! माऽवमंस्थाः प्रणयिनं जनम् ॥ २६१ ॥
कोऽप्यभाषिष्ट ताम्बूलवल्लीपत्राण्यमूनि मे । क्रमुकाण्यप्युपादत्स्व, प्रसीदैकान्तवत्सल ! ॥ २६२ ॥
बभाषे कश्चिदप्येवमपराद्धं नु किं मया ? । यदशृण्वन्निव स्वामिन्नुत्तरं न प्रयच्छसि ? ॥ २६३ ॥
इत्यर्थ्यमानोऽकल्प्यत्वादगृह्णन् किमपि प्रभुः । गेहं गेहमुपेयाय, ऋक्षमृक्षमिवोडुपः ॥ २६४ ॥
प्रातःकाले शकुन्तीनामिव कोलाहलं तदा । पौराणां परिशुश्राव, श्रेयांसः स्वाश्रयस्थितः ॥ २६५ ॥
किमेतदिति तेनाऽनुयुक्तो वेत्रधराग्रणीः । इति विज्ञपयामास, पुरोभूय कृताञ्जलिः ॥ २६६ ॥
लुठद्भिः पादपीठाग्रे, किरीटस्पृष्टभूतलम् । इन्द्रैर्नरेन्द्रैरिव यः, सेव्यते दृढभक्तिभिः ॥ २६७ ॥
जीवनोपायकर्माणि, लोकेष्वेकानुकम्पया । दर्शयाञ्चक्रिरे येन, पदार्था इव भानुना ॥ २६८ ॥
विभज्य भरतादीनां, युष्माकं चाऽपि भूरियम् । ददे येन स्वशेषेव, तदा दीक्षां जिघृक्षता ॥ २६९ ॥
यः स्वयं त्वाददे सर्वसावद्यपरिहारतः । कर्माष्टकमहापङ्कशोषग्रीष्मातपं तपः ॥ २७० ॥
व्रतात् प्रभृति नाथोऽसौ, निःसङ्गो ममतोज्झितः । निराहारो विहरते, पादाभ्यां पावयन् महीम् ॥ २७१ ॥
सूर्यातपान्नोद्विजते, न च्छायामनुमोदते । तुल्य एवोभयत्राऽपि, स्वाम्ययं सानुमानिव ॥ २७२ ॥
न विरज्यत्यसौ शीतादशीते च न रज्यति । वज्रकाय इव स्वामी, यत्र तत्राऽवतिष्ठते ॥ २७३ ॥
युगमात्रं दत्तदृष्टिरमृद्नन्‡ कीटिकामपि । पादचारं करोत्येष, संसारकरिकेसरी ॥ २७४ ॥
प्रत्यक्षीकारनिर्देश्या, जगत्त्रितयदेवता । इह भाग्यवशादायात्ययं ते प्रपितामहः ॥ २७५ ॥
गवामिवाऽनुगोपालं, धावतां स्वामिनं प्रभुम् । असौ सकलपौराणां, कलः कलकलोऽधुना ॥ २७६ ॥

* न्यवीवदन् खं, आ ॥ † गृहाणानु° सं १, २॥ ‡ रमृद्नन्° सं १, ख ॥

दृष्ट्वा स्वामिनमायान्तं, युवराजोऽपि तत्क्षणम् । अधावत् पादचारेण, पत्तीनप्यतिलङ्घयन् ॥ २७७ ॥
छत्रोपानहमुत्सृज्य, युवराजेऽभिधाविनि । अच्छत्रोपानहा पर्षत्, तच्छायेवाऽन्वधावत ॥ २७८ ॥
सम्भ्रमादुल्ललन् लोलकुण्डलो युवराड् बभौ । स्वामिनोऽग्रे पुनर्बाललीलामाकलयन्निव ॥ २७९ ॥
गृहाङ्गणजुषो भर्त्तुर्लुठित्वा पादपङ्कजे । श्रेयांसोऽमार्जयत् केशैर्भ्रमरभ्रमकारिभिः ॥ २८० ॥
स उत्थाय जगद्भर्त्तुर्विधाय त्रिः प्रदक्षिणाम् । ननाम पादौ हर्षाश्रुवारिभिः क्षालयन्निव ॥ २८१ ॥
स ऊर्द्ध्वीभूय पुरतः, स्वामिनो मुखपङ्कजम् । ईक्षाञ्चक्रे मुदा चन्द्रं, चकोर इव पार्वणम् ॥ २८२ ॥
ईदृशं क्व मया दृष्टं, लिङ्गमित्यभिचिन्तयन् । विवेकशाखिनो बीजं, जातिस्मरणमाप सः ॥ २८३ ॥
विवेद चैवं यत् पूर्वविदेहे चक्रवर्त्यभूत् । भगवान् वज्रनाभोऽयं, जातोऽहं चाऽस्य सारथिः ॥ २८४ ॥
तस्मिन्नेव भवे भर्त्तुर्वज्रसेनाभिधः पिता । ईदृशं तीर्थकृल्लिङ्गं, धारयन्नीक्षितो मया ॥ २८५ ॥
स्वामिनो वज्रसेनस्य, पादान्ते समुँपाददे[*] । वज्रनाभः परिव्रज्यामहमप्यस्य पृष्ठतः ॥ २८६ ॥
अर्हतो वज्रसेनस्य, मुखादश्रौषमित्यहम् । भरते वज्रनाभोऽसौ, भावी प्रथमतीर्थकृत् ॥ २८७ ॥
स्वयम्प्रभादींश्च भवान्, पर्यटममुना सह । अधुना वर्त्तते स्वामी, ममैष प्रपितामहः ॥ २८८ ॥
दिष्ट्या दृष्टो मया नाथः, समग्रजगतामपि । अनुग्रहीतुं मामेष, साक्षान्मोक्ष इवाऽऽगतः ॥ २८९ ॥
अत्रान्तरे कुमारस्य, प्राभृते केनचिन्मुदा । नवेक्षुरससम्पूर्णा, ढौकयाञ्चक्रिरे घटाः ॥ २९० ॥
ततो विज्ञातनिर्दोषभिक्षादानविधिः स तु । गृह्यतां कल्पनीयोऽयं, रस इत्यवदद् विभुम् ॥ २९१ ॥
प्रभुरप्यञ्जलीकृत्य, पाणिपात्रमधारयत् । उत्क्षिप्योत्क्षिप्य सोऽपीक्षुरसकुम्भानलोठयत् ॥ २९२ ॥
भूयानपि रसः पाणिपात्रे भगवतो ममौ । श्रेयांसस्य तु हृदये, ममुर्न हि मुदस्तदा ॥ २९३ ॥
स्त्यानो नु स्तम्भितो न्वासीद्, व्योम्नि लग्नशिखो रसः। अञ्जलौ स्वामिनोऽचिन्त्यप्रभावाः प्रभवः खलु ॥२९४॥
ततो भगवता तेन, रसेनाऽकारि पारणम् । सुरासुरनृणां नेत्रैः, पुनस्तद्दर्शनामृतैः ॥ २९५ ॥
दिवि दुन्दुभयो नेदुः, प्रतिनादोन्मदिष्णवः । श्रेयांसश्रेयसां ख्यातिकरा वैतालिका इव ॥ २९६ ॥
रत्नवृष्टिरभूच्छ्रेयांसौकसि त्रिदिवौकसाम् । सममानन्दसम्भूतजननेत्राश्रुवृष्टिभिः ॥ २९७ ॥
दिवो देवाः पञ्चवर्णपुष्पवृष्टिं वितेनिरे । पृथ्वीं पूजयितुमिव, स्वामिपादपवित्रिताम् ॥ २९८ ॥
सर्वामरद्रुकुसुमनिःस्यन्दैरिव सञ्चितैः । चक्रुर्गन्धाम्बुभिर्वृष्टिं, त्रिविष्टपसदस्तदा ॥ २९९ ॥
विदधानो दिवं दीव्यद्विचित्राभ्रमयीमिव । चेलोत्क्षेपः सुरनरैश्चक्रे चामरसोदरः ॥ ३०० ॥
[3]राधशुक्लतृतीयायां, दानमासीत् तदक्षयम् । पर्वाक्षयतृतीयेति, ततोऽद्यापि प्रवर्तते ॥ ३०१ ॥
श्रेयांसोपज्ञमवनौ, दानधर्मः प्रवृत्तवान् । स्वाम्युपज्ञमिवाऽशेषव्यवहारनयक्रमः ॥ ३०२ ॥
स्वामिपारणकाद् देवसम्पाताच्चाऽथ विस्मिताः । राजानो नागराश्चान्येऽप्येयुः श्रेयांसवेश्मनि ॥ ३०३ ॥
ते च कच्छमहाकच्छादयः क्षत्रियतापसाः । आजग्मुरुद्दाममुदः, स्वामिपारणवार्त्तया ॥ ३०४ ॥
राजानो नागराश्चाऽन्ये, जना जानपदा अपि । पुलकोत्फुल्लवपुषः, श्रेयांसमिदमूचिरे ॥ ३०५ ॥
भो भोः कुमार! धन्योऽसि, नृणामसि शिरोमणिः । यदिक्षुरस आहारः, स्वामिना ग्राहितस्त्वया ॥३०६॥
प्रदीयमानमस्माभिः, सर्वस्वमपि नाऽऽत्तवान् । नाऽमन्यत तृणायाऽपि, प्रसन्नोऽस्मासु न प्रभुः ॥ ३०७ ॥
संवत्सरमटन् स्वामी, ग्रामाकरपुराटवीः । कस्याऽप्यादत्त नाऽऽतिथ्यं, धिगस्मान् भक्तमानिनः ॥ ३०८ ॥
दूरेऽस्तु वस्तुग्रहणं, दूरे वेश्मसु विश्रमः । अद्य यावन्न वाचाऽपि, स्वामी नः समभावयत् ॥ ३०९ ॥

---

* समुपात्तवान् सं १, ख ॥ १ श्रेयांसकल्याणानाम् । २ बन्दिनः । ३ वैशाखशुक्लतृतीयायाम् । ४ श्रेयांसोपज्ञ प्रथमं श्रेयांसेन प्रकटीकृतो दानधर्मः प्रवृत्तवान् । ५ स्वाम्युपज्ञं प्रथमं ऋषभस्वामिना प्रकटीकृतोऽशेषव्यवहारनयक्रमः प्रवृत्तवान् । † मानवा° खता ॥

पुत्रवत् त्रातपूर्वी नः, पूर्वलक्षाण्यनेकशः । असंस्तव इवेदानीं, प्रभुरस्मासु वर्तते ॥ ३१० ॥
श्रेयांसस्तानुवाचैवं, किमेवमभिधीयते ? । न ह्ययं पूर्ववत् स्वामी, परिग्रहपरो नृपः ॥ ३११ ॥
इदानीं वर्तते भर्त्ता, भवावर्त्तान्निवर्तितुम् । कृतनिःशेषसावद्यव्यापारविरतिर्यतिः ॥ ३१२ ॥
स्नानाङ्गरागनेपथ्यवस्त्राणि स्वीकरोति सः । यो भोगेच्छुः स्वामिनस्तु, तद्विरक्तस्य किं हि तैः ? ॥ ३१३ ॥
कन्यकाः स हि गृह्णाति, यः कामविवशो जनः । स्वामिनो जितकामस्य, कामिन्यः काममश्मवत् ॥ ३१४ ॥
हस्त्यश्वादि स गृह्णाति, यो महीराज्यमिच्छति । भर्त्तुः संयमसाम्राज्यभाजस्तद्दग्धवस्त्रवत् ॥ ३१५ ॥
फलादिकं स गृह्णाति, सजीवं यो हि हिंसकः । स्वामी त्वखिलजन्तूनामसौ जीवाभयप्रदः ॥ ३१६ ॥
एषणीयं कल्पनीयं, प्रासुकं च जगत्पतिः । आदत्तेऽन्नादि तन्मुग्धा, भवन्तो न हि जानते ॥ ३१७ ॥
ऊचिरे युवराजं ते, स्वामिना ज्ञापितं पुरा । यत् किञ्चिदपि शिल्पादि, तन्मात्रं जानते जनाः ॥ ३१८ ॥
न ज्ञापितमिदं भर्त्रा, न जानीमस्ततो वयम् । त्वया पुनः कुतो ज्ञातमिति शंसितुमर्हसि ॥ ३१९ ॥
व्याजहार कुमारोऽपि, भगवद्दर्शनान्मम । जातिस्मरणमुत्पन्नं, धीरिव ग्रन्थदर्शनात् ॥ ३२० ॥
अमुना स्वामिना सार्द्धमष्टौ जन्मान्तराण्यहम् । भृत्यो ग्रामान्तराणीव, पर्यटं स्वर्गमर्त्ययोः ॥ ३२१ ॥
इतो भवात् तृतीयस्मिन्नतिक्रान्तभवे प्रभोः । पिताऽभवद् वज्रसेनो, विदेहभुवि तीर्थकृत् ॥ ३२२ ॥
तदन्तिके प्रव्रजितः, स्वामी पश्चादहं पुनः । तज्जन्मस्मरणादेतदज्ञायि सकलं मया ॥ ३२३ ॥
तथा मे तातपादानां, सुबुद्धिश्रेष्ठिनोऽपि च । त्रयाणामपि स्वप्नानां, प्रत्यक्षमधुना फलम् ॥ ३२४ ॥
श्यामो मेरुर्मया दृष्टः, पयोभिः क्षालितश्च यत् । तपःक्षामः स हि स्वामीक्षुरसैः पारणादभात् ॥ ३२५ ॥
युध्यमानोऽरिभिर्यस्तु, राज्ञा दृष्टः प्रभुर्हि सः । मत्पारणकसान्निध्यात्, पराजिग्ये परीषहान् ॥ ३२६ ॥
सुबुद्धिश्रेष्ठिना यच्च, दृष्टमादित्यमण्डलात् । गोसहस्रं च्युतं न्यस्तं, मयाऽथाऽर्कोऽधिकं बभौ ॥ ३२७ ॥
आदित्यो भगवानेष, गोसहस्रं तु केवलम् । तद् भ्रष्टं पारणेनाऽद्य, मयाऽयोजि बभौ च सः ॥ ३२८ ॥
एतच्छ्रुत्वा च ते सर्वे, श्रेयांसं साधु साध्विति । भाषमाणाः प्रमुदिताः, स्थानं निजनिजं ययुः ॥ ३२९ ॥
कृतपारणकः स्वामी, श्रेयांससदनात् ततः । जगामाऽन्यत्र नैकत्र, तिष्ठेच्छद्मस्थतीर्थकृत् ॥ ३३० ॥
भगवत्पारणस्थानातिक्रमं कोऽपि मा व्यधात् । इति रत्नमयं तत्र, श्रेयांसः पीठमादधे ॥ ३३१ ॥
त्रिसन्ध्यमपि तद् रत्नपीठं भक्तिभरानतः । श्रेयांसः पूजयामास, साक्षात् पादाविव प्रभोः ॥ ३३२ ॥
किमेतदिति लोकेन, पृष्टः सोमप्रभात्मजः । आदिकृन्मण्डलमिदमिति तं शंसति स्म तत् ॥ ३३३ ॥
यत्र यत्र प्रभुर्भिक्षामग्रहीत् तत्र तत्र च । पीठं लोकोऽकृताऽऽदित्यपीठं तच्च क्रमादभूत् ॥ ३३४ ॥
स्वामी सम्प्राप सायाह्ने, निकुञ्जमिव कुञ्जरः । बहलीमण्डले बाहुबलेस्तक्षशिलापुरीम् ॥ ३३५ ॥
तस्याश्च बहिरुद्याने, तस्थौ प्रतिमया प्रभुः । गत्वा च बाहुबलये, तदायुक्तैर्न्यवेद्यत ॥ ३३६ ॥
अथाऽऽदिक्षत् पुरारक्षं, क्ष्मापतिस्तत्क्षणादपि । विचित्रं हट्टशोभादि, नगरे क्रियतामिति ॥ ३३७ ॥
पदे पदेऽभवद् रम्भास्तम्भतोरणमालिका । लम्बमानमहालुम्बिचुम्बिताध्वन्यमौलिका ॥ ३३८ ॥
मञ्चाः प्रतिपथं चासन्, रत्नभाजनभासुराः । विमानानीव भगवद्दर्शनायातनाकिनाम् ॥ ३३९ ॥
अनिलान्दोलितोद्दामपताकामालिकाच्छलात् । पूः* सहस्रभुजीभूय, ननर्तेव मुदा तदा ॥ ३४० ॥
नव्यकुङ्कुमपानीयच्छटाभिरभितोऽप्यभूत् । सद्यो रचितमङ्गल्याङ्गरागेव वसुन्धरा ॥ ३४१ ॥
भगवद्दर्शनोत्कण्ठारजनीजानिसङ्गमात् । पुरं तदानीमुन्निद्रमभूत् कुमुदषण्डवत् ॥ ३४२ ॥
प्रातः स्वं पावयिष्यामि, लोकं च स्वामिदर्शनात् । इतीच्छतो बाहुबलेः, साऽभून्मासोपमा निशा ॥ ३४३ ॥
तस्यामीषद्विभातायां, विभावर्यां जगद्विभुः । प्रतिमां पारयित्वाऽगात्, क्वचिदन्यत्र वायुवत् ॥ ३४४ ॥

---

१ रक्षितपूर्वी । २ अपरिचित इव । ३ संसाररूपजलावर्तात् । ४ पाषाणवत् । ५ बहलीदेशे । * भूः सह° सं १॥ ६ चन्द्रः ।

प्रातश्च बद्धमुकुटैर्महद्भिर्मण्डलेश्वरैः । भूयिष्ठैरिव मार्तण्डैः, परितः परिवारितः ॥ ३४५ ॥
उपायानामिवाऽगारैरर्थशास्त्रैरिवाऽङ्गिभिः । शुक्राद्यैरिव भूयिष्ठैर्वरिष्ठैर्मन्त्रिभिर्वृतः ॥ ३४६ ॥
जगल्लङ्घनजङ्घालैर्लक्षसङ्ख्यैस्तुरङ्गमैः । गूढपक्षैः पक्षिराजैरिव विष्वग् विराजितः ॥ ३४७ ॥
क्षरन्मदजलासारशमितक्षितिरेणुभिः । उत्तुङ्गैः शोभितो नागैर्नगैरिव सनिर्झरैः ॥ ३४८ ॥
वसन्तश्रीप्रभृत्यन्तःपुरस्त्रीभिः सहस्रशः । पातालकन्याभिरिवाऽसूर्यम्पश्याभिरावृतः ॥ ३४९ ॥
सचामराभ्यां च वारस्त्रीभ्यां सेवितपार्श्वकः । सराजहंसाभ्यां गङ्गायमुनाभ्यां प्रयागवत् ॥ ३५० ॥
धवलेनाऽऽतपत्रेणोपरिस्थेनाऽतिहारिणा । राकानिशीथशशिना, सानुमानिव शोभितः ॥ ३५१ ॥
सुवर्णदण्डहस्तेन, प्रतीहारेण चाऽग्रतः । शोध्यमानपथो देवनन्दिना देवराडिव ॥ ३५२ ॥
अन्वीयमानोऽश्वारूढैः, रत्नाभरणभूषितैः । पौरैरिभ्यैरसङ्ख्यातैः, श्रीदेव्या इव पुत्रकैः ॥ ३५३ ॥
शिलोच्चयशिलापृष्ठमिव पञ्चाननो युवा । भद्रद्विपपतिस्कन्धमध्यारूढः सुरेन्द्रवत् ॥ ३५४ ॥
विराजमानः शिरसि, तरङ्गीभूतकान्तिना । रत्नमयकिरीटेन, चूलयेवाऽमराचलः ॥ ३५५ ॥
बिभ्रन्मुक्ताकुण्डले च, वदनस्य श्रिया जितौ । सेवाकृते समायातौ, जम्बूद्वीपविधू इव ॥ ३५६ ॥
स्थूलमुक्तामणिमयं, हारयष्टिं च धारयन् । हृदये मन्दिरे लक्ष्म्या, वप्रसब्रह्मचारिणम् ॥ ३५७ ॥
दोर्मूलयोर्दधानश्च, जात्यजाम्बूनदाङ्गदौ । दृढौ नवलतावेष्टाविवोच्चैर्भुजशाखिनोः ॥ ३५८ ॥
मुक्तामणिमयौ बिभ्रत्कङ्कणौ मणिबन्धयोः । लावण्यसरितस्तीरवर्तिफेनच्छटोपमौ ॥ ३५९ ॥
अङ्गुलीये च बिभ्राणः, कान्तिपल्लविताम्बरे । मणी इवाऽणीयांसौ, पाण्योः फणिफणश्रियोः ॥ ३६० ॥
चोलकेनाऽङ्गलग्नेन, सूक्ष्मश्वेतेन शोभितः । असंलक्ष्यविभेदेन, श्रीचन्दनविलेपनात् ॥ ३६१ ॥
चारुमन्दाकिनीवीचिनिचयस्पर्द्धिनीं पटीम् । धारयन् परितो राकाचन्द्रमाश्चन्द्रिकामिव ॥ ३६२ ॥
विचित्रवर्णरुचिरेणाऽन्तरीयेण रोचितः । नानाधातूपत्यकया, निषेवित इवाऽचलः ॥ ३६३ ॥
महाबाहुर्बाहुबलिः, पाणिभ्यां वर्तयन् शृणिम् । श्रीणामाकर्षणक्रीडां, कुर्टिकामुल्वणामिव ॥ ३६४ ॥
बन्दिवृन्दजयजयारावपूरितदिङ्मुखः । स्वामिपादपवित्रस्योपवनस्याऽन्तिकं ययौ ॥ ३६५ ॥
[ एकविंशत्या कुलकम् ]

अवरुह्य करिस्कन्धाद्, वैनतेय इवाऽम्बरात् । छत्रादिप्रक्रियां त्यक्त्वा, तदुद्यानं विवेश सः ॥ ३६६ ॥
व्योमेव चन्द्ररहितं, सुधाकुण्डमिवाऽसुधम् । तदस्वामिकमुद्यानमपश्यदृषभात्मजः ॥ ३६७ ॥
क नाम भगवत्पादा, नयनानन्ददायिनः ? । इत्यपृच्छदतुच्छेच्छः, सर्वानुद्यानपालकान् ॥ ३६८ ॥
तेऽप्यूचुः किञ्चिदप्यग्रे, यामिनीव ययौ विभुः । यावत् कथयितुं यामस्तावद् देवोऽप्युपाययौ ॥ ३६९ ॥
हस्तविन्यस्तचिबुको, बाष्पायितविलोचनः । अथेदं चिन्तयामास, ताम्यंस्तक्षशिलापतिः ॥ ३७० ॥
स्वामिनं पूजयिष्यामि, समं परिजनैरिति । मनोरथो मुधा मेऽभूद्, हृदि बीजमिवोषरे ॥ ३७१ ॥
चिरं कृतविलम्बस्य, लोकानुग्रहकाम्यया । धिगियं मम सा जज्ञे, स्वार्थभ्रंशेन मूर्खता ॥ ३७२ ॥
धिगियं वैरिणी रात्रिर्धिगियं च मतिर्मम । अन्तरायकरी स्वामिपादपद्मावलोकने ॥ ३७३ ॥
विभातमप्यविभातं, भानुमानप्यभानुमान् । दृशावप्यदृशावेव, पश्यामि स्वामिनं न यत् ॥ ३७४ ॥
अत्र प्रतिमया तस्थौ, रात्रिं त्रिभुवनेश्वरः । अयं पुनर्बाहुबलिः, सौधे ‡शेते स निस्त्रपः ॥ ३७५ ॥
अथ बाहुबलिं दृष्ट्वा, चिन्तासन्तानसङ्कुलम् । उवाच सचिवो वाचा, शोकशल्यविशल्यया ॥ ३७६ ॥

१ वेगवद्भिः । २ पूर्णिमारात्रिचन्द्रेण । ३ इन्द्रप्रतीहारेण । ४ केशरी । * वराङ्गीभूत° सं १ ॥ ५ जम्बूद्वीपस्थचन्द्रौ इव । ६ जात्यसुवर्णकेयूरौ । ७ महान्तौ । ८ पर्वतासन्नभूम्या । ९ अङ्कुशम् । † °यारावपूरिताखिलदि° आ ॥ १० महेच्छः । ११ क्षारभूमौ । ‡ सुष्वाप नि° आ, सं २ ॥

अत्र स्वामिनमायातं, नाऽपश्यमिति शोचसि । किं देव ! नित्यवास्तव्यः, स एव हृदि यस्य ते ? ॥३७७॥
कुलिशाङ्कुशचक्राब्जध्वजमत्स्यादिलाञ्छितैः । दृष्टैः स्वामिपदन्यासैर्दृष्टः स्वाम्येव भावतः ॥ ३७८ ॥
श्रुत्वेति स्वामिनस्तानि, पदबिम्बानि भक्तितः । सान्तःपुरपरीवारः, सुनन्दासूरवन्दत ॥ ३७९ ॥
पदान्येतानि मा स्माऽतिक्रामत् कोऽपीति बुद्धितः । धर्मचक्रं रत्नमयं, तत्र बाहुबलिर्व्यधात् ॥ ३८० ॥
अष्टयोजनविस्तारं, तच्च योजनमुच्छ्रितम् । सहस्रारं बभौ बिम्बं, सहस्रांशोरिवाऽपरम् ॥ ३८१ ॥
त्रिजगत्स्वामिनस्तस्य, प्रभावादतिशायिनः । सद्यस्तत्कृतमेवैक्षि, दुष्करं सुसदामपि ॥ ३८२ ॥
तत् तथाऽपूजयद् राजा, पुष्पैः सर्वत आहृतैः । समलक्षि यथा पौरैः, पुष्पाणामिव पर्वतः ॥ ३८३ ॥
तत्र प्रवरसङ्गीतनाटकादिभिरुद्भटम् । नन्दीश्वरे शक्र इव, स चक्रेऽष्टाह्निकोत्सवम् ॥ ३८४ ॥
आरक्षकानर्चकांश्च, तत्राऽऽदिश्य विशांपतिः । नमस्कृत्य च कृत्यज्ञो, जगाम नगरीं निजाम् ॥ ३८५ ॥
भगवानप्यनायत्तः, समीरण इवाऽस्खलन् । नानाविधतपोनिष्ठो, विविधाभिग्रहोद्यतः ॥ ३८६ ॥
यवनाडम्बइल्लादिम्लेच्छदेशेषु मौनभाक् । अनार्यान् भद्रकीकुर्वन्, दर्शनेनाऽपि देहिनः ॥ ३८७ ॥
उपसर्गैरसंस्पृष्टः, सहमानः परीषहान् । सहस्रमेकं वर्षाणां, व्यहरद् दिनलीलया ॥ ३८८ ॥
अयोध्याया महापुर्याः, शाखानगरमुत्तमम् । ययौ पुरिमतालाख्यं, भगवानृषभध्वजः ॥ ३८९ ॥
तस्य चोत्तरतो रम्यं, द्वितीयमिव नन्दनम् । उद्यानं शकटमुखं, नाम न्यविशत प्रभुः ॥ ३९० ॥
कृताष्टमतपास्तत्र, न्यग्रोधस्य तरोरधः । प्रतिमास्थोऽप्रमत्ताख्यं, गुणस्थानं प्रपन्नवान् ॥ ३९१ ॥
ततश्चाऽपूर्वकरणमारूढः प्रत्यपद्यत । शुक्लध्यानं सवीचारं, पृथक्त्वेन वितर्कयुक् ॥ ३९२ ॥
प्राप्याऽनिवृत्तिं च सूक्ष्मसम्परायगुणं ततः । क्षणात् क्षीणकषायत्वं, प्रतिपेदे जगद्गुरुः ॥ ३९३ ॥
ऐक्यश्रुतमवीचारं, शुक्लध्यानं द्वितीयकम् । क्षणादासादयदथ, क्षीणमोहान्तिमक्षणे ॥ ३९४ ॥
पञ्च ज्ञानावरणानि, दृष्ट्यावृतिचतुष्टयम्[१] । अन्तरायांश्च पञ्चेति, घातिशेषमनाशयत् ॥ ३९५ ॥
अथ व्रतात् सहस्राब्द्यां[*], फाल्गुनैकादशीदिने । कृष्णे तथोत्तराषाढास्थिते चन्द्रे दिवामुखे ॥ ३९६ ॥
उत्पेदे केवलज्ञानं, त्रिकालविषयं विभोः । हस्तस्थितमिवाऽशेषं, दर्शयद् भुवनत्रयम् ॥३९७॥ [ युग्मम् ]
दिशः प्रसेदुरभवन्, वायवः सुखदायिनः । नारकाणामपि तदा, क्षणं सुखमजायत ॥ ३९८ ॥
अथेन्द्राणामशेषाणामासनानि चकम्पिरे । तान् नोदितुमिव स्वामिकेवलोत्सवकर्मणे ॥ ३९९ ॥
प्रणेदुरिन्द्रलोकेषु, महाघण्टाः पटुस्वनाः । सद्यो दूत्य इव स्वस्वलोकाकारणकर्मणि[३] ॥ ४०० ॥
यियासोः स्वामिपादान्ते, सौधर्माधिपतेः सुरः । ऐरावणो गजीभूय, चिन्तामात्रादुपास्थित ॥ ४०१ ॥
विराजमानस्तन्वा स, लक्षयोजनमानया । दिदृक्षुः स्वामिनं मेरुरिव जङ्गमतां गतः ॥ ४०२ ॥
अङ्गप्रभाभिर्नीहारधवलाभिः समन्ततः । ककुभां चान्दनमिव, वितन्वानो विलेपनम् ॥ ४०३ ॥
गण्डस्थलगलद्दानजलैरतिसुगन्धिभिः । स्वर्गाङ्गणभुवं कुर्वन्, कस्तूरीस्तबकाङ्किताम् ॥ ४०४ ॥
कर्णतालैस्तालवृन्तैरिव लोलैर्निवारयन् । कपोलतलसम्पातिगन्धान्धमधुपावलीम् ॥ ४०५ ॥
कुम्भस्थलपराभूतबालमार्तण्डमण्डलः । आनुपूर्वीपीनवृत्तशुण्डानुकृतनागराट् ॥ ४०६ ॥
मध्वाभनेत्रदशनस्ताम्रपत्राभतालुकः । भम्भावृत्तशुभग्रीवः, पृथुगात्रान्तरालकः ॥ ४०७ ॥
अधिज्यीकृतधन्वाभपृष्ठवंशः कृशोदरः । चन्द्रमण्डलसङ्काशनखमण्डलमण्डितः ॥ ४०८ ॥
सुगन्धिदीर्घनिश्वासश्चलदीर्घकराङ्गुलिः । दीर्घौष्ठपल्लवो दीर्घमेहनो दीर्घवालधिः ॥ ४०९ ॥
घण्टाभ्यां पार्श्वयोश्चन्द्रार्काभ्यां मेरुरिवाऽङ्कितः । देवद्रुकुसुमावेष्टं, कक्षानाडीं च धारयन् ॥ ४१० ॥

---

१ दर्शनावरणचतुष्टयम् । * सहस्रैकं फा° खं ॥ २ सहस्रवर्षेषु गतेषु । ३ आह्वानकर्मणि । ४ मधुवर्णनेत्रदन्तः । ५ शुण्डाग्रः । ६ दीर्घपुच्छ. ।

मुखान्यष्टौ हेमपट्टाश्चितभालानि तस्य च । बभुर्दिगष्टकश्रीणामिव विश्रमभूमयः ॥ ४११ ॥
अष्टौ मुखे मुखे दन्तास्तिरश्चीनायतोन्नताः । दृढाश्वकाशिरे तस्य, महाद्रेरिव दन्तकाः ॥ ४१२ ॥
दन्ते दन्ते पुष्करिणी, स्वादुनिर्मलपुष्करा । गिरौ वर्षधरे वर्षधरे ह्रद इवाऽभवत् ॥ ४१३ ॥
पुष्करिण्यां पुष्करिण्यामष्टावम्भोरुहाणि च । अब्देवीभिः कृतानीव, मुखानि बहिरम्भसः ॥ ४१४ ॥
दलानि विपुलान्यष्टाम्भोरुहेऽम्भोरुहेऽपि च । क्रीडत्सुरस्त्रीविश्रामान्तरीपाणीव रेजिरे ॥ ४१५ ॥
दले दलेऽष्टसङ्ख्यानि, नाटकानि विरेजिरे । चतुर्विधैरभिनयैः, सनाथानि पृथक् पृथक् ॥ ४१६ ॥
द्वात्रिंशदासन् पात्राणि, नाटके नाटकेऽपि च । निर्झरा इव सुस्वादरसकल्लोलसम्पदः ॥ ४१७ ॥
वासवः सपरीवारस्तं वारणवरं ततः । अग्रासनेऽध्यारुरोह, कुम्भाग्रच्छन्ननाभिकः ॥ ४१८ ॥
आसीनसपरीवारवासवो वारणाधिपः । सहसा सकलः कल्पः, सौधर्म इव सोऽचलत् ॥ ४१९ ॥
क्षणादपि तदुद्यानमृषभस्वामिपावितम् । स प्राप पालक इव, स्ववपुः सङ्क्षिपन् क्रमात् ॥ ४२० ॥
इन्द्राः समं देवगणैरपरेऽप्यच्युतादयः । अहंपूर्विकयेवेयुस्तत्रोच्चैर्दधतस्त्वराम् ॥ ४२१ ॥
इतः समवसरणस्याऽवनीमेकयोजनाम् । अमृजन् वायुकुमाराः, स्वयं मार्जितमानिनः ॥ ४२२ ॥
गन्धाम्बुवृष्टिभिर्मेघकुमाराः सिषिचुः क्षितिम् । सुगन्धिबाष्पैः सोत्क्षिप्तधूपार्घैवेष्यतः प्रभोः ॥ ४२३ ॥
व्यन्तराः स्वर्णमाणिक्यरत्नाश्मभिरुदंशुभिः । आत्मानमिव भक्त्या तद्, बबन्धुर्वसुधातलम् ॥ ४२४ ॥
तत्राऽधोमुखवृन्तानि, प्रोद्गतानीव भूतलात् । पञ्चवर्णानि पुष्पाणि, सुगन्धीन्यकिरंश्च ते ॥ ४२५ ॥
तोरणानि विचक्रुश्च, रत्नमाणिक्यकाञ्चनैः । चतसृष्वपि ते दिक्षु, तद्भूषाकण्ठिका इव ॥ ४२६ ॥
अन्योऽन्यदेहसङ्क्रान्तप्रतिबिम्बैर्बभासिरे । आलिङ्गिता इवाऽऽलीभिस्तत्रोच्चैः शालभञ्जिकाः ॥ ४२७ ॥
स्निग्धेन्द्रनीलघटिता, मकरास्तेषु रेजिरे । प्रणश्यन्मकरकेतुत्यक्तकेतुभ्रमप्रदाः ॥ ४२८ ॥
भगवत्केवलज्ञानकल्याणभवया मुदा । हासा इव दिशां रेजुः, श्वेतच्छत्राणि तत्र च ॥ ४२९ ॥
ध्वजाश्च भ्रेजिरे तत्र, भूदेव्याऽतिप्रमोदतः । उत्तम्भिता इव भुजाः, स्वयं नर्त्तितुकामया ॥ ४३० ॥
तोरणानामधस्तेषां, वलिपट्टेष्विवोच्चकैः । मङ्गलस्याऽष्ट चिह्नानि, स्वस्तिकादीनि जज्ञिरे ॥ ४३१ ॥
तत्रोपरितनं वप्रं, विमानपतयो व्यधुः । रत्नमयं रत्नगिरेराहृतां मेखलामिव ॥ ४३२ ॥
नानामणिमयान्यासन्, कपिशीर्षाणि तत्र च । अंशुभिः सूत्रयन्ति द्यां, चित्रवर्णांशुकामिव ॥ ४३३ ॥
मध्यभागे पुनः स्वाङ्गज्योतिभिरिव पिण्डितैः । प्राकारं कनकैर्ज्योतिष्पतयस्तत्र चक्रिरे ॥ ४३४ ॥
रत्नैर्विरचयामासुः, कपिशीर्षाणि तत्र च । सुरासुरवधूवक्त्ररत्नादर्शायितानि ते ॥ ४३५ ॥
रूप्यवप्रश्च भवनपतिभिस्तद्बहिष्कृतः । भक्तितो मण्डलीभूत, इव वैताढ्यपर्वतः ॥ ४३६ ॥
तस्योपरि विशालानि, कपिशीर्षाणि जज्ञिरे । सौवर्णान्यम्बुजानीव, दिविषद्दीर्घिकाजले ॥ ४३७ ॥
भवनाधिपतिज्योतिष्पतिवैमानिकश्रियाम् । एकैककुण्डलेनेव, सा त्रिवप्रीकृता बभौ ॥ ४३८ ॥
माणिक्यतोरणास्तत्र, पताकामालभारिणः । रश्मिजालैर्विरचितान्यपताका इवाऽभवन् ॥ ४३९ ॥
प्रतिवप्रं च चत्वारि, गोपुराणि चकाशिरे । चतुर्विधस्य धर्मस्य, क्रीडावातायना इव ॥ ४४० ॥
इन्द्रनीलमणिस्तम्भायितधूमलतामुचः । द्वारे द्वारे धूपघट्योऽमुच्यन्त व्यन्तरामरैः ॥ ४४१ ॥
प्रतिद्वारं विचक्रे तैर्वापी काञ्चनपङ्कजा । समवसरणवप्र, इव द्वास्चतुष्कभृत् ॥ ४४२ ॥
प्राकारस्य द्वितीयस्याऽन्तरे चोत्तरपूर्वतः । देवच्छन्दं विचक्रुस्ते, स्वामिविश्रामहेतवे ॥ ४४३ ॥
तत्र प्रथमवप्रस्य, द्वास्थौ प्राग्द्वारि तस्थतुः । स्वर्णवर्णावुभयतो, वैमानिकदिवौकसौ ॥ ४४४ ॥

---

१ अन्तरद्वीपाणीव । * °कान्यभिनिन्यिरे स २, आ ॥ २ पुष्पबन्धनस्थानानि । ३ पुत्तलिका । † स्वामिप्रभा-प्रणश्यन्मकरकेतुभ्रम° सं १ ॥ ३ समवसरणभूमि ।

तस्यैव दक्षिणद्वारपार्श्वयोर्द्वारपालकौ । प्रतिबिम्बे इवाऽन्योऽन्यस्याऽस्थातां व्यन्तरौ सितौ ॥ ४४५ ॥
अभितः पश्चिमद्वारं, ज्योतिष्कौ द्वारपालकौ । रक्तवर्णौ वितष्ठाते, सायमिन्दुरवी इव ॥ ४४६ ॥
तस्थतुश्च प्रतीहारावुत्तरद्वारपार्श्वयोः । भवनाधिपती कृष्णौ, मेघाविव समुन्नतौ ॥ ४४७ ॥
द्वितीयवप्रद्वारेषु, प्राक्क्रमेण चतुर्ष्वपि । सर्वा अप्यभयपाशाङ्कुशमुद्गरपाणयः ॥ ४४८ ॥
देव्यो जया च विजया, चाऽजिता चाऽपराजिता । तस्थुश्चन्द्राश्मशोणाश्मस्वर्णनीलत्विषः क्रमात् ॥
अन्त्यवप्रे प्रतिद्वारं, तस्थौ द्वास्थस्तु तुम्बुरुः । खट्वाङ्गी नृशिरःस्रग्वी, जटामुकुटमण्डितः ॥ ४५० ॥
मध्ये समवसरणं, चैत्यद्रुर्व्यन्तरैः कृतः । क्रोशत्रयोदयो रत्नत्रयोदयमिवोद्दिशन् ॥ ४५१ ॥
तस्याऽधो विविधै रत्नैः, पीठं विदधिरे च ते । तस्योपरि च्छन्दकं चाऽप्रतिच्छन्दमणीमयम् ॥ ४५२ ॥
तन्मध्ये पूर्वदिग्भागे, रत्नसिंहासनं ततः । सपादपीठं ते चक्रुः, सारं सर्वश्रियामिव ॥ ४५३ ॥
तस्योपरि विचक्रे च, तैश्छत्रत्रयमुज्ज्वलम् । स्वामिनस्त्रिजगत्स्वाम्यचिह्नत्रयमिवोच्चकैः ॥ ४५४ ॥
यक्षाभ्यां तत्र दध्राते, पार्श्वयोश्चामरौ शुची । हृद्यमान्तौ बहिर्भूतौ, स्वामिभक्तिभराविव ॥ ४५५ ॥
ततः समवसरणद्वारे हेमाम्बुजस्थितम् । अत्यद्भुतप्रभाचक्रं, धर्मचक्रं विचक्रिरे ॥ ४५६ ॥
तत्राऽन्यदपि यत् कृत्यं, तत् सर्वं व्यन्तरा व्यधुः । साधारणे हि समवसरणे तेऽधिकारिणः ॥ ४५७ ॥
चतुर्विधानां देवानामथ कोटीभिरावृतः । भगवान् समवसर्तुं, प्रचचाल दिवामुखे ॥ ४५८ ॥
सहस्रपत्राण्यब्जानि, सौवर्णानि तदा नव । विदधुर्निदधुश्चाऽग्रे, क्रमेण स्वामिनः सुराः ॥ ४५९ ॥
विदधे तेषु च स्वामी, पादन्यासं द्वयोर्द्वयोः । पुरः सञ्चारयामासुराशु शेषाणि नाकिनः ॥ ४६० ॥
पूर्वद्वारेण समवसरणं प्राविशत् ततः । चक्रे च चैत्यवृक्षस्य, जगन्नाथः प्रदक्षिणाम् ॥ ४६१ ॥
तीर्थं नत्वा प्राङ्मुखोऽथ, जगन्मोहतमश्छिदे । स्वामी सिंहासनं भेजे, पूर्वाचलमिवाऽर्यमा ॥ ४६२ ॥
रत्नसिंहासनस्थानि, दिक्ष्वन्यास्वपि तत्क्षणम् । भगवत्प्रतिबिम्बानि, व्यन्तरास्त्रीणि चक्रिरे ॥ ४६३ ॥
देवाः प्रभोः सदृग्रूपमङ्गुष्ठस्याऽपि न क्षमाः । कर्तुं तादृंशि तान्यासन्, पुनः स्वामिप्रभावतः ॥ ४६४ ॥
आविर्बभूवाऽनुशिरस्तदा भामण्डलं विभोः । खद्योतपोतवद् यस्य, पुरो मार्तण्डमण्डलम् ॥ ४६५ ॥
प्रतिध्वानैश्चतस्रोऽपि, दिशो मुखरयन् भृशम् । अम्भोद इव गम्भीरो, दिवि दध्वान दुन्दुभिः ॥ ४६६ ॥
भगवानेक एवाऽयं, स्वामीत्यूर्ध्वीकृतो भुजः । धर्मेणेव प्रभोरग्रे, रेजे रत्नमयध्वजः ॥ ४६७ ॥
प्रविश्य पूर्वद्वारेण, कृत्वा च त्रिः प्रदक्षिणाम् । तीर्थनाथं च तीर्थं च, नत्वा प्राकार आदिमे ॥४६८॥
स्थानं विहाय साधूनां, साध्वीनां च तदन्तरे । पूर्वदक्षिणदिश्यूर्द्ध्वास्तस्थुर्वैमानिकस्त्रियः ॥४६९॥ [ युग्मम् ]
प्रविश्याऽपाच्यद्वारेण, विधिना तेन नैर्ऋते । क्रमेणाऽस्थुर्भवनेशज्योतिष्कव्यन्तरस्त्रियः ॥ ४७० ॥
प्रविश्य प्रत्यग्द्वारात् प्राग्, विधिपूर्वं मरुद्दिशि । अतिष्ठन् भवनपतिज्योतिष्कव्यन्तराः सुराः ॥ ४७१ ॥
प्रविश्योदीच्यद्वारेण, तेनैव विधिना क्रमात् । ऐशान्यां कल्पदेवाश्च, नरा नार्योऽवतस्थिरे ॥ ४७२ ॥
तत्राऽऽदावागतोऽल्पर्द्धिरागच्छन्तं महर्द्धिकम् । नमति स्माऽऽगतं तु प्राग्, नमन्नेव जगाम च ॥ ४७३ ॥
नियन्त्रणा तत्र नैव, विकथा न च काचन । विरोधिनामपि मिथो, न मात्सर्यं भयं न च ॥ ४७४ ॥
द्वितीयस्य तु वप्रस्य, तिर्यञ्चस्तस्थुरन्तरे । वाहनानि तृतीयस्य, प्राकारस्य तु मध्यतः ॥ ४७५ ॥
प्राकारस्य तृतीयस्य, बाह्यदेशेऽभवन् पुनः । विशन्तः केऽपि निर्यान्तः, केऽपि तिर्यङ्नरामराः ॥ ४७६ ॥
अथ सौधर्मकल्पेन्द्रो, नमस्कृत्य कृताञ्जलिः । रोमाञ्चितो जगन्नाथमिति स्तोतुं प्रचक्रमे ॥ ४७७ ॥
स्वामिन्! क्व धीदरिद्रोऽहं, क्व च त्वं गुणपर्वतः । अभिष्टोष्ये तथाऽपि त्वां, भक्त्याऽतिमुखरीकृतः ॥४७८॥

१ श्वेतवर्णौ । २ खट्वाङ्गायुधधारी । ३ मुण्डमाली । ४ उच्छ्रयः । ५ अप्रतिममणिमयम् । ६ सुवर्णकमलस्थितम् ।
* °वाऽनुवपुस्तदा आ ॥ ७ पतङ्गशिशुवत् । ८ दक्षिणद्वारेण । ९ वायव्यदिशि । १० उत्तरद्वारेण ।

अनन्तैर्दर्शनज्ञानवीर्यानन्दैर्जगत्पते ! । रत्नै रत्नाकर इव, त्वमिहैको विराजसे ॥ ४७९ ॥
देवेह भरतक्षेत्रे, चिरं नष्टस्य सर्वथा । धर्मस्याऽसि प्ररोहाय, बीजमेकं तरोरिव ॥ ४८० ॥
अनुत्तरसुराणां त्वं, तत्रस्थानामिह स्थितः । वेत्सि च्छिनत्सि सन्देहं, न माहात्म्यावधिस्तव ॥ ४८१ ॥
फलं त्वद्भक्तिलेशस्य, निवासः स्वर्गभूमिषु । यत् सुराणां समग्राणां, महर्द्धिद्युतिभास्वताम् ॥ ४८२ ॥
देव ! त्वद्भक्तिहीनानां, तपांस्यतिमहान्त्यपि । अबोद्धॄणामिव ग्रन्थाभ्यासः क्लेशाय केवलम् ॥ ४८३ ॥
यस्त्वां स्तवीति यो द्वेष्टि, समस्त्वमुभयोस्तयोः । शुभाऽशुभं फलं किन्तु, भिन्नं चित्रीयते हि नः ॥४८४॥
द्युश्रियाऽपि न तोषो मे, नाथ ! नाथास्यदस्ततः । भगवन् ! भूयसी भूयात्, त्वयि भक्तिर्ममाऽक्षया ॥४८५॥
इत्यभिष्टुत्य नत्वा च, निषसाद कृताञ्जलिः । नारीनरनरदेवदेवानामग्रतो हरिः ॥ ४८६ ॥

इतोऽपि च विनीतायां, विनीतो भरतेश्वरः । आजगाम नमस्कर्तुं, मरुदेवां दिवामुखे ॥ ४८७ ॥
तनूजविरहोद्भूतैरश्रान्तैरस्रवारिभिः[1] । जातनीलिकया[2] लुप्तलोचनाब्जां पितामहीम् ॥ ४८८ ॥
ज्येष्ठः पौत्रो नमत्येष, देवि ! त्वत्पादपङ्कजे । स्वयं विज्ञपयन्नेवं, भरतः प्रणनाम ताम् ॥४८९॥ [युग्मम्]
स्वामिनी मरुदेवाऽपि, भरतायाऽऽशिषं ददौ । हृद्यमान्तीं शुचमिव, गिरमित्युज्जगार च ॥ ४९० ॥
मां त्वां महीं प्रजां लक्ष्मीं, विहाय तृणवत् तदा । एकाकी गतवान् वत्सो, दुर्मरा मरुदेव्यहो ! ॥४९१॥
सूनोश्चन्द्रातपच्छायमातपत्रं क मूर्द्धनि ? । सर्वाङ्गसन्तापकरः, क्वेदानीं तपनातपः ? ॥ ४९२ ॥
सलीलगतिभिर्यानैर्यानं हस्त्यादिभिः क तत् ? । वत्सस्य पादचारित्वं, क्वेदानीं पथिकोचितम् ? ॥४९३॥
क तद् वारवधूत्क्षिप्तचारुचामरवीजनम् ? । मत्सूनोः काऽधुना दंशमशकाद्यैरुपद्रवः ? ॥ ४९४ ॥
क तद् देवसमानीतदिव्याहारोपजीवनम् ? । क भिक्षाभोजनं तस्याऽभोजनं वाऽपि सम्प्रति ? ॥ ४९५ ॥
रत्नसिंहासनोत्सङ्गे, महर्द्धेः क तदासनम् ? । मत्सूनोः खङ्गिन[3] इव, क निरासनताऽधुना ? ॥ ४९६ ॥
आरक्षैरात्मरक्षैश्च, रक्षिते क पुरे स्थितिः ? । सूनोः क वासः सिंहाहिदुःश्वापदपदे वने ? ॥ ४९७ ॥
क तद् दिव्याङ्गनागीतं, कर्णामृतरसायनम् ? । सूनोः कोन्मत्तफेरुण्डफेत्काराः कर्णसूचयः ॥ ४९८ ॥
अहो ! कष्टमहो ! कष्टं, यन्मे सूनुस्तपात्यये । पद्मखण्ड इव मृदुः, सहते वारिविद्रवम्[4] ॥ ४९९ ॥
हिमर्त्तौ हिमसम्पातसंक्लेशविवशां दशाम् । अरण्ये मालतीस्तम्ब, इव याति निरन्तरम् ॥ ५०० ॥
उष्णर्त्तावुष्णकिरणकिरणैरतिदारुणैः[5] । सन्तापं चाऽनुभवति, स्तम्बेरम इवाऽधिकम् ॥ ५०१ ॥
तदेवं सर्वकालेषु, वनेवासी निराश्रयः । पृथग्जन इवैकाकी, वत्सो मे दुःखभाजनम् ॥ ५०२ ॥
तद्दुःखाकुलं वत्सं, पश्यन्त्यग्रे दृशोरिव । वदन्ती नित्यमप्येवं, हा ! त्वामपि दुनोम्यहम् ॥ ५०३ ॥

इति दुःखाकुलां देवीं, मरुदेवीमुदञ्जलिः । वाचाऽवोचन्नवसुधासध्रीच्या वसुधाधवः ॥ ५०४ ॥
स्थैर्याद्रिवज्रसारस्य, महासत्त्वशिरोमणेः । तातस्य जननी भूत्वा, किमेवं देवि ! ताम्यसि ? ॥ ५०५ ॥
तातस्तरीतुं सहसा, संसाराम्भोधिमुद्यतः । कण्ठबद्धशिलाप्रायान्, स्थाने तत्याज नः[6] प्रभुः ॥ ५०६ ॥
वने विहरतो भर्त्तुः, प्रभावाच्छ्वापदा अपि । नोपद्रवं कर्त्तुमलं, पाषाणघटिता इव ॥ ५०७ ॥
क्षुत्पिपासातपप्रायाः, दुःसहा ये परीषहाः । सहायाः खलु तातस्य, ते कर्मद्वेषिसूदने ॥ ५०८ ॥
न चेत् प्रत्येषि मद्वाचा, प्रत्येष्यसि तथाऽपि हि । तातस्य न चिराज्जातकेवलोत्सववार्त्तया ॥ ५०९ ॥

अत्रान्तरे महीभर्त्तुर्ज्ञापितौ वेत्रपाणिना । नाम्ना यमक-शमकौ, पुरुषावभ्युपेयतुः ॥ ५१० ॥
प्रणम्य यमकस्तत्र, भरतेशं व्यजिज्ञपत् । दिष्ट्याऽद्य वर्धसे देवाऽनया कल्याणवार्त्तया ॥ ५११ ॥
पुरे पुरिमतालाख्ये, कानने शकटानने । युगादिनाथपादानामुदपद्यत केवलम् ॥ ५१२ ॥
प्रणम्य शमकोऽप्युच्चैःस्वरमेवं व्यजिज्ञपत् । इदानीमायुधागारे, चक्ररत्नमजायत ॥ ५१३ ॥

---

१ अश्रुजलैः । २ नेत्ररोगविशेषः । ३ गण्डकाख्यपशौ । ४ जलोपद्रवम् । ५ ग्रीष्मर्त्तौ । ६ अस्मान् ।

उत्पन्नकेवलस्तात, इतश्चक्रमितोऽभवत् । आदौ करोमि कस्याऽर्चामिति दध्यौ क्षणं नृपः ॥ ५१४ ॥
क्व विश्वाभयदस्तातः ?, क्व चक्रं प्राणिघातकम् ? । विमृश्येति स्वामिपूजाहेतोः स्वानादिदेश सः ॥ ५१५ ॥
यथोचितमथो दत्त्वा, पुष्कलं पारितोषिकम् । विससर्ज नरेन्द्रस्तौ, मरुदेवामुवाच च ॥ ५१६ ॥
देवि ! त्वं सर्वदाऽपीदमादिक्षः करुणाक्षरम् । भिक्षाहारो यदेकाकी, वत्सो मे दुःखभाजनम् ॥ ५१७ ॥
त्रैलोक्यस्वामिताभाजः, स्वसूनोस्तस्य सम्प्रति । पश्य सम्पदमित्युक्त्वाऽऽरोहयामास तां गजे ॥ ५१८ ॥
सुवर्णवज्रमाणिक्यभूषणैस्तुरगैर्गजैः । पत्तिभिः स्यन्दनैर्मूर्त्तश्रीमयैः[1] सोऽचलत् ततः ॥ ५१९ ॥
सैन्यैर्भूषणभाःपुञ्जकृतजङ्गमतोरणैः । गच्छन् दूरादपि नृपोऽपश्यद् रत्नध्वजं पुरः ॥ ५२० ॥
मरुदेवामथाऽवादीद्, भरतः परतो ह्यदः । प्रभोः समवसरणं, देवि ! देवैर्विनिर्मितम् ॥ ५२१ ॥
अयं जयजयारावतुमुलस्त्रिदिवौकसाम् । श्रूयते तातपादाब्जसेवोत्सवमुपेयुषाम् ॥ ५२२ ॥
गम्भीरमधुरं मातर्दिव्ययं दुन्दुभिर्नदन् । तनोति हृदयानन्दं, वैतालिक इव प्रभोः ॥ ५२३ ॥
स्वामिपादाब्जवन्दारुवृन्दारकविमानभूः । अनणुः[2] *किङ्किणीनादः, श्रवणातिथिरेष[3] नः ॥ ५२४ ॥
स्वामिदर्शनहृष्टानां, क्ष्वेडानादो[4] दिवौकसाम् । स्तनितं स्तनयित्नूनामिवैष श्रूयते †दिवि ॥ ५२५ ॥
गन्धर्वाणामियं गीतिर्ग्रामरागपवित्रिता । स्वामिवाचो भुजिष्येव, पुष्यत्यानन्दमद्य नः ॥ ५२६ ॥
शृण्वत्यास्तत् ततो देव्या, मरुदेव्या व्यलीयत । आनन्दाश्रुपयःपूरैः, पङ्कवन्नीलिका दृशोः ॥ ५२७ ॥
साऽपश्यत् तीर्थकृल्लक्ष्मीं, सूनोरतिशयान्विताम् । तस्यास्तद्दर्शनानन्दात्, तन्मयत्वमजायत ॥ ५२८ ॥
साऽऽरुह्य क्षपकश्रेणिमपूर्वकरणक्रमात् । क्षीणाष्टकर्मा युगपत्, केवलज्ञानमासदत् ॥ ५२९ ॥
करिस्कन्धाधिरूढैव, स्वामिनी मरुदेव्यथ । अन्तकृत्केवलित्वेन, प्रपेदे पदमव्ययम् ॥ ५३० ॥
एतस्यामवसर्पिण्यां, सिद्धोऽसौ प्रथमस्ततः । सत्कृत्य तद्वपुः क्षीरनीरधौ निदधेऽमरैः ॥ ५३१ ॥
तदादि च प्रवृत्ते, लोके मृतकपूजनम् । यत् कुर्वन्ति महान्तो हि, तदाचाराय कल्पते ॥ ५३२ ॥
ततो विज्ञाततन्मोक्षो, हर्ष-शुग्भ्यां समं नृपः । अभ्रच्छायाऽर्कतापाभ्यां, शरत्काल इवाऽऽनशे ॥ ५३३ ॥
सन्त्यज्य राज्यचिह्नानि, पदातिः सपरिच्छदः । उदग्द्वारेण समवसरणं प्रविवेश सः ॥ ५३४ ॥
चतुर्भिर्देवनिकायैः, स्वामी परिवृतस्तदा । ददृशे भरतेशेन, दृक्चकोरनिशाकरः ॥ ५३५ ॥
त्रिश्च प्रदक्षिणीकृत्य, भगवन्तं प्रणम्य च । मूर्ध्नि बद्धाञ्जलिः स्तोतुमिति चक्री प्रचक्रमे ॥ ५३६ ॥
जयाऽखिलजगन्नाथ !, जय विश्वाभयप्रद ! । जय प्रथमतीर्थेश !, जय संसारतारण ! ॥ ५३७ ॥
अद्याऽवसर्पिणीलोकपद्माकरदिवाकर ! । त्वयि दृष्टे प्रभातं मे, प्रनष्टतमसोऽभवत् ॥ ५३८ ॥
तेषां दूरे न लोकाग्रं, कारुण्यक्षीरसागर ! । समारोहन्ति ये नाथ !, त्वच्छासनमहारथम् ॥ ५३९ ॥
लोकाग्रतोऽपि संसारमग्रिमं देव ! मन्महे । निष्कारणजगद्बन्धुर्यत्र साक्षात् त्वमीक्ष्यसे ॥ ५४० ॥
त्वद्दर्शनमहानन्दस्यन्दनिष्यन्दलोचनैः । स्वामिन् ! मोक्षसुखास्वादः, संसारेऽप्यनुभूयते ॥ ५४१ ॥
रागद्वेषकषायाद्यैः, रुद्धं जगदरातिभिः । इदमुद्वेष्ट्यते नाथ !, त्वयैवाऽभयसत्रिणा ॥ ५४२ ॥
नानावस्कन्दसङ्ग्रामहतग्रामभुवो मिथः । मित्रीभूयेह तिष्ठन्ति, राजानस्तव पर्षदि ॥ ५४३ ॥
त्वत्पर्षद्यमायातः, करटी[5] करटस्थलीम् । करेण केसरिकरं, कृष्ट्वा कण्डूयते मुहुः ॥ ५४४ ॥
इतश्च महिषमिव, महिषोऽयं मुहुर्मुहुः, । स्नेहतो जिह्वया मार्ष्टि, हेषमाणमिमं[6] हयम् ॥ ५४५ ॥
लीलालोलितलाङ्गूल, उत्कर्णोन्नमिताननः । घ्राणेन व्याघ्रवदनं, जिघ्रत्ययमितो मृगः ॥ ५४६ ॥
पार्श्वयोरग्रतः पश्चाल्ललन्तं निजपोतवत् । अयं तरुणमार्जारः, समाश्लिष्यति ‡मूषकम् ॥ ५४७ ॥

---

१ मूर्तिमल्लक्ष्मीमयैः । २ महान् । * किङ्कणीना° खता ॥ ३ कर्णगाचर. । ४ सिंहनादः । † हृदि खता ॥ ५ गज. । ६ शब्दं कुर्वाणम् । ‡ मूषिकम् खं, सं २, मूषिकाम् आ ॥

अयं च निर्भयो भोगं[1], कुण्डलीकृत्य कुण्डली । अदभ्रबभ्रोरभ्यर्णे[2], निषीदति वयस्यवत् ॥ ५४८ ॥
देव! ये केचिदन्येऽपि, जीवाः शाश्वतवैरिणः । निर्वैरास्तेऽत्र तिष्ठन्ति, त्वत्प्रभावोऽसमो ह्ययम् ॥ ५४९ ॥
इति स्तुत्वा जगन्नाथमपक्रम्याऽऽश्रितक्रमः । निषसाद महीनाथो, द्युसन्नाथस्य पृष्ठतः ॥ ५५० ॥
क्षेत्रे योजनमात्रेऽपि, सत्त्वानां कोटिकोटयः । ममुस्तस्मिन् निराबाधं, तीर्थनाथप्रभावतः ॥ ५५१ ॥
प्रभुर्योजनगामिन्या, सर्वभाषास्पृशा गिरा । पञ्चत्रिंशदतिशयजुषेमां देशनां व्यधात् ॥ ५५२ ॥
आधिव्याधिजरामृत्युज्वालाशतसमाकुलः । प्रदीप्तागारकल्पोऽयं, संसारः सर्वदेहिनाम् ॥ ५५३ ॥
न युज्यते तद् विदुषः, प्रमादोऽत्र मनागपि । कः प्रमाद्यति बालोऽपि, निशोल्लङ्घ्ये मरुस्थले? ॥ ५५४ ॥
संसाराब्धाविहाऽनेकयोन्यावर्त्ताकुले जनैः । दुर्लभं मानुषं जन्म, महारत्नमिवोत्तमम् ॥ ५५५ ॥
परलोकसाधनेन, मानुष्यमपि देहिनाम् । पादपो दोहदेनेव, सफलीभवति ध्रुवम् ॥ ५५६ ॥
आपातमात्रमधुराः, परिणामेऽतिदारुणाः । शठवाच इवाऽत्यन्तं, विषया विश्ववञ्चकाः ॥ ५५७ ॥
पदार्थानामशेषाणां, संसारोदरवर्तिनाम् । *संयोगा विप्रयोगान्ताः, पतनान्ता इवोच्छ्रयाः ॥ ५५८ ॥
आयुर्धनं यौवनं च, स्पर्द्धयेव परस्परम् । सत्वरं गत्वराण्येव, संसारेऽस्मिन् शरीरिणाम् ॥ ५५९ ॥
†संसारस्याऽस्य[3] गतिषु, चतसृष्वपि जातुचित् । नाऽस्त्येव सुखलेशोऽपि, स्वादु नीरं मराविव ॥ ५६० ॥
तथाहि क्षेत्रदोषेण, परमाधार्मिकैरपि । मिथश्चाऽऽक्लिश्यमानानां, नारकाणां कुतः सुखम्? ॥ ५६१ ॥
शीतवातातपाम्भोभिर्वधबन्धक्षुदादिभिः । विविधं बाध्यमानानां, तिरश्चामपि किं सुखम्? ॥ ५६२ ॥
गर्भवासजनिव्याधिजरादारिद्र्यमृत्युजैः । क्रोडीकृतानाम[4]सुखैर्मनुष्याणां कुतः सुखम्? ॥ ५६३ ॥
अन्योऽन्यमत्सरामर्षकलहच्यवनाऽसुखैः । सुखलेशोऽपि नैवाऽस्ति, कदाचिद् द्युसदामपि ॥ ५६४ ॥
अज्ञानाज्जन्मिनो भूयो, भूयः संसारसम्मुखम् । तथापि परिसर्पन्ति, नीचाभिमुखमम्बुवत् ॥ ५६५ ॥
तद् भव्याश्चेतनावन्तो, निजेनाऽनेन जन्मना । मा पोषयत संसारं, दुग्धेनेव भुजङ्गमम् ॥ ५६६ ॥
संसारवासजं दुःखं, विचार्य तदनेकधा । सर्वात्मनाऽपि मोक्षाय, यतध्वं हे विवेकिनः! ॥ ५६७ ॥
गर्भवासभवं दुःखं, नरकाऽसुखसन्निभम् । संसारवन्न मोक्षेऽस्ति, जीवानां हन्त! जातुचित् ॥ ५६८ ॥
घटीमध्याकृष्यमाणनारकार्तिसहोदरा । नेह प्रसवजन्माऽपि, जायते जातु वेदना ॥ ५६९ ॥
बहिरन्तःपरिक्षिप्तशल्यतुल्या भवन्ति च । नाऽऽधयो व्याधयो नाऽपि, तत्र बाधानिबन्धनम् ॥ ५७० ॥
अग्रदूती कृतान्तस्य, तेजःसर्वस्वतस्करी । पराधीनत्वजननी, न जरा तत्र सर्वथा ॥ ५७१ ॥
सञ्जायते नारकिकतिर्यग्नृद्युसदामिव । न तत्र मरणं भूयो, भवभ्रमणकारणम् ॥ ५७२ ॥
किन्तु तत्र महानन्दं, सुखमद्वैतमव्ययम् । रूपं च शाश्वतं ज्योतिः, केवलालोकभास्करम् ॥ ५७३ ॥
स च सम्प्राप्यते मोक्षः, शीलयद्भिर्निरन्तरम् । ज्ञानदर्शनचारित्ररत्नत्रितयमुज्ज्वलम् ॥ ५७४ ॥
तत्र जीवादितत्त्वानां, सङ्क्षेपाद् विस्तरादपि । यथावदवबोधो यः, सम्यग्ज्ञानं तदुच्यते ॥ ५७५ ॥
मतिश्रुताऽवधिमनःपर्यायैः केवलेन च । अमीभिः सान्वयैर्भेदैस्तत् तु पञ्चविधं मतम् ॥ ५७६ ॥
अवग्रहादिभिर्भिन्नं, बह्वाद्यैरितरैरपि । इन्द्रियाऽनिन्द्रियभवं, मतिज्ञानमुदीरितम् ॥ ५७७ ॥
विस्तृतं बहुधा पूर्वैरङ्गोपाङ्गैः प्रकीर्णकैः । स्याच्छब्दलाञ्छितं ज्ञेयं, श्रुतज्ञानमनेकधा ॥ ५७८ ॥
देवनैरयिकाणां स्यादवधिर्भवसम्भवः । षड्विकल्पस्तु शेषाणां, क्षयोपशमलक्षणः ॥ ५७९ ॥
ऋजुर्विपुल इत्येवं, स्यान्मनःपर्ययो द्विधा । विशुद्ध्यप्रतिपाताभ्यां, तद्विशेषोऽवगम्यताम् ॥ ५८० ॥
अशेषद्रव्यपर्यायविषयं विश्वलोचनम् । अनन्तमेकमत्यक्षं, केवलज्ञानमुच्यते ॥ ५८१ ॥

---

१ सर्प. । २ महानकुलस्य । * संयोगाः स्युर्वियोगान्ताः सं १ ॥ † अयं श्लोकः पा. पुस्तके न दृश्यते ॥
३ जन्तोः । ४ अङ्कस्थापितानाम् ।

रुचिः श्रुतोक्ततत्त्वेषु, सम्यक्श्रद्धानमुच्यते । जायते तन्निसर्गेण, गुरोरधिगमेन वा ॥ ५८२ ॥
तथाह्यनाद्यन्तभवावर्त्तवर्तिषु देहिषु । ज्ञानदृष्ट्यावृतिवेद्यान्तरायाभिधकर्मणाम् ॥ ५८३ ॥
सागरोपमकोटीनां, कोट्यस्त्रिंशत् परा स्थितिः । विंशतिर्गोत्रनाम्नोश्च, मोहनीयस्य सप्ततिः ॥ ५८४ ॥
ततो गिरिसरिद्ग्रावघोलनान्यायतः स्वयम् । क्षीयन्ते सर्वकर्माणि, फलानुभवतः क्रमात् ॥ ५८५ ॥
एकोनत्रिंशदेकोनविंशत्येकोनसप्ततीः । सागराणां कोटिकोटीः, स्थितिमुन्मूल्य कर्मणाम् ॥ ५८६ ॥
देशोनैकावशिष्टाब्धिकोटिकोटौ तु जन्मिनः । यथाप्रवृत्तिकरणाद्, ग्रन्थिदेशं समियूति ॥५८७॥ [युग्मम्]
रागद्वेषपरीणामो, दुर्भेद्यो ग्रन्थिरुच्यते । दुरुच्छेदो दृढतरः, काष्ठादेरिव सर्वदा ॥ ५८८ ॥
तीराभ्यर्णान्महापोता, इव वातसमाहताः । रागादिप्रेरिताः केऽपि, व्यावर्त्तन्ते ततः पुनः ॥ ५८९ ॥
तत्रैव तत्परीणामविशेषादासतेऽपरे । स्खलत्स्खलितगमनान्यम्भांसि सरितामिव ॥ ५९० ॥
अपरे ये पुनर्भव्या, भाविभद्राः शरीरिणः । आविष्कृत्य परं वीर्यमपूर्वकरणेन ते ॥ ५९१ ॥
अतिक्रामन्ति सहसा, तं ग्रन्थिं दुरतिक्रमम् । अतिक्रान्तमहाध्वानो, घट्टभूमिमिवाऽध्वगाः ॥ ५९२ ॥
अथाऽनिवृत्तिकरणादन्तरकरणे कृते । मिथ्यात्वं विरलीकृत्य, चतुर्गतिकजन्तवः ॥ ५९३ ॥
आन्तर्मुहूर्त्तिकं सम्यग्दर्शनं प्राप्नुवन्ति यत् । निसर्गहेतुकमिदं, सम्यक् श्रद्धानमुच्यते ॥ ५९४ ॥ [युग्मम्]
गुरूपदेशमालम्ब्य, भव्यानामिह देहिनाम् । सम्यक् श्रद्धानं तु यत् तद्, भवेदधिगमोद्भवम् ॥ ५९५ ॥

तच्च स्यादौपशमिकं, सास्वादनमथाऽपरम् । क्षायोपशमिकं वेद्यं, क्षायिकं चेति पञ्चधा ॥ ५९६ ॥
तत्रौपशमिकं भिन्नकर्मग्रन्थेः शरीरिणः । सम्यक्त्वलाभे प्रथमेऽन्तर्मुहूर्त्तं प्रजायते ॥ ५९७ ॥
तथोपशान्तमोहस्योपशमश्रेणियोगतः । मोहोपशमजमौपशमिकं तु द्वितीयकम् ॥ ५९८ ॥
त्यक्तसम्यक्त्वभावस्य, मिथ्यात्वाभिमुखस्य च । तथाऽभ्युदीर्णानन्तानुबन्धिकस्य शरीरिणः ॥५९९॥
यः सम्यक्त्वपरीणाम, उत्कर्षेण षडावलिः । जघन्येनैकसमयस्तत् सास्वादनमीरितम् ॥ ६०० ॥
अथ तृतीयं मिथ्यात्वमोहक्षयशमोद्भवम् । सम्यक्त्वपुद्गलोदयपरिणामवतो भवेत् ॥ ६०१ ॥
वेदकं नाम सम्यक्त्वं, क्षपकश्रेणिमीयुषः । अनन्तानुबन्धिनां तु, क्षये जाते शरीरिणः ॥ ६०२ ॥
मिथ्यात्वस्याऽथ मिश्रस्य, सम्यग् जाते परिक्षये । क्षायिकसम्मुखीनस्य, सम्यक्त्वाऽन्त्यांशभोगिनः ॥६०३॥
शुभभावस्य प्रक्षीणसप्तकस्य शरीरिणः । सम्यक्त्वं क्षायिकं नाम, पञ्चम जायते पुनः ॥ ६०४ ॥

सम्यग्दर्शनमेतच्च, गुणतस्त्रिविधं भवेत् । रोचकं दीपकं चैव, कारकं चेति नामतः ॥ ६०५ ॥
तत्र श्रुतोक्ततत्त्वेषु, हेतूदाहरणैर्विना । दृढा या प्रत्ययोत्पत्तिस्तद् रोचकमुदीरितम् ॥ ६०६ ॥
दीपकं तद् यदन्येषामपि सम्यक्त्वदीपकम् । कारकं संयमतपःप्रभृतीनां तु कारकम् ॥ ६०७ ॥

शम-संवेग-निर्वेदा-ऽनुकम्पा-ऽऽस्तिक्यलक्षणैः । लक्षणैः पञ्चभिः सम्यक्, सम्यक्त्वं तत् तु लक्ष्यते ॥६०८॥
अनन्तानुबन्धिकषायाणामनुदयः शमः । स प्रकृत्या कषायाणां, विपाकेक्षणतोऽपि वा ॥ ६०९ ॥
ध्यायतः कर्मविपाकं, संसारासारतामपि । यत् स्याद् विषयवैराग्यं, स संवेग ईरितः ॥ ६१० ॥
संसारवासः कारैव, बन्धनान्येव बन्धवः । ससंवेगस्य चिन्तेयं, या निर्वेदः स उच्यते ॥ ६११ ॥
एकेन्द्रियप्रभृतीनां, सर्वेषामपि देहिनाम् । भवाब्धौ मज्जतां क्लेशं पश्यतो हृदयार्द्रता ॥ ६१२ ॥
तद्दुःखैर्दुःखितत्वं च, तत्प्रतीकारहेतुषु । यथाशक्ति प्रवृत्तिश्चेत्यनुकम्पाऽभिधीयते ॥ ६१३ ॥ [युग्मम्]
तत्त्वान्तराकर्णनेऽपि, या तत्त्वेष्वार्हतेषु तु । प्रतिपत्तिर्निराकाङ्क्षा, तदास्तिक्यमुदीरितम् ॥ ६१४ ॥
सम्यग्दर्शनमित्युक्तं, प्राप्तावस्य क्षणादपि । मत्यज्ञानं पुराऽभूद् यत्, तन्मतिज्ञानतां व्रजेत् ॥ ६१५ ॥
जन्मिनो यच्छ्रुताऽज्ञानं, तच्छ्रुतज्ञानतां भजेत् । विभङ्गज्ञानमवधिज्ञानभावं च गच्छति ॥ ६१६ ॥

सर्वसावद्ययोगानां, त्यागश्चारित्रमिष्यते । कीर्त्तितं तदहिंसादिव्रतभेदेन पञ्चधा ॥ ६१७ ॥

अहिंसा-सूनृता-ऽस्तेय-ब्रह्मचर्या-ऽपरिग्रहाः । पञ्चभिः पञ्चभिर्युक्ता भावनाभिर्विमुक्तये ॥ ६१८ ॥
न यत् प्रमादयोगेन, जीवितव्यपरोपणम्[1] । त्रसानां स्थावराणां च, तदहिंसाव्रतं मतम् ॥ ६१९ ॥
प्रियं पथ्यं वचस्तथ्यं, सूनृतव्रतमुच्यते । तत् तथ्यमपि नो तथ्यमप्रियं चाऽहितं च यत् ॥ ६२० ॥
अनादानमदत्तस्याऽस्तेयव्रतमुदीरितम् । बाह्याः प्राणा नृणामर्थो[2], हरता तं हता हि ते ॥ ६२१ ॥
दिव्यौदारिककामानां, कृताऽनुमतकारितैः । मनोवाक्कायतस्त्यागो, ब्रह्मा[3]ऽष्टादशधोदितम् ॥ ६२२ ॥
सर्वभावेषु मूर्च्छायास्[4]त्यागः स्यादपरिग्रहः । यदसत्स्वपि जायेत, मूर्च्छया चित्तविप्लवः ॥ ६२३ ॥
सर्वात्मना यतीन्द्राणामेतच्चारित्रमीरितम् । यतिधर्मानुरक्तानां, देशतः स्यादगारिणाम् ॥ ६२४ ॥
सम्यक्त्वमूलानि पञ्चाऽणुव्रतानि गुणास्त्रयः । शिक्षापदानि चत्वारि, व्रतानि गृहमेधिनाम्[5] ॥ ६२५ ॥
पङ्गुकुष्ठिकुणित्वादि, दृष्ट्वा हिंसाफलं सुधीः । निरागस्त्रसजन्तूनां, हिंसां सङ्कल्पतस्त्यजेत् ॥ ६२६ ॥
मन्मनत्वं काहलत्वं, मूकत्वं मुखरोगिताम् । वीक्ष्याऽसत्यफलं कन्यालीकाद्यसत्यमुत्सृजेत् ॥ ६२७ ॥
कन्यागोभूम्यलीकानि, न्यासापहरणं तथा । कूटसाक्ष्यं च पञ्चेति, स्थूलासत्यानि सन्त्यजेत् ॥ ६२८ ॥
दौर्भाग्यं प्रेष्यतां दास्यमङ्गच्छेदं दरिद्रताम् । अदत्तात्तफलं ज्ञात्वा, स्थूलस्तेयं विवर्जयेत् ॥ ६२९ ॥
षण्ढत्वमिन्द्रियच्छेदं, वीक्ष्याऽब्रह्मफलं सुधीः । भवेत् स्वदारसन्तुष्टोऽन्यदारान् वा विवर्जयेत् ॥ ६३० ॥
असन्तोषमविश्वासमारम्भं दुःखकारणम् । मत्वा मूर्च्छाफलं कुर्यात्, परिग्रहनियन्त्रणम् ॥ ६३१ ॥
दशस्वपि कृता दिक्षु, यत्र सीमा न लङ्घ्यते । ख्यातं दिग्विरतिरिति, प्रथमं तद् गुणव्रतम् ॥ ६३२ ॥
भोगोपभोगयोः सङ्ख्या, शक्त्या यत्र विधीयते । भोगोपभोगमानं तद्, द्वैतीयीकं गुणव्रतम् ॥ ६३३ ॥
आर्त्त रौद्रमपध्यानं, पापकर्मोपदेशिता । हिंसोपकारिदानं च, प्रमादाचरणं तथा ॥ ६३४ ॥
शरीराद्यर्थदण्डस्य, प्रतिपक्षतया स्थितः । योऽनर्थदण्डस्तत्त्यागस्तृतीयं तु गुणव्रतम् ॥ ६३५ ॥
त्यक्तार्त्तरौद्रध्यानस्य, त्यक्तसावद्यकर्मणः । मुहूर्त्तं समता या तां, विदुः सामायिकव्रतम् ॥ ६३६ ॥
दिग्व्रते परिमाणं यत्, तस्य सङ्क्षेपणं पुनः । दिने रात्रौ च देशावकाशिकव्रतमुच्यते ॥ ६३७ ॥
चतुष्पर्व्यां चतुर्थादि, कुव्यापारनिषेधनम् । ब्रह्मचर्यक्रिया स्नानादित्यागः पौषधव्रतम् ॥ ६३८ ॥
दानं चतुर्विधाहारपात्राच्छादनसद्मनाम् । अतिथिभ्योऽतिथिसंविभागव्रतमुदीरितम् ॥ ६३९ ॥
रत्नत्रयमिदं सम्यग्, यतिभिः श्रावकैरपि । उपासनीयं सततं, निर्वाणप्राप्तिहेतवे ॥ ६४० ॥
आकर्ण्य देशनामेवमुत्थाय भरतात्मजः । ऋषभस्वामिनं नत्वार्षभसेनो व्यजिज्ञपत् ॥ ६४१ ॥
स्वामिन्निह भवारण्ये, कषायदवदारुणे । नव्याम्बुद इवाऽवर्षस्त्वमामृतमनुत्तरम् ॥ ६४२ ॥
तरण्ड इव मज्जद्भिः, प्रपेव च पिपासितैः । कृशानुरिव शीतार्त्तैस्तापार्त्तैरिव पादपः ॥ ६४३ ॥
ध्वान्तमग्नैर्दीप इव, निधिर्दौःस्थ्यस्थितैरिव । विषार्दितैरिव सुधा, रोगितैरिव भेषजम् ॥ ६४४ ॥
विक्रान्तद्विषदाक्रान्तैरिव दुर्गं जगत्पते ! । भवभीतैरसि प्राप्तो, रक्ष रक्ष दयानिधे ! ॥६४५॥[त्रिभिर्विशेषकम्]
पितृभिर्भ्रातृभिर्भ्रातृपुत्रैरन्यैश्च बन्धुभिः । अनाप्तैरिव पर्याप्तं, भवभ्रमणहेतुभिः ॥ ६४६ ॥
जगच्छरण्य ! शरणं, संसारार्णवतारण ! । त्वामेवाऽऽश्रितवानस्मि, दीक्षां देहि प्रसीद मे ॥६४७॥ [युग्मम्]
उक्त्वेति भरतस्याऽन्यैरेकोनैः पञ्चभिः शतैः । पुत्राणां प्राव्रजत् पौत्रसप्तशत्या च सोऽन्वितः* ॥ ६४८ ॥
भर्तुः केवलिमहिमां, क्रियमाणां सुरासुरैः । दृष्ट्वा मरीचिर्भरततनयो व्रतमग्रहीत् ॥ ६४९ ॥
विसृष्टा भरतेशेन, ब्राह्म्यपि व्रतमग्रहीत् । गुरूपदेशः साक्ष्येव, प्रायेण लघुकर्मणाम् ॥ ६५० ॥
विमुक्ता बाहुबलिना, जिघृक्षुः सुन्दरी व्रतम् । भरतेन निषिद्धा तु, श्राविका प्रथमाऽभवत् ॥ ६५१ ॥

---

१ प्राणापहरणम् । २ अर्थम् । ३ ब्रह्मचर्यम् । ४ मोहस्य । ५ गृहस्थानाम् । * पुत्रैः पौत्रसप्तशत्या, चाऽन्वितो व्रतमाददे आ, सं ॥

भरतः स्वामिपादान्ते, श्रावकत्वमशिश्रियत् । न हि भोगफले कर्मण्यभुक्ते भवति व्रतम् ॥ ६५२ ॥
नरतिर्यक्सुरेष्वेके, तदानीं जगृहुर्व्रतम् । श्रावकव्रतमन्ये तु, सम्यक्त्वमपरे पुनः ॥ ६५३ ॥
ते *च कच्छमहाकच्छवर्जं राजन्यतापसाः । आगत्य स्वामिनः पार्श्वे, दीक्षामाददिरे मुदा ॥ ६५४ ॥
साधवः पुण्डरीकाद्याः,साध्व्यो ब्राह्मीपुरस्कृताः। श्रावका भरताद्यास्तु,श्राविकाः सुन्दरीमुखाः॥६५५॥
चतुर्विधस्य सङ्घस्य, व्यवस्थेयं तदाऽभवत् । अद्यापि वर्त्तते सेयं, धर्मस्य परमं गृहम् ॥ ६५६ ॥
तदानीं चतुरशीतेर्गणभृन्नामकर्मणाम् । व्रतिनामृषभसेनप्रभृतीनां सुमेधसाम् ॥ ६५७ ॥
उत्पादो विगमो ध्रौव्यमिति पुण्यां पदत्रयीम् । उद्दिदेश जगन्नाथः, सर्ववाङ्मयमातृकाम् ॥ ६५८ ॥
सचतुर्दशपूर्वाणि, द्वादशाङ्गानि ते क्रमात् । ततो विरचयामासुस्त्रिपद्यनुसारतः ॥ ६५९ ॥
अथाऽऽदाय दिव्यचूर्णपूर्णं स्थालं पुरन्दरः । देवैर्वृतो देवदेवपादान्तं समुपास्थित ॥ ६६० ॥
अथोत्थाय गणभृतां, चूर्णक्षेपं यथाक्रमम् । कुर्वाणः सूत्रेणाऽर्थेन, तथा तदुभयेन च ॥ ६६१ ॥
द्रव्यैर्गुणैः पर्यायैश्च, नयैरपि जगत्पतिः । ददावनुयोगानुज्ञां, गणानुज्ञामपि स्वयम् ॥ ६६२ ॥
ततोऽमरा नरा नार्यो, दुन्दुभिध्वानपूर्वकम् । वासक्षेपं विदधिरे, तेषामुपरि सर्वतः ॥ ६६३ ॥
तस्थुर्गणधरास्तेऽपि, रचिताञ्जलिसम्पुटाः । स्वामिवाचं प्रतीच्छन्तो, मेघाम्भ इव पादपाः ॥ ६६४ ॥
मृगेन्द्रासनमारुह्य, पूर्ववत् पूर्वदिङ्मुखः । अनुशिष्टिमयीं स्वामी, विदधे देशनां पुनः ॥ ६६५ ॥
देशनोद्दामवेलायाः, स्वामिवारिधिजन्मनः । मर्यादायाः प्रतिरूपा, तदाऽपूर्यत पौरुषी ॥ ६६६ ॥

अत्रान्तरे च कलमैरखण्डैर्निस्तुषोज्ज्वलैः । विनिर्मितश्चतुःप्रस्थीप्रमाणः स्थालसंस्थितः ॥ ६६७ ॥
दिविषन्निहितैर्गन्धैर्द्विगुणीकृतसौरभः । प्रधानपुरुषोत्क्षिप्तो, भरतेश्वरकारितः ॥ ६६८ ॥
देवदुन्दुभिनिर्घोषप्रतिघोषितदिङ्मुखः । अन्वीयमानः प्रोद्गीतमङ्गलैर्ललनाजनैः ॥ ६६९ ॥
पौरैः स्वामिप्रभावोत्थपुण्यराशिरिवाऽद्भुतः । पूर्वद्वारेण समवसरणे प्राविशद् बलिः ॥ ६७० ॥
प्रभुं प्रदक्षिणीकृत्य, सोऽक्षिप्यत बलिः पुरः । वप्तुं कल्याणसस्यानामिव बीजमनुत्तमम् ॥ ६७१ ॥
अन्तरिक्षान्निपततोऽन्तरालेऽपि समाददे । तस्याऽर्धममरा मेघपानीयमिव चातकाः ॥ ६७२ ॥
तस्य भूमिगतस्याऽर्धं, जग्राह भरतेश्वरः । शेषं तु गोत्रिण इव, विभज्य जगृहुर्जनाः ॥ ६७३ ॥
पूर्वोत्पन्नाः प्रणश्यन्ति, रोगाः सर्वे नवाः पुनः । षण्मासान् नैव जायन्ते, बलेस्तस्य प्रभावतः ॥ ६७४ ॥

अथोत्थायोत्तरद्वारवर्त्मना निर्ययौ प्रभुः । अन्वीयमानो देवेन्द्रैः, पद्मखण्ड इवाऽलिभिः ॥ ६७५ ॥
रत्नमयस्वर्णमयवप्रयोरन्तरस्थिते । व्यश्राम्यद् भगवान् देवच्छन्द ईशानदिक्स्थिते ॥ ६७६ ॥
तदानीमृषभसेनो, गणभृन्मुख्यमण्डनम् । भगवत्पादपीठस्थो, विदधे धर्मदेशनाम् ॥ ६७७ ॥
स्वामिनः खेदविनोदः, शिष्याणां गुणदीपना । उभयतः प्रत्ययश्च, गणभृद्देशनागुणाः ॥ ६७८ ॥
तस्मिन् गणधरे धर्मदेशनाविरते सति । प्रणम्य स्वामिनं सर्वे, स्थानं निजनिजं ययुः ॥ ६७९ ॥

तीर्थे तत्र समुत्पन्नो, गोमुखो नाम गुह्यकः। वराऽक्षमालाशालिभ्यां, दोर्भ्यां दक्षिणपार्श्वतः ॥६८०॥
मातुलिङ्ग[1]पाशभृद्भ्यां, वामदोर्भ्यां च शोभितः। हेमवर्णो गजरथः, पार्श्वस्थोऽभूत् ततो विभोः॥६८१॥[युग्मम्]
नामतोऽप्रतिचक्रेति, हेमाभा गरुडासना । वरदेषुभृच्चक्रिपाशिभिर्दक्षिणैर्भुजैः ॥ ६८२ ॥

* तु श्वेता ॥ † तदा स्वतः ॥ ‡ यक्षकः. स १ ॥ १ मातुलिङ्ग, 'बीजोर' इति भाषायाम् ।

## चतुर्थः सर्गः ।

इतश्च भरतश्चक्री, विनीतामध्यवर्त्मना । प्रययावायुधागारं, चक्रस्योत्कोऽ[1]तिथेरिव ॥ १ ॥
तदालोकनमात्रेऽपि, प्रणनाम महीपतिः । मन्यन्ते क्षत्रिया ह्यस्त्रं, प्रत्यक्षमधिदैवतम् ॥ २ ॥
रोमहस्तकमादाय, भरतस्तदमार्जयत् । भक्तानां प्रक्रि[2]या ह्येषा, न रत्ने तादृशे रजः ॥ ३ ॥
स्नपयामास तत् तोयैः, पावनैरवनीपतिः । उदयन्तमिव प्राच्यसरित्पतिरहर्पतिम् ॥ ४ ॥
स्थासकान् स्थापयामास, तत्र पूज्यत्वशंसिनः । पृष्ठे धुर्यगजस्येव, राजा गोशीर्षचन्दनैः ॥ ५ ॥
पुष्पैर्गन्धैश्चूर्णवासैर्वासोभिर्भूषणैरपि । नृपस्तत् पूजयामास, साक्षादिव जयश्रियम् ॥ ६ ॥
तस्याऽग्रे तन्दुलै रौप्यैरालिखत् सोऽष्टमङ्गलीम् । पृथक् पृथग् मङ्गलायैवैष्यदष्टककुप्श्रियाम् ॥ ७ ॥
पञ्चवर्णैश्च कुसुमैरुपहारं तदग्रतः । विचित्रचित्रामवनीं, कुर्वाणमकरोन्नृपः ॥ ८ ॥
दिव्यचन्दनकर्पूरप्रायं धूपमथोत्तमम् । नृपः प्रयत्नाच्चक्राग्रे, द्विषद्यश इवाऽदहत् ॥ ९ ॥
त्रिश्च प्रदक्षिणीचक्रे, चक्रं चक्रधरस्ततः । पदान्यपागात् सप्ताष्टान्यवग्रहाद् गुरोरिव ॥ १० ॥
वामं जानु समाकुञ्च्य, दक्षिणं न्यस्य च क्षितौ । राजा चक्रं नमश्चक्रे, तमिव प्रणयी जनः ॥ ११ ॥
तत्रैव च कृतावासश्चक्रस्याऽष्टाहिकोत्सवम् । चकार साकार इव, प्रमोदो मेदिनीपतिः ॥ १२ ॥
चक्रपूजोत्सवश्चक्रे, पौरैरपि महर्द्धिभिः । पूजितैः पूज्यमानो हि, केन केन न पूज्यते ? ॥ १३ ॥

तस्योपयोगमादित्सुश्चक्ररत्नस्य दिग्जयम् । स्नानागारं ययौ राजा, मङ्गलस्नानहेतवे ॥ १४ ॥
विमुक्ताभरणश्रेणिः, शुभस्नानीयवस्त्रभृत् । न्यषदत् प्राङ्मुखस्तत्र, स्नानसिंहासने नृपः ॥ १५ ॥
सुरद्रुपुष्पनिर्यासमयैरिव सुगन्धिभिः । सहस्रपाकप्रमुखैस्तैलैरभ्याञ्जि भूपतिः ॥ १६ ॥
संवाहनाभिर्मांसा-ऽस्थि-त्वग्-रोमसुखहेतुभिः । चतुर्विधाभिस्त्रिविधैर्मृदुमध्यदृढैः करैः ॥ १७ ॥
मर्दनीयामर्दनीयस्थानविज्ञाः कलाविदः । नृपं संवाहयामासुः, संवाहकनरास्ततः ॥ १८ ॥
आदर्शमिव भूपालमम्लानद्युतिभाजनम् । सूक्ष्मेण दिव्यचूर्णेनोद्वर्त्तयामासुराशु ते ॥ १९ ॥
काश्चित् करोद्धृतस्वर्णपयस्कुम्भा वरस्त्रियः । उन्नालनव्यनलिना, इव लावण्यवापयः ॥ २० ॥
स्त्यानीभूय पयांसीव, गतान्याधारतामपाम् । राजतानम्बुकलसान्, बिभ्रत्यः काश्चिदङ्गनाः ॥ २१ ॥
लीलानीलोत्पलभ्रान्तिदायिनश्चारुपाणिषु । इन्द्रनीलपयस्कुम्भान्, दधानाः काश्चन स्त्रियः ॥ २२ ॥
नखरत्नप्रभाजालवर्द्धमानाधिकश्रियः । दिव्यरत्नमयान् कुम्भान्, बिभ्रत्यः सुभ्रुवोऽपराः ॥ २३ ॥
सुगन्धिभिः पवित्राम्बुधाराभिर्धरणीधवम् । क्रमेण स्नपयामासुर्जिनेन्द्रमिव देवताः ॥ २४ ॥
कृतस्नानोऽथ भूपालः, कृतदिव्यविलेपनः । वासोभिः शोभितः शुभ्रैः, ककुब्भासैरिवाऽभितः ॥ २५ ॥
ललाटपट्टे मङ्गल्यं, चान्दनं तिलकं दधन् । यशोद्रुमस्याऽभिनवं, प्ररोहन्तमिवाऽङ्कुरम् ॥ २६ ॥
मुक्तामयानलङ्कारान्, स्वयशःपुञ्जनिर्मलान् । तारकाप्रकरांस्तारांस्तारापथ इवोद्वहन् ॥ २७ ॥
चञ्चन्मरीचिनिचयव्रीडितोडुगमरीचिना । प्रासादः कलसेनेव, किरीटेन विभूषितः ॥ २८ ॥
मुहुरुत्क्षिप्यमाणाभ्यां, वारनारीकराम्बुजैः । कर्णोत्तंसायमानाभ्यां चामराभ्यां विराजितः ॥ २९ ॥
स्वर्णकुम्भभृता श्वेतातपत्रेणोपशोभितः । श्रीसद्मपद्मभृत्पद्मह्रदेन हिमवानिव ॥ ३० ॥
सर्वदा सन्निधानस्थैः, प्रतीहारैरिवाऽभितः । भक्तैः षोडशभिर्यक्षसहस्रैः परिवारितः ॥ ३१ ॥
उत्तुङ्गकुम्भशिखरस्थगितैकदिगाननम् । आरोहद् वासव इवैरावणं रत्नकुञ्जरम् ॥ ३२ ॥

---

१ उत्कण्ठितः । २ प्रमार्जनसाधनविशेषम् । ३ प्रक्रम रीतिर्वा । ४ पूर्वसमुद्रः । ५ 'थापा' इति भाषायाम् । ६ राजानम् ।

स गर्जन्नूर्जितं नागकुञ्जरस्तत्क्षणादभूत् । उद्दाममदधाराभिर्धाराधर इवाऽपरः ॥ ३३ ॥
उत्क्षिप्य पाणीन् कुर्वाणैर्दिवं पल्लवितामिव । युगपद् बन्दिनां वृन्दैश्चक्रे जयजयारवः ॥ ३४ ॥
दुन्दुभिस्ताड्यमानोऽथ, नदन्नुच्चैर्दिशोऽपि हि । नादयामास मुखरैर्गायनो गायनीरिव ॥ ३५ ॥
दूतीभूतानि निःशेषसैनिकाह्वानकर्मणि । प्रणेदुर्वर्यतूर्याणि, मङ्गलान्यपराण्यपि ॥ ३६ ॥
गजैः सिन्दूरभृत्कुम्भैः, सधातुभिरिवाऽद्रिभिः । अश्वैरनेकधाभूतरैवन्ताश्वभ्रमप्रदैः ॥ ३७ ॥
मनोरथैरिव निजैर्विशालैश्च महारथैः । पत्तिभिश्च महौजोभिः, सिंहैरिव वशंवदैः ॥ ३८ ॥
प्रचचाल महीपालः, पूर्वं पूर्वां दिशं प्रति । संव्यानमिव तन्वानः, सैन्योत्थैः पांशुभिर्दिशाम् ॥ ३९ ॥
[ त्रिभिर्विशेषकम् ]

तत्सैन्याग्रेसरं यक्षसहस्राधिष्ठितं ततः । चक्ररत्नमभूद् बिम्बं, भानोरिव नभश्चरम् ॥ ४० ॥
दण्डरत्नधरो वाजिरत्नमारुह्य तत्परः । नाम्ना सुषेणः सेनानीरत्नं चक्रमिवाऽचलत् ॥ ४१ ॥
निःशेषशान्तिकविधौ, शान्तिमन्त्र इवाऽङ्गवान् । पुरोधोरत्नमचलत्, समं वसुमतीभुजा ॥ ४२ ॥
सैन्ये प्रत्याश्रयं दिव्यभोजनापादनक्षमम् । अचालीद् गृहिरत्नं च, सत्रशालेव जङ्गमा ॥ ४३ ॥
स्कन्धावारादि निर्मातुं, विश्वकर्मेव सत्वरम् । अलं वर्धकिरत्नं च, चचाल सह भूभुजा ॥ ४४ ॥
चचाल चर्मरत्नं च, छत्ररत्नमिवाऽद्भुतम् । चक्रिणः सकलस्कन्धावारविस्तारशक्तिमत् ॥ ४५ ॥
रत्ने च मणि-काकिण्यौ, ध्वान्तविध्वंसनक्षमे । सह प्रचेलतुर्भाभिः, सूर्याचन्द्रमसाविव ॥ ४६ ॥
ययौ सह नरेन्द्रेण, खड्गरत्नं च भासुरम् । सुरासुरवरास्त्राणामिव सारैर्विनिर्मितम् ॥ ४७ ॥
ततश्च सचमूचक्रश्चक्रभृद् भरतेश्वरः । प्रतीहारानुग इवाऽगमच्चक्रानुगः पथि ॥ ४८ ॥
पवनेनाऽनुकूलेनाऽनुकूलैः शकुनैरपि । सर्वतो दिग्जयस्तस्याऽशंसि ज्यौतिषिकैरिव ॥ ४९ ॥
विषमं सुषमीचक्रे, सैन्यस्य पुरतो व्रजन् । सेनानीर्दण्डरत्नेन, मतेनेव कृषिः क्षितिम् ॥ ५० ॥
रुरुचे पृतनोद्धूतरजोभिः कृतदुर्दिनम् । रथद्विपपताकाभिर्बलाकाभिरिवाऽम्बरम् ॥ ५१ ॥
अदृश्यमानपर्यन्ता, सा चमूश्चक्रवर्त्तिनः । गङ्गाऽलक्षि द्वितीयेव, सर्वत्राऽप्यस्खलद्गतिः ॥ ५२ ॥
चीत्कृतैः स्यन्दना वाहा, हेषितैर्गर्जितैर्गजाः । अतत्वरन्निवाऽन्योऽन्यं, दिग्जयोत्सवकर्मणे ॥ ५३ ॥
अद्युतन् सादिनां कुन्ताश्चमूत्खाते रजस्यपि । हसन्त इव तच्छन्नान्, दीधितीनुष्णदीधितेः ॥ ५४ ॥
आबद्धमुकुटै रेजे, राजभी राजकुञ्जरः । भक्तिमद्भिर्वृतो गच्छन्, शक्रः सामानिकैरिव ॥ ५५ ॥
गत्वा योजनपर्यन्ते, तच्च चक्रमवास्थित । जज्ञे योजनमानं च, तत्प्रयाणानुमानतः ॥ ५६ ॥
ततो योजनमानेन, प्रयाणेन व्रजन् नृपः । गङ्गाया दक्षिणं कूलं, प्रापत् कतिपयैर्दिनैः ॥ ५७ ॥
नृपोऽपि विपुलां गङ्गापुलिनोर्वीं निरन्तरैः । विविधैः सङ्कटीकुर्वन्नावासैर्विश्रमं व्यधात् ॥ ५८ ॥
क्षरत्करिमदाम्भोभिः, पङ्किला कूलमेदिनी । तदा मन्दाकिनीनद्याः, प्रावृट्काल इवाऽभवत् ॥ ५९ ॥
जाह्नवीस्रोतसि स्वच्छे, स्वच्छन्दं जगृहुस्ततः । वारीणि वारणवरा, वारिधौ वारिदा इव ॥ ६० ॥
अतिपारिप्लवत्वेनोत्प्लवमाना मुहुर्मुहुः । तत्र सस्नुस्तुरङ्गाश्च, तरङ्गभ्रमदायिनः ॥ ६१ ॥
सम्प्रविष्टैः श्रमादन्तर्गजाश्वमहिषोक्षभिः । जातनूतननक्रेव, चक्रे विष्वक् सरिद्वरा ॥ ६२ ॥
अनुकूलयितुं कूलस्थितं नृपमिवाऽञ्जसा । श्रमं गङ्गाऽहरच्चम्वास्तरङ्गोद्धूतसीकरैः ॥ ६३ ॥
महीभुजः सेव्यमाना, महत्या सेनया तया । कृशीबभूव गङ्गाऽपि, सद्यः कीर्तिरिव द्विषाम् ॥ ६४ ॥

---

* जात्यकु° सं १ आ ॥ १ मेघः । † कुर्वाणान् दिवं खता ॥ ‡ बन्दिवृन्देन च° खता सं २ ॥ २ मुख्यगायकः । ३ सूर्याश्वाः । ४ महापराक्रमै । ५ वस्त्रम् । § तत्पुर. स १ ख ॥ ६ दानशाला । ७ देवशिल्पी । ८ सूर्यस्य । ९ तटमेदिनी । १० हस्तिगजाः । ¶ °णवारा सं १ ॥ ११ अतिवेगेन । + °नचक्रेव, खता ॥ १२ मत्स्यविशेषा. । || तदा कतिपयैर्दिनै. सं १ ॥

तत्सैन्यगजराजानामयत्नालानतां ययुः । भागीरथीतीररुहो, देवदारुमहीरुहाः ॥ ६५ ॥
अश्वत्थसल्लकीकर्णिकारोदुम्बरपल्लवान् । लुलुवुः पर्शुभिर्हस्तिकृते हस्तिपकाः क्षणात् ॥ ६६ ॥
कुर्वाणास्तोरणानीवोन्नमितैः कर्णपल्लवैः । विरेजुर्वाजिनो बद्धाः, श्रेणीभूताः सहस्रशः ॥ ६७ ॥
मकुष्ठ-मुद्ग-चणक-यवादीनि जवात् पुरः । बन्धूनामिव निद्धुरश्वानामश्वपालकाः ॥ ६८ ॥
बभूवुः शिबिरे तत्र, चत्वराणि त्रिकाणि च । आपणानां श्रेणयश्च, विनीतायामिव क्षणात् ॥ ६९ ॥
गुप्यद्गुरुस्थूलपटकुटीभिः पटचारुभिः । नाऽस्मरन् पूर्वसौधानां, सुस्थिताः सर्वसैनिकाः ॥ ७० ॥
शमीकर्कन्धुबब्बूलप्रायान् द्रूँन् लिलिहुर्मयाः । दिशन्त इव सैन्यानां, कार्यं कण्टकशोधनम् ॥ ७१ ॥
स्वच्छन्दं जाह्नवीतीरतले सिकतिलेऽलुठन् । भृत्या इव स्वामिनोऽग्रे, वेसराश्चलकेसराः ॥ ७२ ॥
केचिदाजह्रुरेधांसि, सरिदम्भांसि केचन । दूर्वादिभारकान् केचित्, केचिच्छाकफलादिकम् ॥ ७३ ॥
प्रचख्नुश्चुल्लिकाः केचित्, तन्दुलान् केऽप्यखण्डयन् । केचिदज्वालयन्नग्निमपचन् केचिदोदनम् ॥ ७४ ॥
सस्नुः केऽप्येकतस्तत्र, स्वोकसीवोज्ज्वलैर्जलैः । स्नाता धूपैरधूपायन्, केऽप्यात्मानं सुगन्धिभिः ॥ ७५ ॥
केचिद् बुभुजिरे स्वैरं, पुरो भुञ्जानपत्तयः । सँह स्त्रीभिर्विलिलिपुः, केचिदङ्गं विलेपनैः ॥ ७६ ॥
नाऽमंस्त कटकायातं, कोऽप्यात्मानं मनागपि । लीलोपलभ्यसर्वार्थे, शिबिरे चक्रवर्तिनः ॥ ७७ ॥
अहोरात्रे व्यतिक्रान्ते, तस्मिन् पुनरपि प्रगे । चक्ररत्नं जगामैकं, योजनं चक्रवर्त्यपि ॥ ७८ ॥
एवं योजनमानेन, प्रयाणेन दिने दिने । गच्छंश्चक्रानुगश्चक्री, मागधं तीर्थमासदत् ॥ ७९ ॥
नवयोजनविस्तारं, दैर्घ्ये द्वादशयोजनम् । पूर्वाब्धिरोधसि नृपः, स्कन्धावारं न्यवीविशत् ॥ ८० ॥
आवासान् सर्वसैन्यानां, तत्र व्यधित वर्द्धकिः । एकां पौषधशालां च, शालां धर्मैकदन्तिनः ॥ ८१ ॥
राजा पौषधशालायामनुष्ठानविधित्सया । उत्ततार करिस्कन्धात्, पर्वतादिव केसरी ॥ ८२ ॥
तत्र संस्तारयामास, दर्भसंस्तारकं नवम् । राजा संयमसाम्राज्यलक्ष्मीसिंहासनोपमम् ॥ ८३ ॥
मागधतीर्थकुमारं, देवं मनसि कृत्य सः । प्रपेदेऽष्टमभक्तं, सोऽर्थसिद्धिद्वारमादिमम् ॥ ८४ ॥
स धौतांशुकभृत् त्यक्तनेपथ्यस्रग्विलेपनः । त्यक्तशस्त्रः पुण्यपोषैकपथं पौषधमाददे ॥ ८५ ॥
दर्भसंस्तारके तस्मिन्, प्रतिजाग्रन् स पौषधम् । निष्क्रियो नृपतिस्तस्थौ, सिद्धः सद इवाऽव्यये ॥ ८६ ॥
अष्टमान्ते नृपः पूर्णपौषधः पौषधौकसः । सान्द्राभ्रादिवाऽऽदित्यो, नियमाधिकद्युतिः ॥ ८७ ॥
राजा सर्वार्थनिष्णातः, स्नातो बलिविधिं व्यधात् । यथाविधि विधिज्ञा हि, विस्मरन्ति विधिं न हि ॥८८॥
उत्पताकध्वजस्तम्भं, प्रासादमिव जङ्गमम् । शस्त्रागारमिवाऽनेकशस्त्रश्रेणिविभूषितम् ॥ ८९ ॥
चतुर्दिग्विजयश्रीणामिवाऽऽह्वानार्थमुच्चकैः । टणत्कारकृता घण्टाश्चतस्रश्चारु बिभ्रतम् ॥ ९० ॥
पवनैरिव जङ्घालैर्धीरैः पञ्चाननैरिव । अश्वैः सनाथमध्यास्त, स रथं रथिनां वरः ॥ ९१ ॥
[ त्रिभिर्विशेषकम् ]
राज्ञो भावविशेषज्ञो, वासवस्येव मातलिः । तुनोद सारथी रथ्यान्, रश्मिचालनमात्रतः ॥ ९२ ॥
महाकरिगिरिस्तोमो, महानौमकरोत्करः । विलोलहयकल्लोलश्चित्रशस्त्राऽहिभीषणः ॥ ९३ ॥
उच्छलद्भूरजोवेलो रथनिर्घोषगर्जितः । द्वितीय इव पाथोधिः, पाथोधिं प्रत्यगान्नृपः ॥ ९४ ॥ [ युग्मम् ]
संवर्द्धिताम्बुनिर्घोषत्रस्तनक्रकुलारवैः । नाभिदघ्नं रथेनाऽम्भोऽम्भोनिधेः सोऽभ्यगाहत ॥ ९५ ॥
न्यस्यैकं लस्तके हस्तं, द्वितीयं त्वटनीतटे । सोऽधिज्यं विदधे धन्व, पञ्चमीन्दुविडम्बकम् ॥ ९६ ॥
पाणिना किञ्चिदाकृष्य, धनुर्ज्यां भरतेश्वरः । धनुर्वेदोङ्कारमिवोच्चैष्टङ्कारमकारयत् ॥ ९७ ॥

---

१ महामात्राः । २ धान्यकणविशेषाः । ३ वृक्षान् । ४ उष्ट्राः । ५ सिकतामये । ° सनारीका वि° स ०, आ ॥
६ प्रातःकाले । ७ शिबिरम् । ८ मोक्षे । ९ त्रस्तमकरकुलशब्दैः । १० नाभिप्रमाणम् । ११ धनुर्मध्यभागे । १२ ज्यारोपणस्थाने ।

पातालद्वारनिर्गच्छन्नागराजानुहारकम् । इषुधेराचकर्षेषुं, निजनामाङ्कितं नृपः ॥ ९८ ॥
सिंहकर्णिकया मुष्ट्या, धृत्वा पुङ्खाग्रभागके । शिञ्जिन्यां निदधे बाणं, वज्रदण्डमरातिषु ॥ ९९ ॥
सौवर्णकर्णताडङ्कपद्मनालतुलास्पृशम् । आकर्णान्तं स आकर्षत्, काञ्चनं तं शिलीमुखम् ॥ १०० ॥
प्रसरद्भिर्महीभर्तुर्नखरत्नमरीचिभिः । शुशुभे स महाबाणः, सोदरैरिव वेष्टितः ॥ १०१ ॥
आकृष्टकार्मुकान्तःस्थो, दीप्यमानः स सायकः । व्योत्तान्तकमुखप्रेङ्खज्जिह्वालीलामुपाददे ॥ १०२ ॥
धनुर्मण्डलमध्यस्थः, स मध्यमजगत्पतिः । *शुशुभे परिवेषान्तर्भानुमानिव दारुणः ॥ १०३ ॥
चालयिष्यति किं स्थानान्निग्रहीष्यत्यथैष माम् ? । इतीव चुक्षोभ तदा, सर्वतो लवणाम्बुधिः ॥१०४॥
अथोर्वीशो बहिर्मध्ये, मुखे पुङ्खे च सर्वदा । नागासुरसुपर्णादिदेवताभिरधिष्ठितम् ॥ १०५ ॥
आज्ञाकरं दूतमिव, शिक्षाक्षरभयानकम् । अभि मागधतीर्थेशं, विससर्ज शिलीमुखम् ॥१०६॥ [युग्मम्]
उद्दामपक्षत्कारवाचालितनभोङ्गणः । निर्ययौ तत्क्षणं वेगात्, स पत्री पत्रिराडिव ॥ १०७ ॥
विद्युद्दण्ड इवाऽम्भोदादुल्काग्निर्गगनादिव । स्फुलिङ्ग इव सप्तार्चेर्लेश्यार्चिरिव तापसात् ॥ १०८ ॥
†शिखीव सूर्योपलतो, वज्रं वज्रिभुजादिव । निष्पतन्नृपकोदण्डादशोभत स सायकः ॥१०९॥ [सन्दानितकम्]
योजनानि द्वादशाऽतिक्रम्य पत्री क्षणेन सः । सभायां मागधेशस्य, हृदि शल्यमिवाऽपतत् ॥११०॥
अकाण्डकाण्डपातेन तेन मागधतीर्थराट् । उच्चैश्चुकोप दण्डाभिघट्टनेनेव पन्नगः ॥ १११ ॥
वक्रीकुर्वन् भ्रुवोर्युग्मं, कोदण्डमिव दारुणम् । दधानश्चक्षुषी ताम्रे, दीप्ताग्निविशिखाविव ॥ ११२ ॥
भस्त्रापुटे इवोत्फुल्लीकुर्वाणो नासिकापुटे । स्फोरयन्नधरदलं, तक्षकाहेरिवाऽनुजम् ॥ ११३ ॥
ललाटे घटयन् लेखाः, केतूनिव नभस्तले । गृह्णन् दक्षिणहस्तेन, वांत्रिकोऽहिमिवाऽऽयुधम् ॥ ११४ ॥
ताडयन्नासनं वामहस्तेनाऽरिकपोलवत् । वाचं विषार्चिःसध्रीचीमित्यूचे मागधाधिपः ॥ ११५ ॥
[ चतुर्भिः कलापकम् ]
ऐरावणरदांश्छित्त्वा, कस्ताडङ्कान् चिकीर्षति ? । सौपर्णेयस्य कः पक्षैरवतंसान् विधित्सति ? ॥ ११६ ॥
कः पन्नगपतेर्मौलिमणिमालां जिघृक्षति ? । सहस्रदीधितेः को वा, हयानपि जिहीर्षति ? ॥ ११७ ॥
अप्रार्थितप्रार्थकः को, वीरमान्यविमृश्यकृत् ? । अस्माकमस्मिन् सदसि, प्रचिक्षेप शरं कुधीः ? ॥ ११८ ॥
सुपर्ण इव सर्पस्य, दर्पं तस्य हराम्यहम् । एवं ब्रुवाणो रभसादुत्तस्थौ मागधाधिपः ॥ ११९ ॥
बिलादिवोरगं कोशात्, खड्गदण्डं चकर्ष सः । कम्पयामास च व्योम्नि, धूमकेतुभ्रमप्रदम् ॥ १२० ॥
वार्धिवेलेव दुर्वारः, परिवारोऽपि तत्क्षणम् । युगपत् सकलोऽप्यस्य, सकोपाटोपमुत्थितः ॥ १२१ ॥
खड्गैः केचिद् दिवं चक्रुः, कृष्णविद्युन्मयीमिव । वसुनन्दैश्च विशदैरनेकेन्दुमयीमिव ॥ १२२ ॥
नितान्तनिशितान् कुन्तान्, खे केचिदुदलालयन् । कृतान्तदन्तशकलश्रेणीभिरिव निर्मितान् ॥ १२३ ॥
परशून् केचिदुज्जह्रुर्वह्निजिह्वासहोदरान् । स्वर्भानुभीमपर्यन्तान्, जगृहुः केऽपि मुद्गरान् ॥ १२४ ॥
वज्रकोट्युत्कटान्यन्ये, शूलान्याददिरे करे । अपरे दण्डभृद्दण्डचण्डान् दण्डानुदक्षिपन् ॥ १२५ ॥
चक्रुः केऽपि करास्फोटं, वैरिविस्फोटकारणम् । क्ष्वेडानादं व्यधुः केऽपि, मेघनादमिवोर्जितम् ॥ १२६ ॥
केचिज्जहि जहीत्यूचुः, केचिद् धर धरेति च । तिष्ठ तिष्ठेति केचिच्च, याहि याहीति केचन ॥ १२७ ॥
इत्यभूच्चित्रसंरम्भचेष्टो यावत् परिच्छदः । तस्य तावदमात्यस्तं, सम्यग् बाणं ‡न्यरूपयत् ॥ १२८ ॥

---

१ धनुर्गुणे । २ प्रसारितयममुखचलजिह्वालीलाम् । ३ पृथ्वीपति. । * चकाशे खंता ॥ ४ मण्डलान्त स्थित· सूर्य इव । ५ गरुडः । ६ अभ्रे. । † सूर्यकान्तादिव शिखी व° खंता ॥ ७ अग्नि. । ८ अकस्माद् बाणपातेन । ९ दण्डताडनेन । १० गारुडिक. । ११ विषज्वालातुल्याम् । १२ कर्णभूषणविशेषान् । १३ अविचार्यकारी । १४ दरात् । ५ युद्धसाधनविशेषैः । १६ राहुः । ‡ न्यभालयत् खंता ॥

महासाराण्युदाराणि, तत्र पत्रिणि मन्त्रिराट् । दीव्यमन्त्राक्षराणीवेत्यक्षराणि व्यलोकयत् ॥ १२९ ॥
राज्येन यदि वः कार्यं, जीवितव्येन वा यदि । ततः सेवां कुरुध्वं नः, स्वसर्वस्वोपढौकनात् ॥ १३० ॥
इत्यादिशति वः साक्षात्, सुरासुरनरेशितुः । ऋषभस्वामिनः सूनुर्भरतश्चक्रवर्त्त्ययम् ॥ १३१ ॥
मन्त्री दृष्ट्वाऽक्षराण्येवं, विज्ञायाऽवधिना च तत् । दर्शयन् स्वामिनो बाणमुच्चकैरित्यवोचत ॥ १३२ ॥
भो भोः सर्वे राजलोका!, धिग् वो रभसकारिणः[1] । स्वामिनोऽर्थधियाऽनर्थदायिनो भक्तमानिनः ॥१३३॥
भरतो भरतक्षेत्रे, प्रथमश्चक्रवर्त्त्यभूत् । सूनुः प्रथमतीर्थेशऋषभस्वामिनो ह्ययम् ॥ १३४ ॥
स एष याचते दण्डं, दिधारयिषते[2] च वः । पाकशासनवच्चण्डशासनः[3] शासनं निजम् ॥ १३५ ॥
अपि शोष्येत पाथोधिर्मेरुरप्युद्भ्रियेत च । कृतान्तोऽपि निहन्येतोत्क्षिप्येताऽपि वसुन्धरा ॥ १३६ ॥
दम्भोलिरपि दल्येत, विध्याप्येताऽपि वाडवः । कथञ्चन न जीयेत, चक्रवर्त्ती महीतले ॥१३७॥ [युग्मम्]
देवाऽयं वार्यतां लोकः, स्तोकधीर्धीमतांवरः । प्रगुणीक्रियतां दण्डश्चक्रिणे प्रणतो भव ॥ १३८ ॥
आकर्ण्य मन्त्रिवाचं तां, दृष्ट्वा तान्यक्षराणि च । गन्धेभगन्धमाघ्राय, करीव प्रशशाम सः ॥ १३९ ॥
उपायनमुपादाय, तं चेषुं मागधाधिपः । उपेत्य भरताधीशं, नत्वा चैवं व्यजिज्ञपत् ॥ १४० ॥
दिष्ट्या दृष्टिपथं प्राप्तोऽस्यधुना मम भूपते! । स्वामिन्! कुमुदखण्डस्य, शशाङ्क इव पार्वणः ॥ १४१ ॥
भगवानृषभस्वामी, प्रथमस्तीर्थकृद् यथा । प्रथमश्चक्रवर्ती त्वं, तथा विजयसे भुवि ॥ १४२ ॥
सुरेभस्य प्रतीभः को?, वायोः प्रतिबली च कः? । नभसः प्रतिमानं कः?, प्रतिमल्लश्च तेऽस्तु कः? ॥१४३॥
आकर्णाकृष्टकोदण्डान्निर्यातं ते शिलीमुखम् । अलम्भविष्णुः कः सोढुं, बिडौजस इवाऽशनिम्? ॥ १४४॥
प्रसादं कुर्वता त्वेष, प्रमत्तस्य मम त्वया । कर्त्तव्यज्ञापनायेषुः, प्रैषि वेत्रिपुमानिव ॥ १४५ ॥
अतः परमहं नाथ!, महीनाथशिरोमणे! । शिरोमणिमिवाऽऽज्ञां ते, धारयिष्यामि[4] मूर्धनि ॥ १४६ ॥
स्वामिन्! मागधतीर्थेऽस्मिन्, स्थास्याम्यारोपितस्त्वया । तवैव प्राग्जयस्तम्भ, इव निर्दम्भभक्तिभाक् ॥१४७॥
एते वयमिदं राज्यमेष सर्वः परिच्छदः । त्वदीयमेवाऽन्यदपि, शाधि नः पूर्वपत्तिवत् ॥ १४८ ॥
इत्युक्त्वा सोऽर्पयामास, चक्रिणे पत्रिणं सुरः । तच्च मागधतीर्थाम्भः, किरीटं कुण्डले अपि ॥ १४९ ॥
तच्च राजा प्रतीयेष, मागधाधिपतिं च तम् । सच्चकार महान्तो हि, सेवोपनतवत्सलाः ॥ १५० ॥
अथो रथं वालयित्वा, पथा तेनैव पार्थिवः । स्कन्धावारं निजमगात्, सुत्रामेवाऽमरावतीम् ॥ १५१ ॥
अवरुह्य रथादङ्गं, प्रक्षाल्य सपरिच्छदः । चक्रेऽष्टमभक्तान्तपारणं भरतेश्वरः ॥ १५२ ॥
तदा मागधनाथस्य, महर्द्ध्या वसुधाधवः । चक्रस्येवोपनतस्य, विदधेऽष्टाहिकोत्सवम् ॥ १५३ ॥
आदित्यस्यन्दनस्थमिव तेजोभिरुल्बणम् । अष्टाहिकोत्सवान्ते च, चक्ररत्नं चचाल खे ॥ १५४ ॥
दक्षिणस्यां वरदामतीर्थं प्रति ययौ ततः । चक्रं तच्चक्रवर्ती च, धातुं प्रादिरिवाऽन्वगात् ॥ १५५ ॥
प्रयाणैः प्रत्यहं गच्छन्, राजा योजनमात्रकैः । दक्षिणाब्धिं क्रमात् प्राप, मानसं राजहंसवत् ॥ १५६ ॥
एलालवङ्गलवलीकक्कोलबहुले नृपः । सैन्यान्यावासयामास दक्षिणाम्भोधिरोधसि ॥ १५७ ॥
आवासान् सर्वसैन्यस्य, पौषधौकश्च वर्द्धकिः । पूर्ववद् रचयामास शासनाच्चक्रवर्तिनः ॥ १५८ ॥
वरदामामरं चित्ते, कृत्वाऽष्टमतपोऽकरोत् । नृपतिः पौषधागारे, पौषधं च समाददे ॥ १५९ ॥
पौषधान्ते बहिर्भूत्वा, नृपः पौषधवेश्मनः । उपाददे धनुः कालपृष्ठं श्रेष्ठो धनुर्भृताम् ॥ १६० ॥
सर्वतः स्वर्णरचितं, खचितं रत्नकोटिभिः । आरुरोह रथं राजा, वासागारं जयश्रियः ॥ १६१ ॥
अधिष्ठितो नृदेवेनाऽत्युदाराकारधारिणा । प्रासाद इव देवेन, शुशुभे स महारथः ॥ १६२ ॥
अनुकूलमरुल्लोलपताकामण्डिताम्बरः । स स्यन्दनवरोऽम्भोधौ, यानपात्रमिवाविशत् ॥ १६३ ॥

---

१ साहसकारिणः । २ धारयितुमिच्छति । ३ इन्द्रवत् । ४ वक्ष्यामि । ५ अल्पबुद्धि ।

रथाङ्गनाभिद्वयसं, गत्वा जलनिधेर्जलम् । रथस्तस्थौ रथाग्रस्थसारथिस्खलितैर्हयैः ॥ १६४ ॥
अन्तेवासिनमाचार्य, इव विश्वम्भरापतिः । आनतीकृत्य विदधेऽधिगुणं विशिखासनम् ॥ १६५ ॥
सङ्ग्रामनाटकारम्भनान्दीनिर्घोषमुच्चकैः । आह्वानमन्त्रं कालस्य, ज्याटङ्कारं चकार सः ॥ १६६ ॥
आकृष्य बाणधेर्बाणं, न्यधाद् बाणासने नृपः । भालान्तरालरचिततिलकश्रीमलिम्लुचम् ॥ १६७ ॥
वक्रीकृतस्य धनुषो, मध्ये धूभ्रमदायिनम् । शिलीमुखं महीनाथः, कर्णजाहमुपानयत् ॥ १६८ ॥
किं करोमीति विज्ञीप्सुमिव कर्णान्तमागतम् । विससर्ज शरं राजा, वरदामाधिपं प्रति ॥ १६९ ॥
शैलैः पतत्पविभ्रान्त्या, तार्क्ष्यभ्रान्त्या च पन्नगैः । अब्धिना चाऽपरौर्वाग्निभ्रान्त्या सभयमीक्षितः ॥१७०॥
गगनं द्योतयन्नुच्चैर्गत्वा द्वादशयोजनीम् । बाणः सोऽपतदुल्केव, वरदामेशपर्षदि ॥ १७१ ॥ [ युग्मम् ]
विद्विषत्प्रेषितं घातकारं नरमिवाऽग्रतः । पतितं प्रेक्ष्य तं बाणं, चुकोप वरदामराट् ॥ १७२ ॥
उद्वेल इव पाथोधिरुद्भ्रान्तभ्रूतरङ्गितः । उद्दामां वरदामेशो, वाचमेवमवोचत ॥ १७३ ॥
केनाऽद्य केसरी सुप्तः, पदा स्पृष्ट्वा प्रबोधितः ? । कस्य वाचयितुं पत्रमद्योदक्षेपि मृत्युना ? ॥ १७४ ॥
कुष्ठीवोत्पन्नवैराग्यो, जीवितव्यस्य कोऽथवा ? । चिक्षेप यो रभसया, मम पर्षदि पत्रिणम् ॥ १७५ ॥
तमनेनैव बाणेन, हन्मीति वरदामराट् । उत्थाय पाणिना बाणं, तं कोपग्रहिलोऽग्रहीत् ॥ १७६ ॥
मागधाधीश्वर इव, वरदामेश्वरस्ततः । तानि तत्राऽक्षराणीक्षाञ्चक्रे पत्रिणि चक्रिणः ॥ १७७ ॥
तान्यक्षराणि सम्प्रेक्ष्याऽहिर्नागदमनीमिव । वरदामपतिः सद्योऽप्यशाम्यदिति चाऽब्रवीत् ॥ १७८ ॥
मण्डूकं इव कृष्णाहेश्चपेटां दातुमुद्यतः । प्रजिहीर्षुर्विषाणाभ्यामुरभ्रं इव दन्तिनः ॥ १७९ ॥
पिपातयिषुरुर्वीध्रं, दशनाभ्यामिव द्विपः । मन्दधीर्भरतेनाऽस्मि, युयुत्सुश्चक्रवर्तिना ॥ १८० ॥
भक्त्वद्यापि नो किञ्चिद्, विनष्टमिति स ब्रुवन् । उपायनान्युपानेतुं, दिव्यानि स्वान् समादिशत् ॥१८१॥
ततस्तं शरमादाय, प्राभृतान्यद्भुतानि च । आर्षभिं सोऽभ्यगादिन्द्र, इव श्रीऋषभध्वजम् ॥१८२॥
स नत्वा तमुवाचैवमद्य क्ष्मापुरुहूत ! ते । दूतेनेव समाहूतः, पत्रिणाऽहमिहाऽऽगमम् ॥ १८३ ॥
स्वामिहाऽऽयातमुर्वीश !, न स्वयं यदुपागमम् । सहस्व मे तदज्ञस्य, निह्नुते दोषमज्ञता ॥ १८४ ॥
श्रान्तेनेवाऽऽश्रमः पूर्ण, तृषितेनेव पल्वलम् । स्वामिन्नस्वामिना स्वामी, मया प्राप्तोऽसि सम्प्रति ॥१८५॥
अद्य प्रभृति भूनाथ !, स्थापितोऽहमिह त्वया । स्थास्यामि भवतो वेलाधरो गिरिरिवोदधेः ॥ १८६ ॥
इत्युक्त्वा भरतेशाय, निर्भरं भक्तिभागसौ । अर्पयामास तं बाणं, न्यासीकृतमिवाऽग्रतः ॥ १८७ ॥
कटीसूत्रं रत्नमयं, रोचीरोचितदिङ्मुखम् । राज्ञः सोऽदात् तिग्मरोची रोचिर्भिरिव गुम्फितम् ॥ १८८ ॥
पुरतो भरतेशस्य, ढौकयामास चोज्ज्वलम् । मुक्काराशिं यशोराशिमिव स्वं चिरसञ्चितम् ॥ १८९ ॥
महीपतेरुपदादावदात्तोद्यतद्युतिम् । रत्नाकरस्य सर्वस्वमिव रत्नोत्करं च सः ॥ १९० ॥
तत् सर्वमग्रहीद् राजाऽन्वग्रहीद् वरदामपम् । अस्थापयच्च तत्रैव, तं [11]कीर्त्तनमिव स्वकम् ॥ १९१ ॥
वरदामेशमाभाष्य, सप्रसादं विसृज्य च । जगाम जगतीनाथो, विजयी शिबिरं निजम् ॥ १९२ ॥
अवतीर्य रथात् स्नात्वाऽष्टमभक्तान्तपारणम् । चक्रे समं परिजनैः, स राजरजनीकरः[12] ॥ १९३ ॥
वरदामाधिपस्याऽथ, स चक्रेऽष्टाह्निकोत्सवम् । लोके महत्त्वदानाय, [13]महन्त्यात्मीयमीश्वराः ॥ १९४ ॥
प्रति प्रतीचीं प्राचीन[14]बर्हिरन्य इवौजसा । चक्री चक्रानुगोऽचालीत्, प्रभासाभिमुखं ततः ॥१९५॥
पूरयन् रोदसी[15]रन्ध्रं, [16]नीरन्ध्रैः सैन्यरेणुभिः । स प्रयाणैः कतिपयैः, पयोधिं प्राप पश्चिमम् ॥ १९६ ॥

---

१ धुरा । २ कर्णपर्यन्तम् । ३ अन्यवडवाग्निभ्रान्त्या । ४ भेकः । ५ शृङ्गाभ्याम् । ६ मेषः । ७ पर्वतम् । ८ भरतम् । ९ हे पृथ्वीन्द्र ! । १० लघुजलाशयः । ११ कीर्तिकारकमिव । १२ राजचन्द्र । १३ पूजयन्ति । १४ वृन्दः । १५ द्यावाभूमी । १६ घनैः ।

ततः क्रमुकताम्बूलीनालिकेरीवनाकुले । स्कन्धावारं विनिदधे, स रोधस्यपरोदधेः ॥ १९७ ॥
प्रभासनाथमुद्दिश्याऽष्टमभक्तं व्यधात् ततः । राजा जग्राह च प्राग्वत्, पौषधं पौषधौकसि ॥ १९८ ॥
पौषधान्ते समारुह्य, स्यन्दनं मेदिनीपतिः । प्रविवेश पयोराशिं, पाशपाणिरिवाऽपरः ॥ १९९ ॥
अतिक्रम्य जलं चक्रनाभिदघ्नं महीपतिः । स्यन्दनं धारयामासाऽधिज्यं च विदधे धनुः ॥ २०० ॥
जयश्रीकेलिवल्लक्या, धनुर्यष्टेर्विशांपतिः । पाणिना वादयामास, मौर्वी तन्त्रीमिवोच्चकैः ॥ २०१ ॥
शरं चकर्ष शरधेर्नीरधेर्वेत्रदण्डवत् । आसयच्च नृपो बाणासनेऽतिथिमिवाऽऽसने ॥ २०२ ॥
ततः प्रभासाभिमुखं, तं चिक्षेप शिलीमुखम् । आदित्यबिम्बादाकृष्टमिवैकं किरणं नृपः ॥ २०३ ॥
वेगाद् वायुरिवोल्लङ्घ्य, वार्द्धेर्द्वादशयोजनीम् । द्यां भाभिर्भासयन् प्राप, स प्रभासेशवेश्मनि ॥ २०४ ॥
क्रुद्धः सोऽपि शरं प्रेक्ष्य, प्रेक्ष्य तत्राऽक्षराणि च । सद्योऽशाम्यन्नट इव, प्रादुष्कृतरसान्तरः ॥ २०५ ॥
तं पत्रिणमुपादायोपदामप्यपरां स्वयम् । ययौ भूपं प्रभासेशो, नत्वा चैवं व्यजिज्ञपत् ॥ २०६ ॥
अद्य देव ! प्रभासोऽस्मि, भासितः स्वामिना त्वया । रवेः करैः कमलानि, कमलानि भवन्ति हि ॥२०७॥
एष प्रत्यग्दिगन्तस्थः, सामन्त इव ते प्रभो ! । सर्वदा शासनं मूर्ध्ना, धास्याम्यवनिशासन ! ॥ २०८ ॥
इत्युक्त्वा भरतेशस्य, तमादौ प्रहितं शरम् । खल्लूरिकापत्तिरिव, प्रभासपतिरार्पयत् ॥ २०९ ॥
कटकानि कटीसूत्रं, चूडामणिमुरोमणिम् । निष्कादि चाऽर्पयद् राज्ञे, मूर्त्तं तेज इव स्वकम् ॥ २१० ॥
तस्याऽऽश्वासकृते सर्वं तदुर्वीपतिरग्रहीत् । प्रभोः प्रसादचिह्नं हि प्राभृताऽऽदानमग्रिमम् ॥ २११ ॥
तत्रैव स्थापयित्वा तमस्वाल इव सादरम् । स आययौ पुनः स्कन्धावारं वैरिनिवारणः ॥ २१२ ॥
तत्कालं गृहिरत्नेन, कल्पवृक्षनिरूढैः सः । उपनीतैर्दिव्यभोज्यैर्विदधेऽष्टमपारणम् ॥ २१३ ॥
नृपः प्रभासदेवस्य, चक्रे चाऽष्टाह्निकोत्सवम् । आदौ सामन्तमात्रस्याऽप्युचिताः प्रतिपत्तयः ॥ २१४ ॥
अनुदीपमिवाऽऽलोकोऽनुचक्रं भूपतिर्ययौ । ततः सिन्धोर्महासिन्धो, रोधः प्राप च दक्षिणम् ॥२१५॥
पूर्वाभिमुखमुर्वीशो, गत्वा तेनैव रोधसा । निकषा सिन्धुसदनं, स्कन्धागारं न्यवीविशत् ॥ २१६ ॥
अष्टमं विदधे तत्र, सिन्धुं मनसिकृत्य सः । आसनं सिन्धुदेव्याश्चाऽचलद् वाताहतोर्मिवत् ॥ २१७ ॥
ततः साऽवधिनाऽज्ञासीदायातं चक्रवर्त्तिनम् । प्रभूतैः प्राभृतैर्दिव्यैस्तं चाऽर्चितुमुपाययौ ॥ २१८ ॥
ततो जयजयेत्याशीःपूर्वकं सा नभःस्थिता । इत्यूचेऽत्राऽस्मि ते चक्रिन् !, किङ्करी करवाणि किम् ? ॥२१९॥
श्रीदेव्या इव सर्वस्वं, निधानमिव सन्ततिम् । साऽष्टोत्तरं रत्नकुम्भसहस्रं भभुजे ददौ ॥ २२० ॥
महोद्वोढुं प्रकृतयोरिव कीर्त्तिजयश्रियोः । योग्ये नृपतयेऽयच्छद्, रत्नभद्रासने च सा ॥ २२१ ॥
नागराजशिरोरत्नान्युद्धृत्येव विनिर्मितान् । दीप्ररत्नमयान् राज्ञे, सा ददौ बाहुरक्षकान् ॥ २२२ ॥
मध्योत्कीर्णार्कबिम्बाभानदत्त कटकांश्च सा । मृदूनि मुष्टिग्राह्याणि, दिव्यानि वसनानि च ॥ २२३ ॥
तत्सर्वं प्रतिजग्राह, स सिन्धोः सिन्धुराडिव । तां स प्रसादालपनः, प्रमोद्य विससर्ज च ॥ २२४ ॥
अथाऽभिनवराकेन्दुसोदरे स्वर्णभाजने । चकारऽष्टमभक्तान्तभोजनं भूभुजा विभुः ॥ २२५ ॥
सिन्धुदेव्या नरदेवो, विदधेऽष्टाह्निकोत्सवम् । दृश्यमानपथश्चक्रेणाऽग्रेणेव चचाल च ॥ २२६ ॥
दिशोदक्पूर्वया गच्छन्, क्रमेण भरतेश्वरः । भरतार्द्धद्वयाघाटं, प्राप वैताढ्यपर्वतम् ॥ २२७ ॥
नितम्बे दक्षिणे तस्य, स्कन्धावारं न्यवीविशत् । अन्तरीयमिव क्ष्मापो, विस्तारायामशोभिनम् ॥ २२८ ॥
चकाराऽष्टमभक्तं च तत्र विश्वम्भरापतिः । वैताढ्याद्रिकुमारस्य, प्रयकम्पिष्ट चाऽऽसनम् ॥२२९॥

१ पूगवृक्षा । २ पश्चिमसमुद्रस्य । ३ वरुण । ४ रथ द्वयनाभिप्रमाणम् । ५ जयलक्ष्मीक्रीडावीणया । ६ निषङ्गात् । ७ वृक्षविशेष । ८ शस्त्राभ्यासभूमि । ९ वक्ष स्थलमणिम् । १० दीनारादि । ११ उपायनग्रहणम् । १२ कल्पवृक्षेण । १३ सत्कारा । १४ समीपे । १५ अभिनवपूर्णिमाचन्द्रसदृशे । १६ अग्रगामिना । १७ भरतार्द्धद्वयसीमानम् । १८ पृथ्वीपति. ।

उत्पन्नो भरतक्षेत्रे, प्रथमश्चक्रवर्त्यसौ । इत्यज्ञासीदवधिना, वैताढ्याद्रिकुमारकः ॥ २३० ॥
अथाऽभ्यगात् स भरतं, व्योमस्थश्चाऽब्रवीदिदम् । प्रभो ! जय जयैषोऽस्मि, सेवकस्ते प्रशाधि माम् २३१
स महार्घ्याणि रत्नानि, रत्नालङ्करणानि च । देवदूष्याणि च राज्ञे, कोशायुक्त इवाऽऽर्पयत् ॥ २३२ ॥
भद्रासनानि भद्राणि, भूयांस्यवनिशासिने । प्रतापसम्पदः क्रीडावेश्मानि विततार सः ॥ २३३ ॥
तस्य प्रत्यग्रहीत् तच्च, सर्वं सर्वंसहापतिः[1] । अलुब्धा अपि गृह्णन्ति, भृत्यानुग्रहहेतुना ॥ २३४ ॥
नृपस्तमथ सम्भाष्य, विससर्ज सगौरवम् । महान्तो नाऽवजानन्ति[2], नृमात्रमपि संश्रितम् ॥ २३५ ॥
चकाराऽष्टमभक्तान्ते*, पारणं पृथिवीपतिः । चक्रे च वैताढ्यगिरिदेवस्याऽष्टाह्निकोत्सवम् ॥ २३६ ॥
गुहां तमिस्रामुद्दिश्य, चक्ररत्नं ततोऽचलत् । राजाऽप्यगात् तस्य पदान्वेषकस्येव पृष्ठतः ॥ २३७ ॥
गत्वा तमिस्रासविधे, सैन्यान्यावासयन्नृपः । विद्याधरपुराणीवाऽवतीर्णानि गिरेरधः ॥ २३८ ॥
कृत्वा मनसि भूपालः, कृतमालमथाऽमरम् । चक्रेऽष्टमतपोऽचालीत्, तस्य देवस्य चाऽऽसनम् ॥२३९॥
सोऽज्ञासीदवधिज्ञानादागतं चक्रवर्तिनम् । आजगामाऽर्चितुं तं च, चिराद् गुरुमिवाऽतिथिम् ॥ २४० ॥
स्वामिन् ! तमिस्राद्वारेऽस्मिन्, द्वारपाल इवाऽस्मि ते । इति ब्रुवन् महीभर्तुः, स सेवां प्रत्यपद्यत ॥२४१॥
स्त्रीरत्नयोग्यं तिलकचतुर्दशमनुत्तमम् । दिव्याभरणसम्भारं, विततार स भूभुजे ॥ २४२ ॥
तद्योग्यानि च माल्यानि, दिव्यानि वसनानि च । सोऽदाद् राज्ञे धारितानि, प्राक् तदर्थमिवाऽऽदरात् २४३
राजा तदाददे सर्वं, कृतार्था अपि भूभुजः । न त्यजन्ति दिशो दण्डं, चिह्नं दिग्विजयश्रियः ॥ २४४ ॥
प्रसादेनाऽतिमहता, सम्भाष्य विससर्ज तम् । शिष्यमध्ययनप्रान्त, उपाध्याय इवाऽऽर्षभिः[3] ॥ २४५ ॥
भून्यस्त[4]भाजनैरग्रे, भुञ्जानै राजकुञ्जरैः । स्वांशैरिव पृथग्भूतैः, समं चक्रे स पारणम् ॥ २४६ ॥
सोऽकरोत् कृतमालस्य, देवस्याऽष्टाह्निकोत्सवम् । प्रभवः प्रणिपातेन, गृहीताः किं न कुर्वते ? ॥२४७॥
सुषेणाभिधमन्येद्युः, सेनापतिमिलापतिः । समाहूय हरिः[5] इव, नैगमेषिणमादिशत् ॥ २४८ ॥
सिन्धुसागरवैताढ्यसीमानं सिन्धुनिष्कुटम् । दक्षिणं साधयोत्तीर्य†, चर्मरत्नेन निम्नगाम् ॥ २४९ ॥
बदरीवणवत् तत्र, म्लेच्छानायुधयष्टिभिः । ताडयित्वा चित्ररत्नसर्वस्वफलमाहरेः ॥ २५० ॥
ततः स सेनाधिपतिर्मृगाधिपतिरोजसा । तेजसा तेजसांनाथो[6], धिषणो[7] धिषणागुणैः[8] ॥ २५१ ॥
निम्नानां निष्कुटानां च, जलस्थलभुवामपि । अन्येषामपि दुर्गाणां, तज्जन्मेव प्रचारवित्[9] ॥ २५२ ॥
सम्पूर्णलक्षणः सर्वम्लेच्छभाषाविचक्षणः । शिरसा शासनं भर्तुस्तत्प्रसादमिवाऽऽददे ॥ २५३ ॥
[ त्रिभिर्विशेषकम् ]
प्रणम्य स्वामिनं गत्वा, स्वावासे निदिदेश सः । सामन्तादीन् प्रयाणाय, प्रतिच्छन्दान्[10] इवाऽऽत्मनः ॥२५४॥
अथ स्नात्वा कृतबलिर्महार्घ्यस्वल्पभूषणः[11] । संवर्मितः कृतप्रायश्चित्तकौतुकमङ्गलः ॥ २५५ ॥
जयश्रियाऽऽलिङ्गनाय, प्रक्षिप्तामिव दोर्लताम् । रत्नग्रैवेयकं[12] दिव्यं, धारयन् कण्ठकन्दले ॥ २५६ ॥
शोभितश्चिह्नपट्टेन, पट्टद्विप[13] इवोच्चकैः । गृहीतास्त्रः कटौ बिभ्रन्मूर्त्तां शक्तिमिव क्षुरीम् ॥ २५७ ॥
बिभ्राणः स्वर्णतूणीरावतुच्छौ सरलाकृती । पृष्ठतोऽपि रणं कर्तुं, दोर्दण्डाविव वैक्रियौ ॥ २५८ ॥
गणनेतृदण्डनेतृश्रेष्ठिभिः सार्थवाहिभिः । सन्धिपालचराद्यैश्च, युवराज इवाऽऽवृतः ॥ २५९ ॥
आरुरोह स सेनानीर्गजरत्नं नगोन्नतम्[14] । निश्चलाग्रासनस्तेनाऽऽसनेन सहभूः[15] इव ॥ २६० ॥
[ षड्भिः कुलकम् ]

---

१ पृथ्वीपतिः । २ अवज्ञां कुर्वन्ति । * °भक्तस्य, खंता ॥ ३ भरत. । ४ भूमिस्थापितपात्रैः । ५ इन्द्र । † °त्तीर्येमां नदीं रत्नचर्मणा खंता ॥ ६ सूर्यः । ७ बृहस्पति ८ बुद्धिगुणै. । ९ मार्गवेत्ता । १० प्रतिबिम्बरूपान् । ११ महामूल्यस्वल्पाभरण. । १२ रत्नमय ग्रीवाभरणम् । १३ प्रधानहस्ती । १४ पर्वतोन्नतम् । १५ सहजातः इव ।

शोभमानः सितच्छत्रचामरैः सोऽमरोपमः । वारणं प्रेरयामास, चरणाङ्गुष्ठसंज्ञया ॥ २६१ ॥
समं राज्ञोऽर्द्धसैन्येन, स गत्वा सिन्धुरोधसि । अश्वादुद्धूतरजसा, सेतुबन्धमिवादधत् ॥ २६२ ॥
योजनान्येधते स्पृष्टं, यच्च द्वादश यत्र च । प्रातरुप्तानि धान्यानि, निष्पद्यन्ते दिनात्यये ॥ २६३ ॥
नंदीनदनदीनाथाम्भःसु यत् तारणक्षमम् । तत् सम्पस्पर्श हस्तेन, चर्मरत्नं चमूपतिः ॥ २६४ ॥ मन्दानितकम्
नैसर्गिकप्रभावेन, प्रससार तटद्वयम् । तच्चर्मरत्नं प्रक्षिप्तं, सलिलोपरि तैलवत् ॥ २६५ ॥
सह चम्वा चमूनाथश्चर्मरत्नेन तेन सः । उत्तीर्य पद्यवेवाऽऽपदापगायाः परं तटम् ॥ २६६ ॥
तं सिसाधयिषुः सर्वं, सिन्धोर्दक्षिणनिष्कुटम् । कल्पान्तपाथोधिरिव, प्रससार चमूपतिः ॥ २६७ ॥
धनुर्निर्घोषबूत्कारदारुणो रणकौतुकी । लीलयैव पराजिग्ये, स सिंह इव सिंहलान् ॥ २६८ ॥
बर्बरानात्मसाच्चक्रे, मूल्यात्तानिव किङ्करान् । टङ्कणानङ्कयामास, राजाङ्केन हयानिव ॥ २६९ ॥
रत्नाकरमिवानीरं, रत्नमाणिक्यपूरितम् । अजयद्यवनद्वीपं, नरद्वीपी स लीलया ॥ २७० ॥
तथा कालमुखास्तेन, जिग्यिरे ते यथाऽभवन् । अभुञ्जाना अपि मुखे, क्षिप्तपञ्चाङ्गुलीदलाः ॥ २७१ ॥
म्लेच्छा जोनकनामानस्तस्य प्रसरतः मतः । आसन् पराङ्मुखा वायोरिव पादपपल्लवाः ॥ २७२ ॥
अपरा अपि वैताढ्यपर्वतोपत्यकास्थिताः । म्लेच्छजातीर्विजिग्ये सोऽहिजातीरिव वार्चिकः ॥ २७३ ॥
प्रौढप्रतापप्रसरः, प्रसरन्ननिवारितम् । आक्रामत् कच्छदेशोर्वीं, सर्वां दिवमिवाऽर्यमा ॥ २७४ ॥
इति निष्कुटमाक्रम्य, पञ्चानन इवाऽटवीम् । समोर्व्यां कच्छदेशस्य, तस्थौ सुस्थश्चमूपतिः ॥ २७५ ॥
म्लेच्छभूपतयस्तत्र, विचित्रोपायनैः समम् । सेनापतिं समापेतुर्भक्त्या पतिमिव स्त्रियः ॥ २७६ ॥
रत्नस्वर्णोत्करान् केचित्, स्वर्णशैलतटोपमान् । केचिच्चलितविन्ध्याद्रिकल्पान् करटिनो ददुः ॥ २७७ ॥
केचिद् विश्राणयामासुर्वाजिनोऽर्यकवाजिनः । केचिदञ्जननिष्पन्नान्, रथान् देवरथोपमान् ॥ २७८ ॥
तत्राऽन्यदपि यत् सारं, तस्मै सर्वेऽपि तद् ददुः । गिरिभ्योऽपि सरित्कृष्टं, रत्नं रत्नाकरे व्रजेत् ॥ २७९ ॥
तवाऽऽयुक्ता इवाऽऽदेशकरा वयमतः परम् । स्थास्यामः स्वस्वविषयेष्वित्यूचुस्ते चमूपतिम् ॥ २८० ॥
महीभुजस्तान् यथार्हं, सत्कृत्य विससर्ज सः । पूर्ववच्च सुखं सिन्धुमुत्ततार तरङ्गिणीम् ॥ २८१ ॥
म्लेच्छेभ्य आहृतं सर्वं, तं दण्डं दण्डनायकः । दोहदं कीर्तिवल्लीनां, ढौकयामास चक्रिणे ॥ २८२ ॥
सत्कृतः कृतिना सोऽथ, प्रसादाच्चक्रवर्त्तिना । विसृष्टश्च प्रहृष्टोऽगान्निजावासं चमूपतिः ॥ २८३ ॥
अयोध्यायामिव सुखं, तत्राऽस्थाद् भरतेश्वरः । सिंहः प्रयाति यत्राऽपि, तस्यौकः स्वं तदेव हि ॥२८४॥

अन्येद्युराहूय चमूपतिं भूपतिरादिशत् । उद्घाटय तमिस्रायाः, कपाटद्वितयीमिति ॥ २८५ ॥
आज्ञां नरपतेर्मालामिवोपादाय मौलिना । अविदूरे तमिस्राया, गत्वा तस्थौ चमूपतिः ॥ २८६ ॥
कृत्वा मनसि सेनानीः, कृतमालमथाऽमरम् । चक्रेऽष्टमतपः सर्वास्तपोमूला हि सिद्धयः ॥ २८७ ॥
सेनापतिरथ स्नातः, श्वेतसंव्यानपक्षभृत् । निर्ययौ स्नानसदनात्, सरसो राजहंसवत् ॥ २८८ ॥
सौवर्णं धूपदहनं, लीलास्वर्णारविन्दवत् । सुषेणः पाणिना बिभ्रत्, तमिस्राद्वारमासदत् ॥ २८९ ॥
तत्र चालोकयामास, कपाटौ प्राणमच्च सः । महान्तः शक्तिमन्तोऽपि, प्रथमं साम कुर्वते ॥ २९० ॥
वैताढ्यसञ्चरद्विद्याधरस्त्रीस्तम्भनौषधम् । अष्टाह्निकोत्सवं तत्र, स व्यधत्त महर्द्धिकम् ॥ २९१ ॥
अखण्डैस्तन्दुलैरष्टमङ्गलीं मङ्गलावहाम् । मण्डलं मान्त्रिक इवाऽऽलिलेख पृतनापतिः ॥ २९२ ॥
वज्रं वज्रधरस्येव, चक्रिणो वैरिसूदनम् । दण्डरत्नमुपादत्त, स्वहस्तेन चमूपतिः ॥ २९३ ॥

---

१ नदीह्रदसमुद्रजलेषु । * सचमूकश्च° खता ॥ २ नद्याः । ३ वशीचक्रे । ४ नरव्याघ्रः । ५ पर्वतासन्नभूमिस्थिताः । ६ गारुडिक । ७ सिंह. । ८ गजान् । ९ अतिक्रान्तसूर्याश्वान् । १० नद्याकृष्टम् । † स्वेषु देशेष्वित्यूचुस्ते तं च° खंता ॥ ‡ चालोकयाञ्चक्रे खता ॥ ११ सेनापतिः ।

आजिघांसुरपाक्रामत्, सप्ताष्टानि पदानि सः । मनागपसरत्येव, प्रजिहीर्षुर्गजोऽपि हि ॥ २९४ ॥
सेनानीस्तेन दण्डेन, त्रिः[1] कपाटावताडयत् । उच्चैस्तरां कन्दरां तामातोद्यमिव नादयन् ॥ २९५ ॥
वैताढ्यपृथिवीध्रस्य[2], विलोचनपुटे इव । बाढमुज्झघटाते ते, कपाटे वज्रनिर्मिते ॥ २९६ ॥
ततो विघटमानौ तौ, कपाटौ दण्डताडनात् । तडत्तडिति कुर्वाणौ, चक्रन्दतुरिवोच्चकैः ॥ २९७ ॥
उदग्भरतखण्डानां, जयप्रस्थानमङ्गलम् । कपाटोद्घाटनं राज्ञे, सेनानाथो व्यजिज्ञपत् ॥ २९८ ॥
हस्तिरत्नं समारूढः, प्ररूढप्रौढविक्रमः । अथाऽऽययौ तमिस्रायां, नरेन्द्रश्चन्द्रमा इव ॥ २९९ ॥
मूर्द्धस्थेन शिखाबन्धेनेव येन कदाऽपि हि । उपसर्गा[3] न जायन्ते, तिर्यग्नरसुरोद्भवाः ॥ ३०० ॥
अन्धकारमिवाऽशेषं, येन* दुःखं प्रणश्यति । शस्त्रघाता इव रुजः, प्रभवन्ति न येन च ॥ ३०१ ॥
नृपो यक्षसहस्रेणाऽधिष्ठितं चतुरङ्गुलम् । उद्द्योतकं भास्करवन्मणिरत्नं तदाददे ॥ ३०२ ॥
[ त्रिभिर्विशेषकम् ]
दक्षिणे कुम्भिनः कुम्भस्थले सोऽरिनिषूदनः । पूर्णकुम्भ इव स्वर्णपिधानं निदधे च तत् ॥ ३०३ ॥
चतुरङ्गचमूचक्रयुक्तश्चक्रानुगस्ततः । प्रविवेश गुहाद्वारं, केसरीव नृकेसरी ॥ ३०४ ॥
अष्टसुवर्णप्रमाणं, षट्तलं द्वादशास्रिकम्[4] । समतलं मानोन्मानप्रमाणयोगसंयुतम् ॥ ३०५ ॥
सर्वदाऽधिष्ठितं यक्षसहस्रेणाऽष्टकर्णिकम् । योजनानि द्वादशाऽन्धकारन्यक्कारकारणम् ॥ ३०६ ॥
अधिकरणीसंस्थानं, सूर्यचन्द्रानलप्रभम् । नृपतिः काकिणीरत्नं, चतुरङ्गुलमाददे ॥ ३०७ ॥
[ त्रिभिर्विशेषकम् ]
गोमूत्रिकाक्रमात् तेन, स गुहापार्श्वयोर्द्वयोः । योजनान्ते योजनान्ते, मण्डलान्यालिखन् ययौ ॥ ३०८ ॥
धनुःपञ्चशतायामान्येकैकमेकयोजनम् । उद्द्योतकारीण्येकोनपञ्चाशत् तानि जज्ञिरे ॥ ३०९ ॥
तावत् स्थायीनि तान्यासन्, गुहा चोद्घाटितानना । यावज्जीवति कल्याणी, चक्रवर्ती महीतले ॥ ३१० ॥
मण्डलानां प्रकाशेन, तेनाऽप्रस्खलिता चमूः । सञ्चचार सुखं चक्ररत्नानुगनृपानुगा ॥ ३११ ॥
सा गुहा सञ्चरन्तीभिश्चमूभिश्चक्रवर्तिनः । असुरादिबलैः रत्नप्रभामध्यमिवाऽऽबभौ ॥ ३१२ ॥
अन्तः सञ्चरता तेन, चमूचक्रेण सा गुहा । आसीदुद्दामनिर्घोषा, मन्थानेनेव मन्थनी[5] ॥ ३१३ ॥
रथैः सीमन्तितः सद्योऽश्वखुरैः क्षुण्णकर्करः । जज्ञे पुरीपथ इव, स खिलोऽपि[6] गुहापथः ॥ ३१४ ॥
अन्तःस्थितेन सा तेन, सेनालोकेन कन्दरा । तिरश्चीनत्वमापन्ना, लोकनालिरिवाऽभवत् ॥ ३१५ ॥
मध्यभागे तमिस्रायाः, सं[7]ध्यानरसने† इव । नृपः प्रापदथोन्मग्ना-निमग्ने नाम निम्नगे[8] ॥ ३१६ ॥
याम्योदग्भरतक्षेत्रार्द्धाभ्यामागच्छतां नृणाम् । आज्ञालेखे इव कृते, ते नदीछ्ले[9]वतोऽद्रिणा ॥ ३१७ ॥
तुम्बीफलमिवैकस्यामुन्मज्जति शिलाऽपि हि । शिलेव तुम्बीफलमप्यन्यस्यां तु निमज्जति ॥ ३१८ ॥
तमिस्रायाः पूर्वभित्तेर्निर्गते ते तु गच्छतः । भित्तेः प्रतीच्या मध्येन, सिन्धौ सङ्गममापतुः ॥ ३१९ ॥
बबन्ध वर्द्धकिः पद्यामनवद्यां ततस्तयोः । वैताढ्याद्रिकुमारस्य, रहःशय्यामिवाऽऽयताम् ॥ ३२० ॥
पद्या क्षणेन सा जज्ञे, चक्रभृद्वर्द्धकेः खलु । गेहाकार[10]द्रुमेभ्यो हि, कालक्षेपो न वास्तुनः ॥ ३२१ ॥
भूयोभिरपि पाषाणैः, कृता सुश्लिष्टसन्धिभिः । रेजे तावत्प्रमाणैकपाषाणघटितेव सा ॥ ३२२ ॥
सा पाणिवत् समतला, वज्रवच्च द्रढीयसी । गुहाद्वारकपाटाभ्यामिवाऽलक्ष्यत निर्मिता ॥ ३२३ ॥
ससैन्योऽपि सुखेनैव, निम्नगे दुस्तरे अपि । समर्थः पदविधिवच्चक्रवर्त्युत्ततार ते ॥ ३२४ ॥
गुहाया उत्तरं द्वारमुत्तराशामुखोपमम् । सह चम्वा क्रमाद् गच्छन्नासदन्मेदिनीपतिः ॥ ३२५ ॥

१ त्रिवारम् । २ वैताढ्यपर्वतस्य । ३ उपद्रवा । *°न शेषं प्र° खता ॥ ४ द्वादशकोणकम् । ५ मन्थनघटी । ६ सञ्चाररहितोऽपि । ७ अधोवस्त्रमेखले । †°नवस° खता ॥ ८ नद्यौ । ९ नदीमिषेण । १० एतदाख्यकल्पवृक्षेभ्यः ।

आकर्ण्याघातनिर्घोषं, याम्यद्वारकपाटयोः । भीताविवोज्झघटाते, तत्कपाटौ स्वयं क्षणात् ॥ ३२६ ॥
तदा विघटमानौ तौ, सरत्सरितिशब्दतः । सरणप्रेरणमिव, चक्रिसैन्यस्य चक्रतुः ॥ ३२७ ॥
गुहायाः पार्श्वभित्तिभ्यां, तथा संश्लिष्य संस्थितौ । अलक्ष्येतां यथा तत्राऽभूतपूर्वाविवाररी ॥ ३२८ ॥
अथ प्रथमतश्चक्रं, पुरोगं चक्रवर्तिनः । निर्जगाम गुहामध्यादभ्रमध्यादिवाऽर्यमा ॥ ३२९ ॥
महीयसा महीनाथो, गुहाद्वारेण तेन च । बलीन्द्र इव पातालविवरेण विनिर्ययौ ॥ ३३० ॥
तस्या गुहाया निःशङ्कलीलागमनशालिनः । निर्ययुर्दन्तिनो विन्ध्यसानुमद्गह्वरादिव ॥ ३३१ ॥
गुहातो वल्गु वल्गन्तो, निर्गच्छन्ति स्म वाजिनः । अम्भोधिमध्यनिर्गच्छदर्कवाजिविडम्बिनः ॥ ३३२ ॥
वैताढ्यकन्दरादाढ्यकुटीगर्भादिवाऽक्षताः । नादयन्तः स्वनादैर्द्या, निरीयुः स्यन्दना अपि ॥ ३३३ ॥
पत्तयोऽपि विनिष्पेतुर्महौजस्का गुहामुखात् । सद्यः स्फुटितवल्मीकवदनादिव पन्नगाः ॥ ३३४ ॥
पञ्चाशद्योजनायामां, तामतिक्रम्य कन्दराम् । उदग्भरतवर्षार्द्धं, विजेतुं प्राविशन्नृपः ॥ ३३५ ॥
किरातास्तत्र निवसन्त्यापाता नाम दुर्मदाः । आढ्या महौजसो दीप्ता, भूमिष्ठा इव दानवाः ॥ ३३६ ॥
तेऽविच्छिन्नमहाहर्म्यशयनासनवाहनाः । अनल्पस्वर्णरजताः, कुबेरस्येव गोत्रिणः ॥ ३३७ ॥
बहुजीवधनास्ते च, बहुदासपरिच्छदाः । अजाताभिभवाः प्रायः, सुरोद्यानद्रुमा इव ॥ ३३८ ॥
अनेकसम्परायेषु, निर्व्यूढबलशक्तयः । महाशकटभारेषु, महोक्षा इव ते सदा ॥ ३३९ ॥
प्रसह्य भरताधीशे, कृतान्त इव सर्पति । अनिष्टशंसिनस्तेषामुत्पाता अभवन्निति ॥ ३४० ॥
चलद्भरतसैन्यप्राग्भारभारैरिवाऽर्दिता । प्रकम्पितगृहोद्याना, प्रचकम्पे वसुन्धरा ॥ ३४१ ॥
दिगन्तव्यापिभिः प्रौढैः, प्रतापैरिव चक्रिणः । अजायन्त दिशां दाहा, दावानलसहोदराः ॥ ३४२ ॥
क्षरता रजसाऽत्यन्तमनालोकनभाजनम् । बभूवुः ककुभः सर्वाः, पुष्पवत्य इव स्त्रियः ॥ ३४३ ॥
दुःश्रवक्रूरनिर्घोषा, आस्फलन्तः परस्परम् । पयोनिधाविव ग्राहा, दुर्वाता विजजृम्भिरे ॥ ३४४ ॥
निपेतुर्गगनादुल्का, उल्मुकानीव सर्वतः । समस्तम्लेच्छव्याघ्राणां, प्रक्षोभस्य निबन्धनम् ॥ ३४५ ॥
अभवन् वज्रनिर्घाता, महानिर्घोषभीषणाः । क्रुद्धोत्थितकृतान्तस्य, हस्तघाता इव क्षितौ ॥ ३४६ ॥
स्थाने स्थाने काकचिल्लमण्डलानि नभस्तले । भ्रेमुः समुपसर्पन्त्याश्छत्राणीवाऽन्तकश्रियः ॥ ३४७ ॥
अथ सौवर्णसन्नाहपरशुप्रासरश्मिभिः । सहस्ररश्मिं कुर्वाणं, कोटिरश्मिमिवाऽम्बरे ॥ ३४८ ॥
दन्तुराम्बरमुद्दण्डैर्दण्डकोदण्डमुद्गरैः । ध्वजस्थव्याघ्रसिंहाहित्रस्तार्म्बरचरीगणम् ॥ ३४९ ॥
महाद्विपघटामेघान्धकारितदिगाननम् । यमाननपरिस्पर्द्धिरथाग्रमकराननम् ॥ ३५० ॥
खुराघातैस्तुरङ्गाणां, पाटयन्तमिव क्षितिम् । जयतूर्यरवैर्घोरैः, स्फोटयन्तमिवाऽम्बरम् ॥ ३५१ ॥
भौमेनाऽग्रेसरेणाऽर्कमिव चक्रेण भीषणम् । आयान्तं भरतं दृष्ट्वा, किराताश्चुक्रुपुस्तराम् ॥ [पञ्चभिः कुलकम्]
मिथः सम्भूय ते क्रूरग्रहमैत्रीविडम्बिनः । अवनीं संजिहीर्षन्त, इव सक्रोधमभ्यधुः ॥ ३५३ ॥
अप्रार्थितप्रार्थयिता, कोऽयं बाल इवाऽल्पधीः । पृथग्जन इव श्रीह्रीधृतिकीर्त्तिविवर्जितः ॥ ३५४ ॥
परिक्षीणपुण्यचतुर्दशीको हीनलक्षणः । अस्मद्विषयमायाति, मृगः सिंहगुहामिव ? ॥ ३५५ ॥
तदेनमुद्धताकारं, प्रसरन्तमपि क्षणात् । महावाता इवाऽम्भोदं, प्रक्षिपामो दिशोदिशि ॥ ३५६ ॥
इत्युच्चैर्विब्रुवाणास्ते, सम्भूय भरतं प्रति । उदतिष्ठन्त युद्धाय, प्रत्यब्दं शरभा इव ॥ ३५७ ॥
अभेद्यान् कूर्मपृष्ठास्थिशकलैरिव निर्मितान् । सन्नाहान् धारयामासुः, किरातपतयोऽथ ते ॥ ३५८ ॥
दिशन्ति मूर्धामुत्केशनिशाचरशिरःश्रियम् । ऋक्षादिकेशच्छन्नानि, शिरस्त्राणानि ते दधुः ॥ ३५९ ॥

१ कपाटौ । २ धनाढ्यगृहगर्भाद् इव । ३ क्षतरहिता । ४ भूमिस्थिताः । ५ अनेकयुद्धेषु । ६ रजस्वलाः । ७ मत्स्यविशेषाः । ८ खेचरीगणम् । ९ मङ्गलग्रहेण । १० रविमङ्गलशनिराहुकेतुतुल्याः । ११ अष्टापदा । १२ भल्लूकादि ।

उत्साहेनोच्छ्वसद्देहतया सन्नाहजालिकाः । त्रुटन्ति स्म प्रतिमुहुरहो ! तेषां रणोत्कता[1] ॥ ३६० ॥
शिरोभिरुत्कचैस्तेषां, शिरस्त्राणान्युदासिरे । त्राता किमपरोऽस्माकमित्यमर्षवशादिव ॥ ३६१ ॥
केचित् कुपितकीनाशभ्रकुटीकुटिलान्यधुः । धनूंषि शृङ्गघटितान्यधिज्यीकृत्य लीलया ॥ ३६२ ॥
केऽपि सङ्गरदुर्वारांस्तरवारीन्[2] भयङ्करान् । कोशादाचकृषुर्लीलातल्पकल्पान्[3] जयश्रियः ॥ ३६३ ॥
केचिदुद्दधिरे दण्डान्, दण्डपाणेरिवाऽनुजाः[4] । कुन्ताननर्त्तयन् केऽपि, केतूनिव नभस्तले ॥ ३६४ ॥
शूलान्यधारयन् केऽपि, शूलाकर्तुमिव द्विषः । प्रीतये प्रेतराजस्याऽऽमन्त्रितस्य रणोत्सवे ॥ ३६५ ॥
विद्विषद्वर्त्तिकाचक्रप्राणसर्वस्वतस्करान् । अयःशल्यान्[5] निदधिरे, श्येनानिव करेऽपरे ॥ ३६६ ॥
पिपातयिषव इव, नभस्तस्तारकोत्करम् । केचिदाददिरे सद्यो, मुद्गरानुद्धुरैः करैः ॥ ३६७ ॥
विविधान्यायुधान्यन्येऽप्यधुरायोधनेच्छया । विना शस्त्रं न कोऽप्यासीद्, विना विषमिवोरगः ॥३६८॥
उद्दिश्य भरतानीकमनीकरसलालसाः । अभ्यधावन्नेककालमेकात्मान इवाऽथ ते ॥ ३६९ ॥
भरतस्याऽग्रसैन्येन, सार्द्धं युयुधिरे रयात् । म्लेच्छाः शस्त्राणि वर्षन्तोऽरिष्टाब्दाः[6] करकानिव[7] ॥ ३७० ॥
भुवो मध्यादिवोत्पेतुर्दिङ्मुखेभ्य इवाऽपतन् । पेतुश्च व्योमत इव, तेभ्यः शस्त्राणि सर्वतः ॥ ३७१ ॥
भरतेशाग्रसेनायां, किरातानां शिलीमुखैः । न तदासीन्न यद् भिन्नं, दुर्जनानामिवोक्तिभिः ॥ ३७२ ॥
म्लेच्छसैन्येन पर्यस्ता, भरतेशाग्रसादिनः । नदीमुखोर्मय इवाऽवलन् वारिधिवेलया ॥ ३७३ ॥
चक्रिणः करिणस्त्रेसुः, रसन्तो विरसस्वरम् । निम्नत्सु म्लेच्छसिंहेषु, शिलीमुखनखैः शितैः ॥ ३७४ ॥
ताडिता म्लेच्छसुभटैश्चण्डैर्दण्डायुधैर्मुहुः । भूपतेः पत्तयः पेतुर्लुलन्तः कन्दुका इव ॥ ३७५ ॥
स्वच्छन्दं म्लेच्छसैन्येन, नृपाग्रध्वजिनीरथाः । अभज्यन्त गदाघातैर्वज्रघातैरिवाऽद्रयः ॥ ३७६ ॥
तिमिङ्गिलैरिव[8] म्लेच्छैस्तस्मिन् समरसागरे । ग्रस्तत्रस्तं नृपचमूनक्रचक्रमजायत ॥ ३७७ ॥
अनाथामिव तां सेनां, सेनानाथः पराजिताम् । पश्यन् सुषेणः कोपेनाऽनोदि राज्ञ इवाऽऽज्ञया ॥३७८॥
आताम्रनयनस्ताम्रवदनः स क्षणादभूत् । दुरीक्षो नररूपेण, वैश्वानर[9] इव स्वयम् ॥ ३७९ ॥
रक्षोराज इवाऽशेषान्, ग्रसितुं परसैनिकान् । स्वयं संवर्मयामास, सुषेणः पृतनापतिः ॥ ३८० ॥
उत्साहोच्छ्वसदङ्गत्वादतिगाढत्वमागतम् । सौवर्णं वर्म सेनान्यस्त्वगन्तरमिवाऽशुभत् ॥ ३८१ ॥
अशीत्यङ्गुलमुच्चैस्त्वे[10]ऽऽयामेकन्यूनशताङ्गुलम् । परिणाहे[11] दैर्घ्ये पुनरष्टोत्तरशताङ्गुलम् ॥ ३८२ ॥
द्वात्रिंशदङ्गुलोत्सेधं, सततोन्नतमौलिकम् । चतुरङ्गुलकर्णं च, विंशत्यङ्गुलबाहुकम् ॥ ३८३ ॥
षोडशाङ्गुलजङ्घाकं, चतुरङ्गुलजानुकम् । चतुरङ्गुलोच्चखुरं, वृत्तं वलितमध्यकम् ॥ ३८४ ॥
विशालसन्नतनतप्रसन्नपृष्ठशालिनम् । दुकूलतन्तुभिरिव, कोमलैर्लोमभिर्युतम् ॥ ३८५ ॥
प्रशस्तद्वादशावर्तं, शुद्धलक्षणलक्षितम् । सुजातयौवनप्राप्तशुकपिच्छहरिच्छविम् ॥ ३८६ ॥
कशानिपातरहितं, सादिचित्तानुगामिनम् । रत्नस्वर्णवल्गाव्याजाद्, दोर्भ्यां श्लिष्टमिव श्रिया ॥ ३८७ ॥
काञ्चनैः *किङ्किणीजालैः, क्वणद्भिर्मधुरस्वरम् । अन्तर्ध्वनन्मधुकराम्भोजस्रग्भिरिवाऽर्चितम् ॥ ३८८ ॥
पञ्चवर्णमणीमिश्रस्वर्णालङ्करणांशुभिः । रूपाद्वैतपताकाङ्कमिव बिभ्राणमाननम् ॥ ३८९ ॥
काञ्चनाम्भोजतिलकं, भौमाङ्कितमिवाऽम्बरम् । चामरोत्तंसनिभतोऽन्यौ कर्णाविव बिभ्रतम् ॥ ३९० ॥
वज्रिणो वाहनमिवाऽऽकृष्टं पुण्येन चक्रिणः । मुञ्चन्तं चरणौ वक्रौ, पतन्तौ लालकादिव ॥ ३९१ ॥
सुपर्णमन्यमूर्त्येव, मूर्तिमन्तमिवाऽनिलम् । क्षणेन योजनशतोल्लङ्घने दृष्टविक्रमम् ॥ ३९२ ॥
कर्दमोदकपाषाणशर्करागर्त्तदुःषमात् । महास्थलीगिरिदरीदुर्गाद्योत्तारणक्षमम् ॥ ३९३ ॥

---

१ रणोत्कण्ठता । २ खड्गान् । ३ लीलाशय्यासदृशान् । ४ यमस्य । ५ लोहशल्यान् । ६ उत्पातमेघाः । ७ वर्षोपलान् । ८ महामत्स्यैः । ९ अग्निः । १० औन्नत्ये । ११ विशालतायाम् । * किङ्कणी° खंता ॥

ईषद्भूलग्नपादत्वात्, सञ्चरन्तमिवाऽम्बरे । मेधाविनं विनीतं च, पञ्चधाराजितश्रमम् ॥ ३९४ ॥
कमलामोदनिःश्वासं, कमलापीडमाख्यया । साक्षाज्जयमिवाऽऽरोहद्, वाजिराजं चमूपतिः ॥ ३९५ ॥
[ चतुर्दशभिः कुलकम् ]

पञ्चाशदङ्गुलं दैर्घ्ये, विस्तारे षोडशाङ्गुलम् । अर्द्धाङ्गुलं च बाहल्ये, स्वर्णरत्नमयत्सरु ॥ ३९६ ॥
अपास्तकोशं निर्मुक्तनिर्मोकमिव पन्नगम् । तीक्ष्णधारमतिदृढं, द्वैतीयीकमिवाऽशनिम् ॥ ३९७ ॥
विचित्रपुष्करश्रेणिव्यक्तवर्णविराजितम् । खड्गरत्नं स जग्राह, द्विषां पत्रमिवाऽन्तकः ॥ ३९८ ॥
[ त्रिभिर्विशेषकम् ]

जातपक्ष इवाऽहीन्द्रः, सन्नद्ध इव केसरी । बभूव खड्गरत्नेन, स तेन पृतनापतिः ॥ ३९९ ॥
तडिद्दण्ड इवाऽऽकाशे, तरलं भ्रमयन्नसिम् । वाजिनं प्रेरयामास, सांयुगीनं चमूपतिः ॥ ४०० ॥
जलकान्तो जलमिव, स्फाटयन् विद्विषद्बलम् । विवेश वाजिना तेन, सुषेणः समराङ्गणम् ॥ ४०१ ॥
सुषेणे निघ्नति त्रेसुर्द्विषः केऽपि मृगा इव । नेत्रे निमील्य केऽप्यस्थुः, पतित्वा शशका इव ॥ ४०२ ॥
ऊर्द्ध्वीभूयाऽपरे तस्थुः, खेदिता रोहिता इव । आरोहन् विषमस्थानं, केऽपि शाखामृगा इव ॥ ४०३ ॥
केषाञ्चित् पेतुरस्त्राणि, पत्राणीव महीरुहाम् । आतपत्राणि केषाञ्चिद्, यशांसीव समन्ततः ॥ ४०४ ॥
केषाञ्चित् तुरगास्तस्थुर्मन्त्रस्तब्धा इवोरगाः । केषाञ्चिदप्यभज्यन्त, स्यन्दना मृन्मया इव ॥ ४०५ ॥
स्वमप्यसंस्तुतमिव, प्रत्यैक्षन्त न केचन । आत्मप्राणान् गृहीत्वा तु, ययुर्म्लेच्छा दिशोदिशम् ॥ ४०६ ॥
पर्यस्तास्ते सुषेणेनाऽम्भःपूरेण द्रुमा इव । निःस्थामानो योजनानि, भूयांसि व्यपचक्रमुः ॥ ४०७ ॥

ते वायसा इवैकत्र, सम्भूयाऽऽलोच्य च क्षणम् । आतुरा मातरमिव, ययुः सिन्धुं महानदीम् ॥ ४०८ ॥
तस्याश्च सैकते कृत्वा, संस्तरान् सिकतोत्करैः । ते सम्भूयोपविविशुरपस्नानोद्यता इव ॥ ४०९ ॥
नग्ना उत्तानका मेघमुखान् स्वकुलदेवताः । चित्ते नागकुमारांस्ते, कृत्वाऽष्टमतपो व्यधुः ॥ ४१० ॥
तदष्टमतपःप्रान्ते, चक्रितेजोभयादिव । तेषां नागकुमाराणामासनानि चकम्पिरे ॥ ४११ ॥
ते दृष्ट्वाऽवधिना तांस्तु, म्लेच्छानार्त्तांस्तथास्थितान् । अर्त्या पितृवदभ्येत्य, प्रादुरासंस्तदग्रतः ॥ ४१२ ॥
ब्रूत भो! भवतामर्थः, कोऽधुना मनसीप्सितः ? । अन्तरिक्षस्थिता एवं, ते किरातान् बभाषिरे ॥४१३॥
दृष्ट्वा मेघमुखान्नागकुमारान्नभसि स्थितान् । तेऽबध्नन्नञ्जलीन् भालेष्वत्यन्ततृषिता इव ॥ ४१४ ॥
अस्मद्देशमनाक्रान्तपूर्वं कोऽप्यागतोऽधुना । यथा स गच्छति तथा, कुरुतेत्यूचिरे च ते ॥ ४१५ ॥
ऊचुर्मेघमुखाश्चैवं, भरतश्चक्रवर्त्ययम् । देवासुरनरेन्द्राणामप्यजय्यो महेन्द्रवत् ॥ ४१६ ॥
मन्त्रतन्त्रविषास्त्राग्निविद्यादीनामगोचरः । गिरिग्रावेव टङ्कानां, चक्रवर्त्ती महीतले ॥ ४१७ ॥
युष्माकमनुरोधेन, वयमस्य तथाऽपि हि । उपसर्गं करिष्याम, इत्युक्त्वा ते तिरोऽभवन् ॥ ४१८ ॥

अम्भोधय इवोत्पत्य, भुवोऽम्भोदा नभस्तलम् । व्याप्नुवन्तोऽञ्जनश्यामरुचः सञ्जज्ञिरे क्षणात् ॥४१९॥
तेऽतर्जयन्निव तडित्तर्जन्या चक्रभृच्चमूम् । ऊर्जितैर्गर्जितरवैश्चाऽऽचुक्रुशुरिवाऽसकृत् ॥ ४२० ॥
ते तस्थुरुपरि क्ष्मापस्कन्धावारस्य तत्क्षणम् । चूर्णनाय तत्प्रमाणोद्यतवज्रशिलोपमाः ॥ ४२१ ॥
अयोग्रैरिव नाराचैरिव दण्डैरिवाऽथ ते । धाराभिरम्भसां तत्र, प्रावर्त्तन्त प्रवर्षितुम् ॥ ४२२ ॥
मेघाम्भसा पूर्यमाणे, समन्तादपि भूतले । अनौव्यन्त रथास्तत्राऽनक्रायन्त गजादयः ॥ ४२३ ॥
क्वाऽप्यगच्छदिवाऽऽदित्यः, प्रणेशुरिव पर्वताः । तेन मेघान्धकारेण, स्फूर्जता कालरात्रिवत् ॥ ४२४ ॥

---

१ खड्गमुष्टि । * चोदयामास सं २, आ. नोदयामास खंता ॥ २ रणकुशलम् । ३ कपय । ४ अपरिचितम् । ५ निर्बला । ६ मृतस्नाने उद्यता इव । ७ पूर्वमनाक्रान्तम् । ८ गिरिपाषाणः । ९ पाषाणभेदनास्त्राणाम् । १० विद्युद्रूपतर्जन्यङ्गुल्या । ११ लोहाग्रै. । १२ नौवदाचरणमकुर्वत । १३ नक्रवदाचरणमकुर्वत ।

एकान्धकारता चैकजलभावश्च भूतले । तदानीं युगपद् युग्मधर्माविव बभूवतुः ॥ ४२५ ॥
अरिष्टवृष्टिमुत्कृष्टां, प्रेक्ष्य तां चक्रवर्त्यपि । चर्मरत्नं स्वहस्तेन, प्रियभृत्यमिवाऽस्पृशत् ॥ ४२६ ॥
स्पृष्टं तच्चक्रिहस्तेन, चर्मरत्नमवर्द्धत । योजनानि द्वादशोदक्[1]पवनेनेव वारिदः ॥ ४२७ ॥
तस्मिन् जलस्योपरिस्थे, घनाब्धेरिव भूतले । चर्मरत्ने समारुह्य, तस्थौ राजा ससैनिकः ॥ ४२८ ॥
मण्डितं नवनवत्या, सहस्रै*रतिचारुभिः । चामीकरशलाकाभिः†, क्षीराब्धिमिव विद्रुमैः[2] ॥ ४२९ ॥
व्रणग्रन्थिविहीनेन, सरलत्वैकशालिना । नालेन नलिनमिव, स्वर्णदण्डेन शोभितम् ॥ ४३० ॥
तोयातपमरुद्रेणुत्राणक्षममिलापतिः । पस्पर्श पाणिना छत्रं, चर्मवद् ववृधे च तत् ॥ ४३१ ॥
[ त्रिभिर्विशेषकम् ]
छत्रदण्डस्योपरि च, ध्वान्त[3]ध्वंसकृते नृपः । तेजसाऽतिनभो[4]रत्नं, मणिरत्नं न्यवेशयत् ॥ ४३२ ॥
तरदण्डमिवाऽराजत्, सम्पुटं च्छत्रचर्मणोः । ततः प्रभृति लोकेऽभूद्, ब्रह्माण्डमिति कल्पना ॥ ४३३ ॥
चर्मरत्ने च सुक्षेत्र, इवोप्तानि दिवामुखे । सायं धान्यान्यजायन्त गृहिरत्नप्रभावतः ॥ ४३४ ॥
प्रातरुप्ताश्च कूष्माण्ड[5]पालक्यामूलकादयः । दिनान्ते निरपद्यन्त, प्रासादा ऐन्दवा इव ॥ ४३५ ॥
उप्ता दिनमुखे चूतकदल्याद्याः फलद्रुमाः । दिवान्तेऽपि फलन्ति स्म, प्रारम्भा महतामिव ॥ ४३६ ॥
धान्यशाकफलान्येतान्यभुक्त मुदितो जनः । उद्यानकेलिगतवन्नाबुद्ध कटक[6]श्रमम् ॥ ४३७ ॥
चर्मरत्नच्छत्ररत्नमध्ये मध्यजगत्पतिः । प्रासादस्थ इव स्वस्थोऽवतस्थे सपरिच्छदः[7] ॥ ४३८ ॥
सप्ताऽभूवन्नहोरात्राण्यश्रान्तं तत्र वर्षताम् । तेषां नागकुमाराणां, तदा कल्पान्तकालवत् ॥ ४३९ ॥
पापाः केऽमी ममेदृक्षोपसर्गं कर्त्तुमुद्यताः ? । इति भावं नरेन्द्रस्य, विदित्वाऽथ महौजसः ॥ ४४० ॥
सदा सन्निहिता यक्षास्ते सहस्राणि षोडश । सन्नद्धा बद्धतूणीरा, अधिज्यीकृतकार्मुकाः ॥ ४४१ ॥
दिधक्षव[8] इव क्रोधानलेन परितः परान् । एत्य मेघमुखान् नागकुमारानेवमब्रुवन् ॥ ४४२ ॥
अरे वराकाः ! किं यूयं, हन्त ! निश्चेतना इव । न जानीथ महीनाथं, चक्रिणं भरतेश्वरम् ? ॥ ४४३ ॥
विश्वाजय्ये नृपेऽमुष्मिन्नारम्भो वोऽयमापदे । महाशिलोच्चये दन्तप्रहारो दन्तिनामिव ॥ ४४४ ॥
एवं सत्यप्यपयात, त्वरितं मत्कुणा इव । अदृष्टपूर्वो भावी वोऽपमृत्युर्बाढमन्यथा ॥ ४४५ ॥
इत्याकर्ण्याऽऽकुला मेघबलं मेघमुखाः सुराः । संजहुरिन्द्रजालज्ञा, इन्द्रजालमिव क्षणात् ॥ ४४६ ॥
ययुः किरातांस्ते मेघमुखास्तच्चाऽऽचचक्षिरे । भरतं शरणं गत्वाऽऽश्रयध्वमिति चाऽऽदिशन् ॥ ४४७ ॥
ततस्तद्वचनान्म्लेच्छा‡, भग्नेच्छा भरतेश्वरम् । शरण्यं शरणायेयुरनन्यशरणास्तदा ॥ ४४८ ॥
फणामणीनिवाहीनामेकतः पुञ्जितान् मणीन् । अन्तःसारमिव मेरोश्चारुचामीकरोत्करम् ॥ ४४९ ॥
अश्वरत्न[9]प्रतिच्छन्दानिवाऽश्वानपि लक्षशः । उपायनेऽर्पयामासुस्ते नत्वा भरतेशितुः ॥४५०॥ [ युग्मम् ]
निबद्धाञ्जलयो मूर्ध्नि, वाचा चाटूक्तिगर्भया । सगर्भा[10] इव सू[11]तानामिति चोच्चैर्बभाषिरे ॥ ४५१ ॥
विजयस्व जगन्नाथ !, प्रचण्डाखण्डविक्रम ! । आखण्डल इवाऽसि त्वं, षट्खण्डे क्षोणिमण्डले ॥४५२॥
वैताढ्यपर्वतस्याऽसद्धू[12]वप्रस्यैकभूपते ! । गुहाप्रतोलीं त्वद्दते, क उद्घाटयितुं क्षमः ? ॥ ४५३ ॥
ज्योतिश्चक्रमिवाऽऽकाशे, स्कन्धावारं जलोपरि । अन्यो धर्त्तुमलम्[13]भूष्णुर्जिष्णो ! त्वामन्तरेण कः ? ॥४५४॥
एवमद्भुतया शक्त्या, स्वामिनापि दिवौकसाम् । अजय्य इति विज्ञातोऽस्य[14]ज्ञानागः सहस्व नः ॥ ४५५ ॥

---

१ उत्तरपवनेन । * ° स्रैश्चारुरोचिषाम् सं १ ख ॥ † ° लाकानां, स १ खं ॥ २ प्रवालैः । ३ अन्धकारनाशार्थम् । ४ अतिक्रान्तसूर्यम् । ५ कूष्माण्ड. "कोलु" इति भाषायाम् । ६ सैन्यश्रमम् । ७ सपरिवार. । ८ दग्धुमिच्छवः । ‡ °च्छास्ते भीता भ° स १ ॥ ९ अश्वरत्नप्रतिबिम्बानीव । १० सहोदराः । ११ बन्दिनाम् । १२ असमद्भिदुर्गस्य । १३ समर्थः । १४ अज्ञानापराधम् ।

नवं जीवातुमधुना[1], पृष्ठे हस्तं प्रयच्छ नः । स्थास्यामोऽतः परं नाथ !, त्वदाज्ञावर्तिनो वयम् ॥ ४५६ ॥
भरतोऽप्यात्मसात्कृत्य, तान् सत्कृत्य च कृत्यवित् । विससर्जोत्तमानां हि, प्रणामावधयः क्रुधः ॥ ४५७ ॥
गिरिसागरमर्यादं, सिन्धोरुत्तरनिष्कुटम् । नृपाज्ञया सुषेणोऽथ, साधयित्वा समाययौ ॥ ४५८ ॥
भोगान् तत्रोपभुञ्जानश्चिरं तस्थौ महीपतिः । आर्यीकर्तुमिवाऽनार्यान्, निजार्यजनसङ्गमात् ॥ ४५९ ॥
अन्यदाऽऽयुधशालाया, भावि[2]शालं महीभृतः । चक्ररत्नं निरक्रामत्, प्रतिभूः ककुभां जये ॥ ४६० ॥
गच्छतः पूर्वमार्गेणाऽभि क्षुद्रहिमवद्गिरिम् । ययौ तस्याऽध्वना राजा, प्रवाह इव कुल्यया ॥ ४६१ ॥
कैश्चित् प्रयाणकैर्गच्छन्, गजेन्द्र इव लीलया । नितम्बं दक्षिणं क्षुद्रहिमाद्रेः प्राप भूपतिः ॥ ४६२ ॥
तस्मिंश्च भूर्जतगरदेवदारुवनाकुले । न्यधान्नरेन्द्रः शिबिरं, महेन्द्र इव पाण्डके[3] ॥ ४६३ ॥
उद्दिश्य क्षुद्रहिमवत्कुमारं तत्र चाऽऽर्षभिः । चक्रेऽष्टमं कार्यसिद्धेस्तपो मङ्गलमादिमम् ॥ ४६४ ॥
ततश्चाऽष्टमभक्तान्ते, निशान्त[4] इव भास्करः । रथारूढो महातेजा, निर्ययौ शिबिरोदधेः ॥ ४६५ ॥
वेगेन गत्वा हिमवत्पर्वतं त्रिरताडयत् । माटोपो रथशीर्षेण, शीर्षण्यः[5] पृथिवीभुजाम् ॥ ४६६ ॥
हिमाचलकुमाराय, निजनामाङ्कितं शरम् । विससर्जाऽथ भूनाथो, वैशाखस्थानकस्थितः ॥ ४६७ ॥
द्वासप्ततिं योजनानि, विहायसा विहङ्गवत् । शरः स गत्वा हिमवत्कुमारस्य पुरोऽपतत् ॥ ४६८ ॥
स समालोक्य तं बाण[6]मारां व्याल[7] इव द्विपः । कोपादजनि तत्कालं, लोहितायितलोचनः ॥ ४६९ ॥
स करेण गृहीत्वेषुं, तत्र नामाऽक्षराणि च । दृष्ट्वा शमं ययौ दीप, इव पन्नगदर्शनात् ॥ ४७० ॥
प्रधानपुरुषेणेव, राज्ञस्तेनेषुणा सह । उपायनान्युपादाय, स ययौ भरतेश्वरम् ॥ ४७१ ॥
उक्त्वा जयजयेत्युच्चैरन्तरिक्षस्थितोऽथ सः । आदौ भूपाय तं काण्डं, काण्डकार[8] इवाऽर्पयत् ॥ ४७२ ॥
सोऽदाद् देवद्रु[9]सुमनोमालां गोशीर्षचन्दनम् । सर्वौषधीर्हृदाम्भश्च, राज्ञे सारं हि तस्य तत् ॥ ४७३ ॥
कटकान् बाहुरक्षांश्च, देवदूष्यांशुकानि च । ददौ नरपतेर्दण्डे, प्राभृत[10]च्छद्मनाऽथ सः ॥ ४७४ ॥
स्वामिन्नुत्तरदिक्प्रान्ते, तवाऽऽयुक्त[11] इवाऽस्म्यहम् । इत्युक्त्वा विरतो राज्ञा, स सत्कृत्य व्यसृज्यत ॥ ४७५ ॥
अद्रेस्तस्य प्रस्थमिव, सह प्रस्थितमुच्चकैः । स वालयामास रथं, मनोरथमिव द्विषाम् ॥ ४७६ ॥
गत्वा ऋषभकूटाद्रिमृषभस्वामिभूस्ततः । जघान रथशीर्षेण, त्रिर्दन्तेनेव दन्तिराट् ॥ ४७७ ॥
स्थापयित्वा रथं तत्र, पृथिवीपतिरग्रहीत् । पाणिना काकिणीरत्नं[*], रश्मिकोशमिवाऽर्यमा ॥ ४७८ ॥
अवसर्पिण्यां तृतीयारप्रान्ते भरतोऽस्म्यहम् । चक्रीति वर्णान् काकिण्या[†], तत्पूर्वकटकेऽलिखत् ॥ ४७९ ॥
ततो व्यावृत्य सद्वृत्तः, स्कन्धावारं निजं ययौ । चकाराऽष्टमभक्तान्तपारणं च महीपतिः ॥ ४८० ॥
ततश्च क्षुद्रहिमवत्कुमारस्य नरेश्वरः । अष्टाह्निकोत्सवं चक्रेऽनुरूपं चक्रिसम्पदः ॥ ४८१ ॥
गङ्गासिन्धुमहानद्योरन्तरालमहीतले । अमाद्भिरिव वियत्युत्प्लवमानैस्तुरङ्गमैः ॥ ४८२ ॥
सैन्यभारपरिक्लान्तां, सेक्तुकामैरिवाऽवनिम् । प्रस्रवद्भिर्मदजलप्रवाहं गन्धसिन्धुरैः ॥ ४८३ ॥
उद्दामनेमिरेखाभिः, सीमन्तालङ्कृतामिव । विदधानैर्वसुमतीं, स्यन्दिभिः स्यन्दनोत्तमैः ॥ ४८४ ॥
पत्तिभिः कोटिसङ्ख्यैश्च, प्रसरद्भिर्महीतले । दर्शयद्भिर्नराद्वैतं[12]मिवाऽद्वैतपराक्रमैः ॥ ४८५ ॥
अश्ववारानुगो जात्यमतङ्गज इव व्रजन् । चक्ररत्नानुगश्चक्री, प्राप वैताढ्यपर्वतम् ॥ ४८६ ॥
शिबिरं शबरीगीता[13]विगीतादिजिनस्तवे । उदग्नितम्बे तस्याऽद्रेर्नरेन्द्रः सन्न्यवेशयत् ॥ ४८७ ॥
ततो नमिविनम्याख्यौ, विद्याधरपती प्रति । [14]प्रजिघाय विशामीशो, मार्गणं दण्ड[15]मार्गणम् ॥ ४८८ ॥

---

१ सञ्जीवनौषधरूपम् । २ कान्तिविशालम् । ३ पाण्डके वने । ४ प्रातःकाले । ५ अग्रणी । ६ अङ्कुशम् । ७ दुष्टगजः । ८ बाणकारकः । ९ कल्पवृक्षपुष्पमालाम् । १० उपायनमिषेण । ११ भृत्य. । * काकणी° खता ॥ † काकण्या, खंता ॥ १२ नरमयम् । १३ अनिन्द्यः । १४ प्रेरयामास । १५ दण्डयाचकम् ।

आलोक्य मार्गणं तं च, विद्याधरपती वरौ । कोपाटोपसमाविष्टावित्यमन्त्रयतां मिथः ॥ ४८९ ॥
द्वीपस्य जम्बूद्वीपस्य, वर्षेऽत्र भरतेऽधुना । उत्पेदे भरतो हन्त !, प्रथमश्चक्रवर्त्त्ययम् ॥ ४९० ॥
असावृषभकूटाद्रौ, चन्द्रबिम्ब इव स्वयम् । नामधेयं लिखित्वा स्वं, वलितोऽत्र समाययौ ॥ ४९१ ॥
आरोहक इवेभस्य, वैताढ्यस्याऽस्य भूभृतः । पार्श्वे कृतपदो[1]ऽस्त्येष, भूपतिर्भुजगर्वितः ॥ ४९२ ॥
तदेष जितकासी[2] सन्नसत्तोऽपि जिघृक्षति । मन्ये दण्डं तदुद्दण्डं, चिक्षेपाऽस्मासु सायकम् ॥ ४९३ ॥
तावन्योऽन्यमुदित्वैवमुत्थाय समरोन्मुखौ । प्रतस्थाते गिरिप्रस्थं, स्थगयन्तौ निजैर्बलैः ॥ ४९४ ॥
तत्र द्युसद्बलानीव[3], सौधर्मेशाननाथयोः । आज्ञयाऽथ तयोर्विद्याधरानीकान्युपाययुः ॥ ४९५ ॥
तेषामुच्चैः *किलिकिलारावैर्वैताढ्यपर्वतः । जहासेव जगर्जेव, पुस्फोटेव समन्ततः ॥ ४९६ ॥
विद्याधरेन्द्रभृतकाः, कलधौतमयान् पृथून् । दुन्दुभीन् वादयामासुर्वैताढ्यस्येव कन्दरान् ॥ ४९७ ॥
उदग्दक्षिणयोः श्रेण्योर्भूमिग्रामपुराधिपाः । विचित्ररत्नाभरणा, रत्नाकरसुता इव ॥ ४९८ ॥
अस्खलद्गतयो व्योम्नि, सौपर्णेया इवाऽचलन् । समं नमिविनमिभ्यां, तन्मूर्त्तय इवाऽपराः ॥ ४९९ ॥
एयुर्विचित्रमाणिक्यप्रभोद्भासितदिङ्मुखैः । विमानैः केऽप्यसंलक्ष्यभेदा वैमानिकामरैः ॥ ५०० ॥
गर्जद्भिः †शीकरासारवर्षिभिर्गन्धसिन्धुरैः । पुष्करावर्त्तकाम्भोदसोदरैरपरेऽचलन् ॥ ५०१ ॥
आच्छिन्नैरिन्दुमार्त्तण्डप्रभृतिज्योतिषामिव । सुवर्णरत्नरचितैः, स्यन्दनैः केचिदापतन् ॥ ५०२ ॥
गगने वल्गु वल्गद्भिर्वेगातिशयशालिभिः । केऽपि प्रतस्थिरे वायुकुमारैरिव वाजिभिः ॥ ५०३ ॥
विहस्तहस्ताः[4] शस्त्रौघैर्वज्रसन्नाहधारिणः । प्लवमानाः ‡प्लवङ्गवत्, केचिदेयुः पदातयः ॥ ५०४ ॥
तावथोत्तीर्य वैताढ्याद्, विद्याधरबलावृतौ । युयुत्समानौ सन्नद्धौ, भरतेश्वरमीयतुः ॥ ५०५ ॥
कुर्वन् मणिविमानैर्द्यां, बहुसूर्यमयीमिव । प्रज्वलद्भिः प्रहरणैस्तडिन्मालामयीमिव ॥ ५०६ ॥
उद्दामदुन्दुभिध्वानैर्मेघघोषमयीमिव । विद्याधरबलं व्योमन्यपश्यद् भरतस्ततः ॥ ५०७ ॥
दण्डार्थिन् ! दण्डमसत्तस्त्वं गृह्णासीति भाषिणौ । आहवायाह्वयेतां तौ, विद्योद्दप्तौ[5] महीपतिम् ॥ ५०८ ॥
अथ ताभ्यां ससैन्याभ्यां, प्रत्येकं युगपच्च सः । युयुधे विविधैर्युद्धैर्युद्धाज्यो[6] यज्ञयश्रियः ॥ ५०९ ॥
युधा द्वादशवार्षिक्या, विद्याधरपती जितौ । प्राञ्जली प्रणिपत्यैवं, भरताधीशमूचतुः ॥ ५१० ॥
रवेरुपरि किं तेजो ?, वायोरुपरि को जवी ? । मोक्षस्योपरि किं सौख्यं ?, कश्च शूरस्तवोपरि ? ॥५११ ॥
ऋषभो भगवान् साक्षादद्य दृष्टस्त्वमार्षभे ! । अज्ञानाद् योधितोऽस्माभिः, कुलस्वामिन् ! सहस्व तत् ॥५१२॥
ऋषभस्वामिनो भृत्यौ, पुरा वामधुना तु ते । सेवावृत्तिर्न लज्जायै, स्वामिवत् स्वामिनन्दने ॥ ५१३ ॥
याम्योदग्भरतार्द्धान्तर्वर्त्तिवैताढ्यपार्श्वयोः । दुर्गपालाविवेहाऽऽवां, स्थास्यावः शासनेन ते ॥ ५१४ ॥
इत्यस्य वचनस्याऽन्ते, विनम्य विनमिर्नृपः । विदधे दित्समानोऽपि, यियाचिषुरिवाऽञ्जलिम् ॥ ५१५ ॥
समचतुरस्राकारां, स्त्रीं दत्त्वेव निर्मिताम् । त्रैलोक्यवर्तिमाणिक्यतेजःपुञ्जमयीमिव ॥ ५१६ ॥
यौवनेन नखैः केशैः, श्रीमद्भिः सर्वदा स्थितैः । विराजमानामत्यन्तं, कृतज्ञैरिव सेवकैः ॥ ५१७ ॥
सर्वामयोपशमनीं[7], बल्यां[8] दिव्यामिवौषधीम् । यथाकामीनशीतोष्णसंस्पर्शां[9] दिव्यवारिवत् ॥ ५१८ ॥
त्रिषु[10] श्यामां त्रिषु[11] श्वेतां, त्रिषु[12] ताम्रां त्रिषून्नताम्[13] । त्रिगम्भीरां[14] त्रिविस्तीर्णां[15], त्र्यायतां[16] त्रिकृशीयसीम्[17] ॥५१९॥
जयन्तीं केशपाशेन, कलापान् प्रचलाकिनाम्[18] । पराभवन्तीं भालेन, पक्षमध्येक्षपाकरम्[19] ॥ ५२० ॥

---

१ कृतस्थानः । २ जयाभिमानी । ३ देवसैन्यानि इव । * किलकिला° स १, २. ॥ † सीकरा° सं १, खं ॥ ४ व्याकुलहस्ताः । ‡ प्लवगवत् आ ॥ ५ विद्योन्मत्तौ । ६ वेगवान् । ७ सर्वरोगोपशमनीम् । ८ बलहेतुकाम् । ९ यथेच्छशीतोष्णसंस्पर्शाम् । १० केशादिषु । ११ देहादिषु । १२ करतलादिषु । १३ स्तनादिषु । १४ नाभ्यादिषु । १५ नितम्बादिषु । १६ लोचनादिषु । १७ उदरादिषु । १८ मयूराणाम् । १९ अष्टमीचन्द्रम् ।

गतिप्रीत्योरिव क्रीडादीर्घिके दधतीं दृशौ । नासां च भाललावण्यजलधारामिवाऽऽयताम् ॥ ५२१ ॥
कपोलाभ्यां नवस्वर्णादर्शाभ्यामिव शोभिताम् । दोलाभ्यामिव कर्णाभ्यां, लग्नाभ्यामंसदेशयोः ॥ ५२२ ॥
बिभ्राणामधरौ युग्मजातबिम्बविडम्बिनौ । दन्तांश्च वज्रशकलश्रेणिशोभाभिभावकान् ॥ ५२३ ॥
बिभ्राणां मध्यमिव च, त्रिरेखं कँण्ठकन्दलम् । भुजे च नलिनीनालसरले बिसकोमले ॥ ५२४ ॥
कुचौ दधानां कामस्य, कल्याणकलशाविव । स्तनापहृतबाहल्यमिव मध्यं च पेलवम् ॥ ५२५ ॥
वहन्तीं सरिदावर्त्तसनाभिं नाभिमण्डलम् । रोमालीं च नाभिवापीतीरदूर्वावलीमिव ॥ ५२६ ॥
नितम्बेन विशालेन, तल्पेनेव मनोभुवः । दोलासुवर्णस्तम्भाभ्यामिवोरुभ्यां च राजिताम् ॥ ५२७ ॥
जङ्घाभ्यामेणिकाजङ्घे, अधरीकुर्वतीतराम् । पाणिभ्यामिव पादाभ्यां, पङ्कजानि निकुर्वतीम् ॥ ५२८ ॥
पाणिपादाङ्गुलिदलैर्वल्लीं पल्लवितामिव । नखै रत्नै रोचमानै, रत्नाचलतटीमिव ॥ ५२९ ॥
शोभमानां च वासोभिर्विशालस्वच्छकोमलैः । चलँन्मृदुमरुज्जातोत्कलिकाभिरिवाऽऽपगाम् ॥ ५३० ॥
मनोरमैरवयवैः, स्वच्छकान्तितरङ्गितैः । भूषयन्तीं भूषणानि, रत्नस्वर्णमयान्यपि ॥ ५३१ ॥
पृष्ठतश्छत्रधारिण्या, छाययेव निषेविताम् । सञ्चरचामराभ्यां च, हंसाभ्यामिव पद्मिनीम् ॥ ५३२ ॥
अप्सरोभिः श्रियमिवाऽऽपगाभिर्जाह्नवीमिव । सहस्रशो वयस्याभिः, परितः परिवारिताम् ॥ ५३३ ॥
नाम्ना सुभद्रां स्त्रीरत्नं, स स्वां दुहितरं ततः । राज्ञे विश्राणयामास, स्थिरीभूतामिव श्रियम् ॥ ५३४ ॥
[ विंशत्या कुलकम् ]
महामूल्यानि रत्नानि, भूभुजे नमिरप्यदात् । गृहागते स्वामिनि हि, किमदेयं महात्मनाम् ? ॥ ५३५ ॥
अथ राज्ञा विसृष्टौ तौ, राज्यान्यारोप्य सूनुषु । विरक्तावृषभेशाङ्घ्रिमूले जगृहतुर्व्रतम् ॥ ५३६ ॥
ततोऽपि चलितवतश्चक्ररत्नस्य पृष्ठतः । गच्छन् सोऽमन्दतेजस्कः, प्राप मन्दाकिनीतटम् ॥ ५३७ ॥
नात्यासन्ने नातिदूरे, जाह्नवीसदनस्य सः । सैन्यान्यावासयामास, वसुँमत्येकवासवः ॥ ५३८ ॥
गङ्गां सिन्धुवदुत्तीर्य, नृपादेशाच्चमूपतिः । सुषेणः साधयामास, गाङ्गमुत्तरनिष्कुटम् ॥ ५३९ ॥
ततः सोऽष्टमभक्तेन, गङ्गादेवीमसाधयत् । उपचारः समर्थानां, मद्यो भवति सिद्धये ॥ ५४० ॥
राज्ञे विश्राणयामास, रत्नसिंहासनद्वयम् । अष्टोत्तरं रत्नकुम्भसहस्रं च सरिद्वरा ॥ ५४१ ॥
भरतं रूपलावण्यकिङ्करीकृतमन्मथम् । तत्राऽवलोक्य गङ्गाऽपि, प्राप क्षोभमयीं दशाम् ॥ ५४२ ॥
विराजमाना सर्वाङ्गं, मुक्तामयविभूषणैः । वदनेन्दोरनुगतैस्तारैस्तारागणैरिव ॥ ५४३ ॥
वस्त्राणि कदलीगर्भत्वक्सगर्भाणि बिभ्रती । स्वप्रवाहपयांसीव, तद्रूपपरिणामतः ॥ ५४४ ॥
रोमाञ्चकञ्चुकोदञ्चत्कुचस्फुटितकञ्चुका । स्वयंवरस्रजमिव, क्षिपन्तीं धवलां दृशम् ॥ ५४५ ॥
प्रेमगद्गदया वाचा, गाढमभ्यर्थ्य पार्थिवम् । रिरंसमाना साऽनैषीद्, देवी रतिनिकेतनम् ॥ ५४६ ॥
[ चतुर्भिः कलापकम् ]
भुञ्जानो विविधान् भोगांस्तत्र राजा तया सह । एकाहमिव वर्षाणां, सहस्रं सोऽत्यवाहयत् ॥ ५४७ ॥
कथञ्चिदपि सम्बोध्य, सोऽनुज्ञाप्य च जाह्नवीम् । खण्डप्रपाताभिमुखं, चचाल प्रबलैर्बलैः ॥५४८॥
गुहां खण्डप्रपाताख्यामखण्डितपराक्रमः । ततः स्थानान्नृपः प्राप, केसरीव वनाद् वनम् ॥ ५४९ ॥
अथ खण्डप्रपाताया, गुहायाः सोऽपि दूरतः । निवेशयामास बलं, बलेनाऽतिमहाबलः ॥ ५५० ॥
तत्र देवं नाट्यमालं, कृत्वा मनसि भूपतिः । चक्रेऽष्टमतपोऽचालीत्, तस्य देवस्य चाऽऽसनम् ॥५५१॥
स ज्ञात्वाऽवधिना तत्राऽऽयातं भरतचक्रिणम् । उपायनैरुत्तमर्णमधमर्ण इवाऽऽययौ ॥ ५५२ ॥

* °कण्ठमण्डलम्° आ ॥ १ मृगीजङ्घे । २ तिरस्कुर्वतीम् । ३ चलन्मृदुपवनजातलहरीभि. । ४ पृथ्व्यामेकइन्द्रः । ५ गङ्गा । ६ सम्भोगस्थानम् । ७ एकदिनमिव ।

षट्खण्डक्ष्माभूषणस्य, स देवो भूरिभक्तिभाक् । भूषणान्यर्पयामास, सेवां च प्रत्यपद्यत ॥ ५५३ ॥
कृतनाट्यं नटमिव, नाट्यमालसुरं ततः । प्रसादपूर्वमुर्वीशो, विससर्ज विवेकयुक् ॥ ५५४ ॥
पारणं विदधे भूपस्तस्य चाऽष्टाह्निकोत्सवम् । सुषेणं चाऽऽदिशत् खण्डप्रपातोद्घाट्यतामिति ॥ ५५५ ॥
नाट्यमालं चमूनाथः, कृत्वा मनसि मन्त्रवत् । चक्रेऽष्टममग्रहीच्च, पौषधं पौषधौकसि ॥ ५५६ ॥
निष्क्रम्य पौषधागारादष्टमान्ते चमूपतिः । प्रतिष्ठायामिवाऽऽचार्यवर्यो बलिविधिं व्यधात् ॥ ५५७ ॥
ततश्च विहितप्रायश्चित्तकौतुकमङ्गलः । महार्घ्यस्वल्पनेपथ्यभृद् धूपदहनं दधत् ॥ ५५८ ॥
खण्डप्रपातां स ययावालोकेऽपि ननाम च । आनर्च तत्कपाटे च, लिलेख चाऽष्टमङ्गलीम् ॥ ५५९ ॥
पदान्यपेत्य सप्ताऽथ, कपाटोद्घाटनाय सः । उपाददे दण्डरत्नं, काञ्चनीमिव कुञ्चिकाम् ॥ ५६० ॥
तेनाऽऽहतं च दण्डेन, तत्कपाटद्वयं क्षणात् । व्यघटिष्टांऽशुमद्रश्मिस्पृष्टपङ्कजकोशवत् ॥ ५६१ ॥
आरूढः करिणः स्कन्धं, कुम्भदेशे च दक्षिणे । मणिरत्नं निवेश्योच्चैस्तां विवेश गुहां नृपः ॥ ५६२ ॥
अन्वीयमानः सैन्येन, भरतस्तिमिरच्छिदे । काकिण्या पूर्ववत् तत्र, मण्डलान्यालिखन् ययौ ॥ ५६३ ॥
निःसरन्त्यौ गुहाप्रत्यग्भित्तेः प्राग्भित्तिमध्यतः । भूत्वा मिलन्त्यौ जाह्नव्या, सख्या सख्याविवाऽभितः ॥ ५६४
ते उन्मग्ना-निमग्नाख्ये, निम्नगे प्राप भूपतिः । प्राग्वच्च पद्यया सद्यो, ललङ्घे सह सेनया ॥ ५६५ ॥
तद्गुहादक्षिणद्वारं, स्वयमुज्जघटे क्षणात् । सैन्यशल्यातुरेणेव, वैताढ्येनाऽद्रिणेरितम्[२] ॥ ५६६ ॥
निर्ययौ तद्गुहामध्यात्, केसरीव नरेश्वरः । स्कन्धावारं च निदधे, गाङ्गे रोधसि पश्चिमे ॥ ५६७ ॥
उद्दिश्य च निधीन् पृथ्वीपतिश्चक्रेऽष्टमं तपः । प्राक्तपोऽर्जितलब्धीनामागमे मार्गदर्शकम् ॥ ५६८ ॥
अष्टमान्ते तमभ्येयुर्निधयो नव विश्रुताः । सदा यक्षसहस्रेण, ते प्रत्येकमधिष्ठिताः ॥ ५६९ ॥
नैसर्पः[1] पाण्डुकश्चाऽथ[2], पिङ्गलः[3] सर्वरत्नकः[4] । महापद्मः[5] कालमहाकालौ[6,7] माणवशङ्खकौ[8,9] ॥ ५७० ॥
तेऽष्टचक्रप्रतिष्ठाना, उत्सेधे चाऽष्टयोजनाः । नवयोजनविस्तीर्णा, दैर्घ्ये द्वादशयोजनाः ॥ ५७१ ॥
वैडूर्यमणिकपाटस्थगितवदनाः समाः । काञ्चना रत्नसम्पूर्णाश्चक्रचन्द्रार्कलाञ्छनाः ॥ ५७२ ॥
तेषामेवाऽभिधानैस्तु, तदधिष्ठायकाः सुराः । पल्योपमायुषो नागकुमारास्तन्निवासिनः ॥ ५७३ ॥
स्कन्धावारपुरग्रामाकर[३]द्रोणमुखौकसाम् । मडम्बपत्तनानां च, नैसर्पाद् विनिवेशनम् ॥ ५७४ ॥
मानोन्मानप्रमाणानां, सर्वस्य गणितस्य च । धान्यानामथ बीजानां, सम्भवः पाण्डुकान्निधेः ॥ ५७५ ॥
नराणामथ नारीणां, हस्तिनां वाजिनामपि । सर्वोऽप्याभरणविधिर्निधेर्भवति पिङ्गलात् ॥ ५७६ ॥
एकेन्द्रियाणि सप्ताऽपि, सप्त पञ्चेन्द्रियाणि च । चक्रिरत्नानि जायन्ते, सर्वरत्नाभिधे निधौ ॥ ५७७ ॥
वस्त्राणां सर्वभक्तीनां, शुद्धानां रागिणामपि । सञ्जायते समुत्पत्तिर्महापद्मान्महानिधेः ॥ ५७८ ॥
भविष्यद्भूतयोर्ज्ञानं, वत्सरांस्त्रीन् सतो[४]ऽपि च । कृष्यादीनि च कर्माणि, शिल्पान्यपि च कालतः ॥ ५७९ ॥
प्रवालरजतस्वर्णशिलामुक्ताफलायसाम् । तथा लोहाद्याकराणां, महाकाले समुद्भवः ॥ ५८० ॥
योधानामायुधानां च, सन्नाहानां च सम्पदः । युद्धनीतिरशेषाऽपि, दण्डनीतिश्च माणवात् ॥ ५८१ ॥
चतुर्धा काव्यनिष्पत्तिर्नाट्यनाटकयोर्विधिः । तूर्याणामखिलानां चोत्पत्तिः शङ्खान्महानिधेः ॥ ५८२ ॥
ऊचुस्ते च वयं गङ्गामुखमागधवासिनः । आगतास्त्वां महाभाग!, भवद्भाग्यैर्वशीकृताः ॥ ५८३ ॥
यथाकाममविश्रान्तमुपभुङ्क्ष्व प्रयच्छ च । अपि क्षीयेत पाथो[५]ऽब्धौ, न तु क्षीयामहे वयम् ॥ ५८४ ॥
वशं यातेषु निधिषु, नृपो व्यधित पारणम् । अष्टाह्निकोत्सवं तेषां, निर्विकारश्चकार च ॥ ५८५ ॥
नृपाज्ञया सुषेणोऽपि, गङ्गादक्षिणनिष्कुटम् । पल्लीवल्लीलया सर्वं, साधयित्वा समाययौ ॥ ५८६ ॥

---

* सप्ताष्ट, क° स २, आ ॥ १ मागण । २ प्रेरितम् । ३ आकर. खनि., जल-स्थलपथाभ्यां यत्र भाण्डाद्यागच्छति तद् द्रोणमुखम् । ४ वर्तमानस्य । ५ जलम् ।

तत्राऽस्थाल्लीलयाऽऽक्रान्तपूर्वापरपयोनिधिः। द्वितीय इव वैताढ्यो, बहुकालमिलापतिः ॥ ५८७ ॥
अन्येद्युः साधिताशेषभरतं भरतेशितुः। अयोध्याभिमुखं चक्रमचालीद् गगनस्थितम् ॥ ५८८ ॥
भरतोऽपि कृतस्नानो, विधाय बलिकर्म च। नेपथ्यभृत् कृतप्रायश्चित्तकौतुकमङ्गलः ॥ ५८९ ॥
कुञ्जराधिपतिस्कन्धमारूढो देवराडिव। नवभिर्निधिभिः पुष्टकोशः कल्पद्रुमैरिव ॥ ५९० ॥
निरन्तरं महारत्नैश्चतुर्दशभिरावृतः। सुमङ्गलायाः स्वप्नानां, पृथग्भूतैः फलैरिव ॥ ५९१ ॥
*राज्ञां कुलश्रीभिरिवोढाभिर्दुहितृभिः क्रमात्। द्वात्रिंशता सहस्रैश्चाऽसूर्यम्पश्याभिरन्वितः ॥ ५९२ ॥
तावद्भिर्जनपदभूस्त्रीसहस्रैश्च सुन्दरैः। अप्सरोभिरिवाऽत्यन्तचारुभिः परिशोभितः ॥ ५९३ ॥
श्रितो द्वात्रिंशता राजसहस्रैः पदिकैरिव। चतुरशीत्येभलक्षैर्विन्ध्याद्रिरिव राजितः ॥ ५९४ ॥
अश्वै रथैश्च तावद्भिर्विश्वतोऽप्याहृतैरिव। ‡भटानां षण्णवत्या च, कोटिभिश्छन्नभूतलः ॥ ५९५ ॥
आद्यप्रयाणदिवसादतिक्रान्तेषु सत्स्वथ। षष्टौ वर्षसहस्रेषु, चक्रमार्गानुगोऽचलत् ॥ ५९६ ॥
[ अष्टभिः कुलकम् ]

सैन्योद्धूतरजःपूरपरिस्पर्शमलीमसान्। खेचरानपि कुर्वाणः, कृतभूलुठनानिव ॥ ५९७ ॥
व्यन्तरान् भवनपतींश्चाऽपि भूमध्यवासिनः। सैन्यभारान्महीभेदशङ्कोत्पादेन भापयन् ॥ ५९८ ॥
गोकुले गोकुले गोपसुदृशां विकसद्दृशाम्। गृह्णन् हैयङ्गवीनार्घमनर्घ्यमिव भक्तितः ॥ ५९९ ॥
कुम्भिकुम्भस्थलोद्भूतमौक्तिकप्रभृतीनि च। प्राभृतानि किरातानामाददानो वने वने ॥ ६०० ॥
पर्वते पर्वते भूपैः, ¶पार्वतीयैः पुरो धृतम्। रत्नस्वर्णखनीसारं, स्वीकुर्वन्नुर्वनेकशः ॥ ६०१ ॥
ग्रामे ग्रामे ग्रामवृद्धान्, सोत्कण्ठान् बान्धवानिव। अनुगृह्णन् सप्रसादमात्तानात्तैरुपायनैः ॥ ६०२ ॥
निजाज्ञायष्टिनोग्रेण, विष्वक् प्रसृमरानपि। ग्रामेभ्यः सैनिकान् रक्षन्, क्षेत्रेभ्यो गा इवाऽभितः ॥ ६०३ ॥
वृक्षाधिरूढान् प्लवगानिव ग्रामीणदारकान्। सहर्षं पश्यतः पश्यन्, जनकस्तनयानिव ॥ ६०४ ॥
धान्यैर्धनैर्जीवधनैः, सर्वदा निरुपद्रवैः। ग्रामाणां सम्पदं पश्यन्, निजनीतिलताफलम् ॥ ६०५ ॥
आपगाः पङ्किलीकुर्वन्, सरांसि परिशोषयन्। वापीकूपांश्च कुर्वाणः, पातालशुषिरोपमान् ॥ ६०६ ॥
मलयानिलवल्लोकसुखं गच्छन् शनैः शनैः। विनीतानां आपदुर्वीशो, दुर्विनीतारियामनः ॥ ६०७ ॥
[ एकादशभिः कुलकम् ]

अविदूरे विनीतायाः, स्कन्धावारं न्यवेशयत्। तस्याः सहोदरमिवाऽनिर्भूतं महीपतिः ॥ ६०८ ॥
कृत्वा मनसि तां राजधानीं राजशिरोमणिः। चकार निरुपसर्गप्रत्ययं सोऽष्टमं नृपः ॥ ६०९ ॥
निष्क्रम्याऽष्टमभक्तान्ते, पौषधागारतो नृपः। पारणं विदधे दिव्यरसवत्या नृपैः सह ॥ ६१० ॥
अयोध्यायां न्यबध्यन्त, तोरणानि पदे पदे। दिगन्तरागतश्रीणां, क्रीडादोला इवोच्चकैः ॥ ६११ ॥
चक्रुः पौराः पथि पथि सेकं कुङ्कुमवारिभिः। गन्धाम्बुवृष्टिभिरिव, स्वर्गिणो जिनजन्मनि ॥ ६१२ ॥
मञ्चान् विरचयामासुः स्वर्णस्तम्भैः पुरीमहः। अनेकीभूय निधिभिः, पुरोभूयागतैरिव ॥ ६१३ ॥
अभात्तुभयतो मार्गं, मञ्चास्तेऽन्योऽन्यसम्मुखाः। स्वर्णाद्रय इव कुरुष्वभितो ह्रदपञ्चकम् ॥ ६१४ ॥
प्रतिमञ्चमजायन्त, रत्नभाजनतोरणाः। प्राचीनबर्हिकोदण्डश्रेणिशोभाभिभाविनः ॥ ६१५ ॥
समं वीणामृदङ्गादिवादकैर्गायनीजनः। विमानेष्विव गन्धर्वानीकं मञ्चेष्ववास्थित ॥ ६१६ ॥

---

* राजन्यकदुहितॄणां मूर्त्तानां सत्क्रियामिव। द्वात्रिंशता सहस्रैश्च नवोढानां समावृतः म १ ख ॥
† °श्चैस्तथोच्चकैः स १ ॥ ‡ वृतो भटैः षण्णवत्या, म २ आ ॥ § पथिवर्त्मे म १ ॥ १ गोपालस्त्रीणाम्।
२ नवनीतम्। ¶ पर्वतीयैः स, म २ ॥ ३ महत्। ४ गृहीतागृहीतैः। ५ प्रसृतान्। ६ नदीः। ७ पातालच्छिद्रोपमान्।
८ सेचनम्। ९ इन्द्रधनुःश्रेणिशोभातिरस्कारिणः।

मुक्तावचूला मञ्चेषु, बभुरुल्लोचलम्बिनः । कान्तिस्तबकिताकाशा, वासागारेष्विव श्रियः ॥ ६१७ ॥
प्रमोदमानपूर्व्या, हसितैरिव चामरैः । दिवो मण्डनभङ्गीभिरिव चित्रकचर्मभिः ॥ ६१८ ॥
कौतुकादागतैर्धिष्ण्यैरिव काञ्चनदर्पणैः । खेचराणां हस्तशाटैरिव वासोभिरद्भुतैः ॥ ६१९ ॥
विचित्रमणिमालाभिर्मेखलाभिरिव श्रियाम् । उत्तम्भितेषु स्तम्भेषु, हट्टशोभां व्यधुर्जनाः ६२० ॥
[ त्रिभिर्विशेषकम् ]

प्रक्वणत्किङ्किणीमालाः, पताकाश्च बबन्धिरे । दर्शयन्त्यः शरत्कालं, कलनिर्ह्रादसारसम् ॥ ६२१ ॥
प्रत्यट्टं प्रतिगेहं च, यक्षकर्दमगोमयैः । लिप्तेष्वदादङ्गणेषु, मौक्तिकस्वस्तिकान् जनः ॥ ६२२ ॥
अपूर्यन्ताऽगरुक्षोदैर्धूपघट्यः पदे पदे । उच्चैर्धूमायमाना द्यामपि धूपायितुं ध्रुवम् ॥ ६२३ ॥
प्रवेष्टुकामो नगरीमारुरोह शुभे क्षणे । गजं मेघमिवोद्गर्जं, चक्री भूमेघवाहनः ॥ ६२४ ॥
एकेनैवाऽऽतपत्रेण, कर्पूरक्षोदपाण्डुना । हिमांशुमण्डलेनेव, गगनं परिशोभयन् ॥ ६२५ ॥
सङ्क्षिप्य स्वं वपुर्भक्त्या, चामरद्वितयच्छलात् । अभ्युपेत्य समं गङ्गासिन्धुभ्यामिव सेवितः ॥ ६२६ ॥
वासोभिः शोभितः शुभ्रैः, सुसूक्ष्मैर्मसृणैर्घनैः । स्फाटिकाद्रिशिलासारं, त्वचयित्वेव निर्मितैः ॥ ६२७ ॥
प्रेम्णा रत्नप्रभाभूम्या, निजसारैरिवाऽर्पितैः । विचित्ररत्नालङ्कारैः, सर्वाङ्गीणमलङ्कृतः ॥ ६२८ ॥
नृपैराबद्धमाणिक्यमुकुटैः परिवारितः । फणामणिधरैर्नागकुमारैरिव नागराट् ॥ ६२९ ॥
वैतालिकैर्जयजयारावपूर्वं प्रमोदिभिः । कीर्त्यमानाद्भुतगुणः, सुत्रामा चारणैरिव ॥ ६३० ॥
मङ्गल्यतूर्यनिर्घोषप्रतिशब्दापदेशतः । रोदसीभ्यामपि भृशं, कृतमाङ्गलिकध्वनिः ॥ ६३१ ॥
तेजोबिडौजा नृपतिर्भाण्डागारमिवौजसाम् । यतेन कुञ्जरं किञ्चित्, प्रेरयन् प्रचचाल सः ॥ ६३२ ॥
[ अष्टभिः कुलकम् ]

अवतीर्णं दिव इव, भूमध्यादिव चोत्थितम् । चिरायातं नृपं द्रष्टुं, ग्रामादिभ्योऽभ्यगाज्जनः ॥ ६३३ ॥
सा राज्ञः सकला सेना, लोकश्च मिलितो बभौ । मर्त्यलोकः समग्रोऽपि, पिण्डीभूत इवैकतः ॥ ६३४ ॥
नैरन्तर्यादनीकानां, लोकानां चाऽभ्युपेयुषाम् । मुक्तस्तिलोऽपि हि तदा, न पपात महीतले ॥ ६३५ ॥
स्तूयमानो मुदोत्तालैः, कैश्चिद् वैतालिकैरिव । वीज्यमानोऽञ्चलैः कैश्चिच्चञ्चलैश्चामरैरिव ॥ ६३६ ॥
भालस्थाञ्जलिभिः कैश्चिद्, वन्द्यमानोऽंशुमानिव । अर्प्यमाणफलपुष्पः, कैश्चिदारामिकैरिव ॥ ६३७ ॥
प्रणम्यमानः स्वकुलदेवतेव च कैश्चन । कैश्चित् प्रदीयमानाशीर्गोत्रवृद्धाजनैरिव ॥ ६३८ ॥
प्रविवेश विशामीशश्चतुर्द्वारां पुरीं स ताम् । पूर्वद्वारेण समवसरणं नाभिभूरिव ॥६३९॥[चतुर्भिः कलापकम्]
प्रत्येकमपि मञ्चेषु, सङ्गीतानि तदाऽभवन् । युगपल्लग्नघटिकातूर्यनादा इवोच्चकैः ॥ ६४० ॥
पुरो गच्छति भूपाले, राजमार्गापणस्थिताः । मुदिताः पौरसुदृशो, लाजान् दृश इवाऽक्षिपन् ॥ ६४१ ॥
पौरप्रक्षिप्तकुसुमदामभिः पिहितोऽभितः । सोऽभूत् पुष्परथप्रायो, राजकुञ्जरकुञ्जरः ॥ ६४१ ॥
शनैः शनै राजपथे, प्रययौ जगतीपतिः । उत्कण्ठितानां लोकानामकुण्ठोत्कण्ठया पुनः ॥ ६४३ ॥
नाऽजीगणन् गजभयमभ्यर्णेऽभ्येत्य भूभुजे । फलादीन्यार्पयन् पौराः, प्रमोदो बलवान् खलु ॥ ६४४ ॥
ताडयन् सृणिदण्डेन, मध्येकुम्भस्थलं नृपः । मञ्चयोर्मञ्चयोरन्तः, स्थिरीचक्रे मतङ्गजम् ॥ ६४५ ॥
मञ्चानामुभयेषां चाऽग्रस्थाः प्रवरयोषितः । कर्पूरारात्रिकं चक्रुर्युगपच्चक्रवर्तिनः ॥ ६४६ ॥
भूपतिः पार्श्वयोर्भ्राम्यज्ज्वलदारात्रिकस्तदा । बभारोभयपार्श्वस्थार्केन्दुमेरुगिरिश्रियम् ॥ ६४७ ॥

* °मानभूर्व्या स १ ॥ १ मक्षत्रै. । २ हस्तपटै । † श्रियः आ, स २ ॥ ३ अगरुचूर्णैः । ४ राजा । ५ कोमलैः । ‡ स्फटिका° सं १ २ ॥ ६ खण्डयित्वा । ७ सर्वाङ्गेषु । ८ इन्द्र । ९ व्याजतः । १० तेजसा इन्द्रः । § यत्नेन खं । ¶ मदोत्तालैः सं २, आ ॥ ११ भ्रष्टव्रीहीन् । + जगतांपतिः आ ॥ १२ अङ्कुशेन ।

स्थालान्युत्क्षिप्य पूर्णानि, मौक्तिकैरक्षतैरिव । आपणाग्रे स्थितान् दृष्ट्याऽऽलिलिङ्गेव स वाणिजान् ॥६४८॥
मार्गासन्नेषु हर्म्येषु, द्वारस्थकुलयोषिताम् । मङ्गलानि प्रतीये[1]ष, स्वसॄ[2]णामिव पार्थिवः ॥ ६४९ ॥
दिदृक्षयाऽन्तिकीभूतान्, जनान् परिजनानिव । वेत्रिभ्योऽरक्षदुत्क्षिप्ताभयप्रदकरो नृपः ॥ ६५० ॥
अग्रभूमावुभयतो, बद्धाभ्यामतिबन्धुरम् । सिन्धु[3]राभ्यां राज्यलक्ष्मीक्रीडाद्रिभ्यामिवोच्चकैः ॥ ६५१ ॥
द्वारेणोभयतः स्वर्णकुम्भाभ्यामतिशोभिना । स्रोतसेव रथाङ्गाभ्यां, विशालेन विराजितम् ॥ ६५२ ॥
माकन्ददलपूर्णेन, तोरणेनाऽतिहारिणा । इन्द्रनीलमयग्रीवाभरणेनेव भूषितम् ॥ ६५३ ॥
क्वचिन्मुक्ताकणगणैः, क्वचित् कर्पूरपांशुभिः । क्वचिच्च चन्द्रमणिभिः, कृतस्वस्तिकमङ्गलम् ॥ ६५४ ॥
क्वचिच्च चीनवासोभिर्दुकूलवसनैः क्वचित् । देवदूष्यैरपि क्वाऽपि, पताकामालभारिणम् ॥ ६५५ ॥
क्वचित् कर्पूरपानीयैः, पुष्पद्रुतिरसैः क्वचित् । क्वचिद् गजमदाम्भोभिरजिरे कृतसेचनम् ॥ ६५६ ॥
विश्रान्तपूषाणमिव, सुवर्णकलसच्छलात् । सप्तभूमं भूमिपालः, पित्र्यं प्रासादमासदत् ॥ ६५७ ॥
[ सप्तभिः कुलकम् ]

तस्याऽङ्गणाग्रवलभीवेद्यां[4] पादं निवेशयन् । उत्ततार द्विपाद् वेत्रिदत्तहस्तस्ततो नृपः ॥ ६५८ ॥
आचार्य इव सम्पूज्य, स्वाधिष्ठायकदेवताः । ताः* षोडश सहस्राणि, व्यसृजज्जगतीपतिः ॥ ६५९ ॥
तद्वद्द्वात्रिंशतं राजसहस्राणि चमूपतिम् । पुरोहितं गृहपतिं, वर्द्धकिं विससर्ज सः ॥ ६६० ॥
†सूदांश्च[5] स त्रिषष्टीनि, शतानि त्रीणि भूपतिः । स्वस्थानायाऽऽदिशद् दृष्ट्याऽऽलानायेव मतङ्गजान् ॥६६१॥
श्रेष्ठिनोऽष्टादशश्रेणिप्रश्रेणीर्दुर्गपालकान् । व्यसृजत् सार्थवाहानप्युत्सवान्तेऽतिथीनिव ॥ ६६२ ॥
शक्रः शच्येव सहितः, स्त्रीरत्नेन सुभद्रया । द्वात्रिंशता सहस्रैश्च, राज्ञीनां‡ राजजन्मनाम् ॥ ६६३ ॥
तावतीभिर्जनपदाग्रणीकन्याभिरावृतः । प्रत्येकं द्वात्रिंशत्पात्रैस्तावद्भिर्नाटकैरपि ॥ ६६४ ॥
मणिरत्नशिलाश्रेणिविश्राणितदृगुत्सवम् । प्रासादं प्राविशद् भूपः, कैलासमिव यक्षराट्[6] ॥ ६६५ ॥
[ त्रिभिर्विशेषकम् ]

तत्र च प्राङ्मुखः सिंहासने स्थित्वा क्षणं नृपः । कृत्वा च सङ्कथाः काश्चिद्, ययौ स्नाननिकेतनम् ॥ ६६६ ॥
सरसीव द्विपस्तत्र, कृत्वा स्नानं नरेश्वरः । समं परिजनैश्चक्रे, §सुरसाहारभोजनम् ॥ ६६७ ॥
तैर्नाटकैर्नवरसैः, सङ्गीतैश्च मनोरमैः । निनाय कालं कमपि, योगैर्योगीव भूपतिः ॥ ६६८ ॥
तं च विज्ञपयामासुर्भक्त्या सुरनरा इति । सविद्याधरराजेयं[7], षट्खण्डाऽसाधि भूस्त्वया ॥ ६६९ ॥
अस्मांस्तदनुमन्यस्व, शतमन्युपराक्रम[8] ! । महाराज्याभिषेकं ते, स्वच्छन्दं कुर्महे यथा ॥ ६७० ॥
राज्ञा तथेत्यनुज्ञाताः, सुराः पुर्या बहिर्व्यधुः । सुधर्मायाः खण्डमिव, पूर्वोदग्दिशि[9] मण्डपम् ॥ ६७१ ॥
ह्रदेभ्यो ह्रदिनी[10]भ्यश्च, ह्रदिनीनाथ[11]तोऽपि च । तीर्थेभ्यश्चाऽऽहरन्नीरमौषधीर्मृत्तिकाश्च ते ॥ ६७२ ॥
गत्वा पौषधशालायां, राजाऽष्टमतपोऽग्रहीत् । राज्यं तपसाऽऽप्तमपि, तपसैव हि नन्दति ॥ ६७३ ॥
राजाऽष्टमे परिणमत्यन्तःपुरवृतो ययौ । वारणेन[12] परीवारयुतस्तं दिव्यमण्डपम् ॥ ६७४ ॥
अन्तःपुरेण¶ सह तैर्नाटकैश्च सहस्रशः । भरतः प्रविवेशाऽभिषेकमण्डप‖मुन्नतम् ॥ ६७५ ॥
स मृगेन्द्रासनं तत्र, स्नानपीठं मणीमयम् । चक्री प्रदक्षिणीचक्रे, मेरुशैलमिवाऽर्यमा ॥ ६७६ ॥
पूर्वसोपानपद्धत्या, स्नानपीठं तदुच्चकैः । आरुरोह महीनाथः, शैलप्रस्थमिव द्विपः ॥ ६७७ ॥

---

१ स्वीचकार । २ भगिनीनाम् । ३ गजाभ्याम् । ४ अङ्गणे । * षोडशसहस्रसङ्ख्या, व्यसृ° सं १, खं ॥
† सूदानां स ख ॥ ५ पाचकान् । ‡ राज्ञीभी राजजन्मभिः आ, स २ ॥ ६ कुबेर । § सर° आ, सं १ ॥
७ विद्याधरराजसहिता । ८ इन्द्रः । ९ ईशानदिशि । १० नदीभ्य । ११ समुद्रात् । १२ गजेन । ¶ °ण सहि-
तैर्ना° आ ॥ ‖ °पमुत्तमम् सं १ ॥

प्राचीपतेरिव[1] प्रीत्या, प्राग्दिशोऽभिमुखस्ततः । रत्नसिंहासने तत्रोपाविशद् भरतेश्वरः ॥ ६७८ ॥
[*]ते द्वात्रिंशत्सहस्राणि, भूपाः कतिपया इव । सुखमारुरुहुः पीठमुदक्सोपानवर्त्मना ॥ ६७९ ॥
चक्रिणो नातिदूरोर्व्यां, तस्थुर्भद्रासनेषु ते । बद्धाञ्जलिपुटा देवमिव वन्दारवो[2] नृपाः ॥ ६८० ॥
सेनापतिर्गृहपतिर्वर्द्धकिश्च पुरोहितः । श्रेष्ठ्यादयोऽप्यारुरुहुर्याम्यसोपानमालया ॥ ६८१ ॥
आसनेषु समासीनाः, स्वो चितेषु यथाक्रमम् । बद्धाञ्जलिपुटास्तस्थुर्विज्ञीप्सव इव प्रभुम् ॥ ६८२ ॥
ततश्च नरदेवस्याऽऽदिदेवस्येव वासवाः । आभियोगिकदेवास्तेऽभिषेकाय डुढौकिरे ॥ ६८३ ॥
स्वाभाविकैर्वैक्रियैश्च, पयोगर्भैर्घनैरिव । वदनन्यस्तकमलै, रथाङ्गविहगैरिव[3] ॥ ६८४ ॥
पतत्पानीयनादेन, तूर्यनादानुवादिभिः । ते रत्नकलसैश्चक्रुरभिषेकं महीपतेः ॥ ६८५ ॥ [ युग्मम् ]
तं द्वात्रिंशत् सहस्राणि, शुभेऽभिषिषिचुः क्षणे । नृपाः[†] कुम्भैर्लुठत्तोयैर्हर्षात् स्वनयनैरिव ॥ ६८६ ॥
ते शिरस्यञ्जलीन् बद्धा, पद्मकोशसहोदरान् । चक्रिणं वर्द्धयामासुर्जय त्वं विजयस्व च ॥ ६८७ ॥
सेनापतिप्रभृतयोऽपरे श्रेष्ठ्यादयश्च तम् । अभ्यषिञ्चन् जलैर्वाक्यैश्चाऽऽस्तुवंस्तैरिवोज्ज्वलैः ॥ ६८८ ॥
शुचिपक्ष्मलया गन्धकाषाय्या सुकुमारया । माणिक्यमिव तस्याऽङ्गममृजन्नथ ते भृशम् ॥ ६८९ ॥
गोशीर्षचन्दनरसै, राज्ञो विलिलिपुश्च ते । कान्तिपोषकैरङ्गं, गैरिकैरिव काञ्चनम् ॥ ६९० ॥
शक्रप्रदत्तमृषभस्वामिनो मुकुटं ततः । मूर्ध्नि मूर्द्धाभिषिक्ताग्रेसरस्य निदधुः सुराः ॥ ६९१ ॥
ते पर्यधापयन् राज्ञा, कर्णयो रत्नकुण्डले । चित्रास्वाती इव मुखहिमांशोः पारिपार्श्वगे[‡] ॥ ६९२ ॥
तत्कण्ठे ते न्यधुर्हारं, ग्रथितं शुचिमौक्तिकैः । अलक्ष्यसूत्रैर्युगपन्मालारूपोद्गमैरिव ॥ ६९३ ॥
निवेशयाम्बभूवे चाऽर्द्धहारस्तैर्नृपोरसि । अलङ्करणराजस्य, हारस्य युवराडिव ॥ ६९४ ॥
अभ्रकान्तःपुटमये, इवाऽच्छच्छविशालिनी । वाससी देवदूष्ये ते, भूभुजा पर्यधापयन् ॥ ६९५ ॥
उद्दामं सुमनोदाम, नृपतेः कण्ठकन्दले । ते प्राक्षिपन्पुरोवेश्मच्छायावप्रमिव श्रियः ॥ ६९६ ॥
कल्पद्रुम इवाऽनर्घ्यवस्त्रमाणिक्यभूषणः । भूपतिर्मण्डयामास, स्वःखण्डमिव मण्डपम् ॥ ६९७ ॥
आह्वाय्य वेत्रिपुरुषैः, स सर्वपुरुषाग्रणीः । आयुक्तपुरुषानेवमादिदेश विशालधीः ॥ ६९८ ॥
भो ! यूयं सिन्धुरस्कन्धमधिरुह्य समन्ततः । पर्यट्य च प्रतिपथं, विनीतां नगरीमिमाम् ॥ ६९९ ॥
अशुल्कामकरादण्डाकुदण्डामविशङ्कटाम्[4] । नित्यप्रमोदां कुरुत, वर्षद्वादशकावधिः ॥ ७०० ॥ [ युग्मम् ]
तत् तथा तत्क्षणादेव, ते चक्रुरधिकारिणः । रत्नं पञ्चदशं ह्याज्ञा, चक्रिणः कार्यसिद्धिषु ॥ ७०१ ॥
रत्नसिंहासनात् तस्मादुत्तस्थावथ पार्थिवः । प्रतिबिम्बानि तस्येवाऽन्येऽप्युत्तस्थुः सहैव हि ॥ ७०२ ॥
निजागमनमार्गेणोत्ततार भरतेश्वरः । तथाऽन्येऽप्युत्तरन्ति स्म, स्नानपीठाद् गिरेरिव ॥ ७०३ ॥
स्वप्रतापमिवाऽसह्यमारुह्य वरहस्तिनम् । महीपतिर्महोत्साहः, प्रासादमगमन्निजम् ॥ ७०४ ॥
तत्र स्नानगृहं गत्वा, तोयैः स्नात्वा च निर्मलैः । चकाराऽष्टमभक्तान्तपारणं धरणीधवः ॥ ७०५ ॥
अभिषेकोत्सवे वृत्ते, तस्मिन् द्वादशवार्षिके । स्नातः कृतबलिः प्रायश्चित्तकौतुकमङ्गली ॥ ७०६ ॥
गत्वा च बहिरास्थानीमात्मरक्षकदेवताः । तान्[¶] षोडश सहस्राणि, सत्कृत्य व्यसृजन्नृपः ॥ ७०७ ॥
ततश्च प्रासादवरारूढो वैषयिकं सुखम् । भुञ्जानोऽस्थाद् विमानस्थ, इव शक्रो महीपतिः ॥ ७०८ ॥
चक्रं छत्रमसिर्दण्डो, रत्नान्येतानि जज्ञिरे । एकेन्द्रियाणि चत्वारि, तस्याऽऽयुध[5]निकेतने ॥ ७०९ ॥
[§]काकिणीचर्ममणयो, निधयो नव चाऽभवन् । श्रीगृहे श्रीमतस्तस्य, माणिक्यानीव रोहणे ॥ ७१० ॥

---

१ इन्द्रस्य । * द्वात्रिंशत्सहस्रसंख्या भू° स १ ॥ २ वन्दनशीला. । ३ चक्रवाकपक्षिभिः । † राज्ञां कु° सं १ ॥ ‡ पारिपार्श्विके सं १, परिपार्श्वगे खं, आ, सं २ ॥ ४ अकरा अदण्डां अकुदण्डा इति पदत्रयस्य समास । ¶ षोडशसहस्रसङ्ख्याः, स° सं १, ख ॥ ५ आयुधशालायाम् । § काकणी° खंता, सं २ ॥

सेनापतिर्गृहपतिः, पुरोधो[1]-वर्द्धकी अपि । चत्वारि नररत्नानि, स्वपुर्यां तस्य जज्ञिरे ॥ ७११ ॥
गजा-ऽश्वरत्ने वैताढ्यगिरेर्मूले बभूवतुः । उदग्विद्याधरश्रेण्यां, स्त्रीरत्नं तूदपद्यत ॥ ७१२ ॥
नयनानन्ददायिन्या, मूर्त्या सोम इवाऽशुभत् । दुःसहेन प्रतापेन, भरतो भानुमानिव ॥ ७१३ ॥
अलब्धमध्यः सोऽम्भोधिरिव पुंरूपतां गतः । प्राप्तो मनुष्यधर्मेव, मनुष्यस्वामितां पुनः ॥ ७१४ ॥
अशोभत महारत्नैः, स चतुर्दशभिः सदा । जम्बूद्वीप इव गङ्गासिन्धुप्रभृतिसिन्धुभिः ॥ ७१५ ॥
*पादाधःस्थतया तस्य, नवाऽपि निधयोऽनिशम् । हेमाब्जानीव वृषभप्रभोर्विहरतोऽभवन् ॥ ७१६ ॥
सदा षोडशभिर्देवसहस्रैः पारिपार्श्विकैः† । अनल्पवेतनक्रीतै[2]रात्मरक्षैरिवाऽऽवृतः ॥ ७१७ ॥
‡नृपाणां नृपकन्यानामिव निर्भरभक्तितः । द्वात्रिंशता सहस्रैः स, निरन्तरमुपास्यत ॥ ७१८ ॥
द्वात्रिंशता सहस्रैः स, ‖नाटकानामिवाऽनिशम् । जानपदीनां कन्यानामरंस्ताऽवनिवासवः ॥ ७१९ ॥
स जगत्यामेकभूपः, §सूपकारवरैरभात् । शतैस्त्रिभिस्त्रिषष्ठ्यग्रै¶र्वत्सरैरिव वत्सरः ॥ ७२० ॥
श्रेणिप्रश्रेणिभिः सोऽष्टादशभिः पृथिवीतले । प्रावर्तयद् व्यवहारं, लिपिभिर्नाभिभूरिव ॥ ७२१ ॥
§लक्षैश्चतुरशीत्याऽभात्, स रथद्विपवाजिनाम् । प्रत्येकं ग्रामपत्तीनां, षण्णवत्या च कोटिभिः ॥ ७२२ ॥
द्वात्रिंशतो जनपदसहस्राणामधीश्वरः । द्वासप्ततेः पुरवरसहस्राणां च स प्रभुः ॥ ७२३ ॥
सहस्रोनद्रोणमुखलक्षस्याऽधिपतिश्च सः । पत्तनाष्टाचत्वारिंशत्सहस्राणां च सोऽधिभूः ॥ ७२४ ॥
कर्बटानां मडम्बानामिव साडम्बरश्रियाम् । चतुर्विंशतिसहस्रसङ्ख्यातानां स ईशिता ॥ ७२५ ॥
स विंशतिसहस्राणामाकराणां+ करेश्वरः । तथा खेटसहस्राणां, षोडशानां प्रशासिता ॥ ७२६ ॥
चतुर्दशानां सम्बाधसहस्राणामपि प्रभुः । अधिपोऽन्तरोदकानां[3], स षट्पञ्चाशतोऽपि च ॥ ७२७ ॥
पञ्चाशतः कुराज्यानामेकोनायाश्च नायकः । स मध्ये भरतक्षेत्रमन्येषामपि शासिता ॥ ७२८ ॥
विनीतायां स्थितः कुर्वन्नाधिपत्यमखण्डितम् । अभिषेकोत्सवप्रान्ते, सस्तुं प्रववृते स्वकान् ॥ ७२९ ॥

षष्टिं वर्षसहस्राणि, विरहाद् दर्शनोत्सुकान् । अदर्शयन् निजान् राज्ञो, नियुक्तपुरुषास्ततः ॥ ७३० ॥
ततः कृशां ग्रीष्मकालाक्रान्तामिव तरङ्गिणीम् । म्लानां हिमानीसम्पर्कवशादिव सरोजिनीम् ॥ ७३१ ॥
प्रनष्टरूपलावण्यां, हैमनेन्दुकलामिव[4] । पाण्डुक्षामकपोलां च, रम्भां[5] शुष्कदलामिव ॥ ७३२ ॥
सोदरां बाहुबलिनः, सुन्दरीं गुणसुन्दरः । नामग्राहं स्वपुरुषैर्दर्श्यमानां ददर्श सः॥७३३॥[त्रिभिर्विशेषकम्]
तथाविधां च सम्प्रेक्ष्य, तां परावर्त्तितामिव[6] । सकोपमवनीपालः, स्वायुक्तानित्यवोचत ॥ ७३४ ॥

किं कदाप्यसदीयेऽपि, सदने नौदनान्यरे ! ? । न किं लवणपाथोधौ, विद्यन्ते लवणान्यपि ? ॥७३५॥
सूपकारा न किं सन्ति, तत्तद्रसवतीविदः ? । निरादराः किमथवा, तद्वमी वृत्तितस्कराः[7] ? ॥ ७३६ ॥
द्राक्षाखर्जूरमुख्यानि, खाद्यान्यपि हि नेह किम् ? । न हि किं विद्यते स्वर्णमपि स्वर्णशिलोच्चये ? ॥७३७॥
किमुद्यानेषु ते वृक्षा, बभूवुरवकेशिनः[8] ? । फलन्ति तरवः किं हि, न नन्दनवनेऽपि हि ? ॥ ७३८ ॥
न वा दुग्धानि धेनूनां, घटोध्नीनामपीह किम् ? । किं नु शुष्कस्तनस्रोताः, सञ्जाता कामगव्यपि[9] ? ॥७३९॥
अथ भोज्यादिसम्पत्सु, सतीष्वपि हि सुन्दरी । न किञ्चिदश्नाति यदि, तदसावामयाविनी[10] ॥ ७४० ॥
आमयः[11] कोऽपि चेदस्याः, कायसौष्ठवतस्करः । तत् किं बभूवुः सर्वेऽपि, कथाशेषा[12] भिषग्वराः[13] ? ॥७४१॥

---

१ पुरोहित । * पादाध स्थितयस्तस्य खता ॥ † °पार्श्वकैः खं, स१॥ २ बहुमूल्यक्रीतै । ‡ राजभी राजकन्याभिरिव सं२, आ ॥ ‖ नाटकैरिव चारुभिः । जानपदीभि कन्याभिरर° स २, अ। ॥ § सूदानामत्यराजत स १, खं ॥ ¶ °र्त्रिदिनोनार्कवर्षवत् म, ख ॥ § लक्षैश्चतुरशीत्येभरथैरिव रथैरिव । स कोटिभिः षण्णवत्याऽभाद् ग्रामैरिव पत्तिभिः स१, ख॥ + °णां नरेश्वरः ख ॥ ३ अन्तरद्वीपानाम् । ४ हेमन्तकालचन्द्रकलामिव । ५ कदलीम् । ६ परावर्तितरूपामिव । ७ आजीविकाचौराः । ८ निष्फला. । ९ कामधेनुः । १० रोगिणी । ११ रोग. । १२ मृत्युगताः । १३ वैद्याः ।

यदि चौषधयो दिव्याः, प्राप्यन्ते नाऽस्मदोकसि । तदौषधीभी रहितो, हिमाद्रिरपि सम्प्रति ॥ ७४२ ॥
दूये पश्यन्निमां क्षामां, दरिद्रतनयामिव । तदहो ! वैरिभिरिव, भवद्भिर्वञ्चितोऽस्म्यहम् ॥ ७४३ ॥
प्रणम्य भरतं तेऽपि, प्रोचुरेवं नियोगिनः । सर्वमप्यस्ति देवस्य, देवेन्द्रस्येव सद्मनि ॥ ७४४ ॥
किन्तु देवो यदारभ्य गाद्, दिग्जयाय तदाद्यसौ । आचामाम्लानि कुरुते, प्राणत्राणाय केवलम् ॥ ७४५ ॥
तथा यदैव देवेन, प्रव्रजन्ती न्यषिध्यत । ततः प्रभृत्यसौ तस्थौ, भावतः संयतैव हि ॥ ७४६ ॥
कल्याणिनेयि ! कल्याणि !, प्रविव्रजिषसीति सा । अनुयुक्ता महीनाथेनैवमेवेत्यवोचत ॥ ७४७ ॥
भरतोऽप्यभ्यधादेवं, प्रमादेनाऽऽर्जवेन वा । अहमस्या इयत्कालं, व्रतविघ्नकरोऽभवम् ॥ ७४८ ॥
अपत्यं तातपादानामनुरूपमसौ खलु । अतक्कं विषयासक्ता, राज्यातृप्ताश्च के वयम् ? ॥ ७४९ ॥
आयुर्विनश्वरतरं, वार्द्धिवारितरङ्गवत् । जानन्तोऽपि न जानन्ति, जना विषयगृध्नवः ॥ ७५० ॥
गत्वरेणाऽऽयुषाऽनेन, मोक्षः साध्येत साधु तत् । मार्गावलोकनमिव, विद्युता दृष्टनष्टया ॥ ७५१ ॥
यत्कूँच्छर्कन्मूत्रमलस्वेदामयमयस्य यत् । प्रसाधनं वपुषस्तद्, गृहस्रोतोऽधिवासनम् ॥ ७५२ ॥
आदत्से वपुषाऽनेन, साधु मोक्षफलं व्रतम् । क्षीराब्धितोऽपि रत्नानि, गृह्णन्ति निपुणाः खलु ॥ ७५३ ॥
अनुज्ञाता नरेन्द्रेण, मुदितेन व्रताय सा । तपःकृशाऽप्यकृशेव, प्रमदोच्छ्वसिताऽभवत् ॥ ७५४ ॥
अत्रान्तरे च भगवान्, विहरन् वृषभध्वजः । अष्टापदगिरावागाज्जगद्बर्हिबलाहकः ॥ ७५५ ॥
चक्रुश्च देवाः समवसरणं तत्र पर्वते । अपरं पर्वतमिव, रत्नकाञ्चनरूप्यजम् ॥ ७५६ ॥
कुर्वाणं देशनां तत्र, स्वामिनं गिरिपालकाः । एत्य विज्ञपयामासुर्भरतस्वामिने द्रुतम् ॥ ७५७ ॥
षट्खण्डभरतक्षेत्रविजयादधिकं ततः । तमुदन्तं समाकर्ण्य, मुमुदे मेदिनीपतिः ॥ ७५८ ॥
स्वामिनमागमयद्भ्यो भृत्येभ्यः पारितोषिकम् । ददौ कोटीः सुवर्णस्य, सार्द्धा द्वादश पार्थिवः ॥ ७५९ ॥
त्वन्मनोरथसंसिद्धिरिव मूर्त्ता जगद्गुरुः । विहरन्नाजगामेह, सुन्दरीमित्युवाच च ॥ ७६० ॥
अकारयन्निष्क्रमणाभिषेकं भरतेश्वरः । तस्याः स्वान्तःपुरवधूजनैर्दासीजनैरिव ॥ ७६१ ॥
कृतस्नानाऽथ सा सद्यः, कृतपुण्यविलेपना । विलेपनान्तरमिव, पर्यधात् सदशांशुके ॥ ७६२ ॥
आमुमोच च सा रत्नालङ्कारानुत्तमानथ । तस्याः शीलमलङ्कारोऽलङ्काराः प्रक्रियाकृते ॥ ७६३ ॥
तथास्थितायाः सुन्दर्याः, पुरतो रूपसम्पदा । स्त्रीरत्नं सा सुभद्राऽपि, चेटीवत् प्रत्यभासत ॥ ७६४ ॥
यो यद् ययाचे तत् तस्मै, वितताराऽविलम्बितम् । जङ्गमा कल्पवल्लीव, सुन्दरी शीलसुन्दरी ॥ ७६५ ॥
कर्पूरधूलिधवलैर्वासोभिरुपशोभिता । कुमुदिनीं मरालीव, शिबिकामारुरोह सा ॥ ७६६ ॥
निषादिसादिपादातस्यन्दनच्छन्नभूमिना । अन्वयायि नरेन्द्रेण, मरुदेवीव सुन्दरी ॥ ७६७ ॥
वीज्यमाना चामराभ्यां, श्वेतच्छत्रेण शोभिता । वैतालिकैः स्तूयमाननिबिडव्रतसंश्रवा ॥ ७६८ ॥
भ्रातृजायाभिरुद्गीतप्रव्रज्योत्सवमङ्गला । उत्तार्यमाणलवणा, वरस्त्रीभिः पदे पदे ॥ ७६९ ॥
राजन्ती सह गच्छद्भिः, पूर्णपात्रैरनेकशः । स्वामिपादपवित्रं सा, प्रापदष्टापदाचलम् ॥ ७७० ॥
[ त्रिभिर्विशेषकम् ]
सचन्द्रमिव पूर्वाद्रिं, तमद्रिं स्वाम्यधिष्ठितम् । दृष्ट्वा भरतसुन्दर्यौ, महान्तं हर्षमीयतुः ॥ ७७१ ॥
स्वर्गापवर्गयो राज्यं, सोपानमिव विस्तृतम् । तं विशालशिलं शैलं, समारुरुहतुश्च तौ ॥ ७७२ ॥

---

१ यतः प्रभृति । * आचाम्लानि कुरुते च प्रा° खं ॥ † श्लोकोऽयं आपुस्तके नोपलभ्यते । २ दीक्षिता । ३ कल्याण्याः अपत्य कल्याणिनेयी तत्सम्बुद्धौ । ४ प्रव्रजितुमिच्छसि । ५ पृष्टा । ६ निरन्तरम् । ७ कुक्षौ दक्षिणभागस्थो मांसपिण्डः । ८ विष्ठा । ९ मण्डनम् । १० जगन्मयूरमेघ । ११ वृत्तान्तम् । ‡ स्वाम्यागमयतां तेषां भृत्यानां पा° सं २, आ ॥ १२ आचारार्थम् । १३ दासीवत् । १४ हंसीव ।

ततः समवसरणं, शरणं [१]भवभीजुषाम्। तौ प्रापतुश्चतुर्द्वारं, सङ्क्षिप्तां जगतीमिव ॥ ७७३ ॥
भरतेश्वरसुन्दर्यावुत्तरद्वारवर्त्मना। अथो समवसरणं, विशतः स्म यथाविधि ॥ ७७४ ॥
समं [२]हर्षविनयाभ्यामुच्छ्वसत्सङ्कुचत्तनू। प्रदक्षिणीचक्रतुस्तावथ त्रिः परमेश्वरम् ॥ ७७५ ॥
पञ्चाङ्गस्पृष्टभूमिकौ, नेमतुश्च जगत्पतिम्। रत्नभूतलसङ्क्रान्तमपि द्रष्टुमिवोत्सुकौ ॥ ७७६ ॥
चक्रवर्ती ततो धर्मचक्रवर्तिनमादिमम्। स्तोतुं प्रचक्रमे चारुगिरा भक्तिपवित्रया ॥ ७७७ ॥
*असद्भूतान् गुणान् जल्पन्, जनः स्तौतीतरं जनम्। गुणान् सतोऽपि ते वक्तुमक्षमोऽहं स्तुवे कथम्?॥
तथापि हि जगन्नाथ!, करिष्यामि तव स्तुतिम्। न ददाति दरिद्रः किं, श्रीमतामप्युपायनम्?॥ ७७९ ॥
युष्मत्पादैर्दृष्टमात्रैरन्यजन्मकृतान्यपि। गलन्त्ये[३]नांसि शेफालीपुष्पाणीन्दुकरैरिव ॥ ७८० ॥
दुश्चिकित्समहामोहसन्निपातवतामपि। स्वामिन्! जयन्ति ते वाचोऽमृतौषधिरसोपमाः ॥ ७८१ ॥
चक्रवर्तिनि रङ्के वा, कारणं प्रीतिसम्पदाम्। समास्त्वद्दृष्टयो नाथ!, वार्षिक्य इव वृष्टयः ॥ ७८२ ॥
क्रूरकर्महिमग्रन्थिविद्रावणदिवाकरः। स्वामिन्नस्मादृशां पुण्यैरिमां विहरसे महीम् ॥ ७८३ ॥
शब्दानुशासनव्यापिसंज्ञासूत्रोपमा प्रभो!। जन्मव्ययध्रौव्यमयी, जयति त्रिपदी तव ॥ ७८४ ॥
यस्त्वां स्तौतीह भगवंस्तस्याऽप्येषोऽन्तिमो भवः। शुश्रूषते ध्यायति वा, यः पुनस्तस्य का कथा? ॥७८५॥
भगवन्तमिति स्तुत्वा, नत्वा च भरतेश्वरः। पूर्वोत्तरस्यां ककुभि, निषसाद यथोचितम् ॥ ७८६ ॥
सुन्दर्यपि हि वन्दित्वा, स्वामिनं वृषभध्वजम्। कृताञ्जलिर्जगादैवं, गद्गदाक्षरया गिरा ॥७८७॥
मनसा दृश्यमानोऽभूरियत्कालं जगत्पते!। प्रत्यक्षं बहुभिः पुण्यैर्दिष्ट्या दृष्टोऽसि सम्प्रति ॥ ७८८ ॥
मृगतृष्णोपमसुखे, संसारमरुमण्डले। पुण्यैः प्राप्तोऽसि लोकेन, त्वं पीयूषमहाह्रदः ॥ ७८९ ॥
निर्ममोऽपि जगन्नाथ!, जगतोऽप्यसि वत्सलः। कथं विषमदुःखाब्धेस्तत्समुद्धरसेऽन्यथा? ॥ ७९० ॥
[४]कृतिनी स्वामिनी ब्राह्मी, [५]भ्रातृव्याः कृतिनो मम। भ्रातृव्यजाश्च कृतिनो, ये हि त्वत्पथमन्वगुः ॥७९१॥
भरतेशोपरोधेन, यन्मयाऽग्राहि न व्रतम्। भगवंस्तदियत्कालं, स्वयमेवाऽस्मि वञ्चिता ॥ ७९२ ॥
विश्वतारक! मां दीनां, तात! तारय तारय। गृहोद्योतकरो दीपः, किं नोद्योतयते घटम्? ॥ ७९३ ॥
प्रसीद देहि दीक्षां मे, विश्वत्राणैकदीक्षित!। संसाराम्भोधितरणयानपात्रनिभां विभो! ॥ ७९४ ॥
साधु साधु महासत्त्वे!, ब्रुवन्निति ददौ विभुः। तस्यै दीक्षां सामायिकसूत्रोच्चारणपूर्विकाम् ॥ ७९५ ॥
महाव्रतद्रुमारामसुधासारणिसन्निभाम्। [६]अनुशिष्टिमयीं तस्यै, देशनां विदधे विभुः ॥ ७९६ ॥
मोक्षप्राप्तमिवाऽऽत्मानं, मन्यमाना महामनाः। अनुज्येष्ठं निषसाद, सा मध्येव्रतिनीगणम् ॥ ७९७ ॥
देशनां स्वामिनः श्रुत्वा, पादपद्मे प्रणम्य च। ययावयोध्यां नगरीं, मुदितो भरतेश्वरः ॥ ७९८ ॥
दिदृक्षोः स्वं जनं सर्वं, पुनस्तस्याऽधिकारिभिः। आगताः समदर्श्यन्ताऽऽस्मार्यन्ताऽनागता अपि ॥ ७९९ ॥
भ्रातॄननागतान् ज्ञात्वा, स्वाभिषेकोत्सवेऽपि तान्। तेषामेकैकशो दूतान्, प्राहिणोद् भरतेश्वरः ॥८००॥
राज्यानि चेत् समीहध्वे, सेवध्वं भरतं ततः। दूतैरित्युदिताः सर्वेऽप्यालोच्यैवाऽवदन्निदम् ॥ ८०१ ॥
विभज्य राज्यं दत्तं नस्तातेन भरतस्य च। संसेव्यमानो भरतोऽधिकं किं नः करिष्यति? ॥८०२॥
समापतन्तं किं काले, कालं प्रस्खलयिष्यति?। किं जराराक्षसीं देहग्राहिणीं निग्रहीष्यति? ॥ ८०३ ॥
बाधाविधायिनः किं वा, व्याधि[७]व्याधान् हनिष्यति?। यथोत्तरं वर्द्धमानां, यद्वा तृष्णां दलिष्यति? ८०४
ईदृक् सेवाफलं दातुं, न चेद् भरत ईश्वरः। मनुष्यभावे सामान्ये, तर्हि कः केन सेव्यताम्? ॥८०५॥
प्राज्यराज्योऽप्यसन्तोषादस्मद्राज्यं जिघृक्षति। [८]स्थाम्ना चेत् तद् वयमपि, तस्य तातस्य सूनवः ॥ ८०६ ॥

१ संसारभयवताम्। २ हर्षेणोच्छ्वसन्त्यौ विनयेन सङ्कुचन्त्यौ तनू कायौ ययोस्तौ। * असद्भूतगु° खंता॥ ३ पापानि। ४ कृतार्थौ। ५ भ्रातृपुत्राः। ६ शिक्षामयीम्। ७ रोगरूपव्याधान्। ८ बलेन।

अविज्ञपय्य तातं तु, सोदर्येणाऽग्रजन्मना । त्वदीयस्वामिना योद्धुं, न वयं प्रोत्सहामहे ॥ ८०७ ॥
ते दूतानभिधायैवं, तदैवाऽष्टापदाचले । स्थितं समवसरणे, वृषभस्वामिनं ययुः ॥ ८०८ ॥
त्रिश्च प्रदक्षिणीकृत्य, प्रणेमुः परमेश्वरम् । शिरःसु बद्धाञ्जलयः, सर्वेऽप्येवं स्तुतिं व्यधुः ॥ ८०९ ॥
देवैरप्यपरिज्ञेयगुणं कः स्तोतुमीश्वरः ? । त्वां स्तोष्यामस्तथापीश !, विलसद्बालचापलाः ॥ ८१० ॥
तपस्यतामप्यधिकास्त्वां नमस्यन्ति ये सदा । वरिवस्यन्ति[1] ये तु त्वां, योगिनामपि तेऽधिकाः ॥ ८११ ॥
नमस्यतां प्रतिदिनं, विश्वालोकदिनेश्वर[2] ! । धन्यानामवतंसन्ति[3], त्वत्पादनखरश्मयः ॥ ८१२ ॥
न किञ्चित् कस्यचित् साम्ना, बलाद् वा गृह्यते त्वया । त्रैलोक्यचक्रवर्ती त्वं, तथाऽप्यसि जगत्पते ! ॥८१३॥
स्वामिंस्त्वमेको जगतां, समं चेतःसु वर्त्तसे । पीयूषदीधितिः[4] सर्वजलाशयजलेष्विव ॥ ८१४ ॥
त्वां स्तोता स्तूयते देव !, सर्वैस्त्वामर्चिताऽर्च्यते । त्वां नन्ता नम्यते सर्वा, त्वयि भक्तिर्महाफला ॥८१५॥
त्वं देव ! दुःखदावाग्नितप्तानामेकवारिदः । मोहान्धकारमूढानामेकदीपस्त्वमेव हि ॥ ८१६ ॥
रोरा[5]णामीश्वराणां च, मूर्खाणां गुणिनामपि । साधारणोपकारी त्वं, छायाद्रुम इवाऽध्वनि ॥ ८१७ ॥
इति स्तुत्वा भ्रमरवत्, स्वामिपादारविन्दयोः । निवेशितदृशस्तेऽथ, सम्भूयैवं व्यजिज्ञपन् ॥ ८१८ ॥
तदानीं तातपादैर्नः, संविभज्य पृथक् पृथक् । देशराज्यानि दत्तानि, यथार्हं भरतस्य च ॥ ८१९ ॥
तैरेव राज्यैः सन्तुष्टास्तिष्ठामो विष्टपेश्वर[6] ! । विनीतानामलङ्घ्या हि, मर्यादा स्वामिदर्शिता ॥ ८२० ॥
स्वराज्येनाऽन्यराज्यैश्चाऽपहृतैर्भरतेश्वरः । न सन्तुष्यति भगवन् !, वडवाग्निरिवाऽम्बुभिः ॥ ८२१ ॥
आचिच्छेद यथाऽन्येषां, राज्यानि पृथिवीभुजाम् । अस्माकमपि भरतस्तद्वदाच्छेत्तुमिच्छति ॥ ८२२ ॥
त्यज्यन्तामाशु राज्यानि, सेवा वा क्रियतां मम । आदिदेशेति पुरुषैर्भरतो नः परानिव ॥ ८२३ ॥
वचोमात्रेण मुञ्चामस्तस्याऽऽत्मबहुमानिनः । तातदत्तानि राज्यानि, क्लीबा[7] इव कथं वयम् ? ॥ ८२४ ॥
सेवामपि कथं कुर्मो, निरीहा[8] अधिकर्द्धिषु ? । अतृप्ता एव कुर्वन्ति, सेवां मानविघातिनीम् ॥ ८२५ ॥
राज्यामुक्त्यां[9]वसेवा[10]यां, युद्धं स्वयमुपस्थितम् । तातपादांस्त्वनापृच्छ्य, न किञ्चित् कर्तुमीश्महे ॥ ८२६ ॥
अम्लानकेवलज्ञानसङ्क्रान्ताशेषविष्टपः । कृपावान् भगवानादिनाथोऽपीत्यादिदेश तान् ॥ ८२७ ॥
वत्साः ! पुरुषवीरैर्हि, पुरुषव्रतधारिभिः । योद्धव्यं वैरिवर्गेणाऽनर्गलं द्रोहकारिणा ॥ ८२८ ॥
रागो द्वेषश्च मोहश्च, कषायाश्चेति वैरिणः । अनर्थदायिनः पुंसां, जन्मान्तरशतेष्वपि ॥ ८२९ ॥
रागो हि सद्गतौ पुंसामाय[11]सी पादशृङ्खला । द्वेषश्च नरकावासनिवासप्रतिभूर्बली[12] ॥ ८३० ॥
मोहो भवार्णवावर्त्तप्रक्षेपणपणो[13] नृणाम् । कषायाः स्वाश्रयानेव, दहन्ति दहना इव ॥ ८३१ ॥
अनपायमयैस्तैस्तैरुपायास्त्रैर्निरन्तरम् । युद्ध्वा युद्ध्वा विजेतव्यास्तदमी वैरिणो नृभिः ॥ ८३२ ॥
सेवाऽपि हि विधातव्या, धर्मस्यैवैकतायिनः । तच्छा[14]श्वतानन्दमयं, पदमीषत्करं यया ॥ ८३३ ॥
अनेकयोनिसम्पातानन्तबाधानिबन्धनम् । अभिमानफलैवेयं, राज्यश्रीः साऽपि नश्वरी ॥ ८३४ ॥
किं च या स्वःसुखैस्तृष्णा, नाऽत्रुट्यत् प्राग्भवेषु वः । साऽङ्गारकारकस्येव, मर्त्यभोगैः कथं त्रुटेत् ? ॥८३५॥
अङ्गारकारकः कश्चिदादाय पयसो दृतिम् । जगाम कर्त्तुमङ्गारानरण्ये रीण[15]वारिणि ॥ ८३६ ॥
सोऽङ्गारानलसन्तापान्मध्याह्नातपपोषितात् । उद्भूतया तृषाऽऽक्रान्तः, सर्वं दृतिपयः पपौ ॥ ८३७ ॥
तेनाऽप्यच्छिन्नतृष्णः सन्, सुप्तः स्वप्ने गृहं गतः । आलि[16]कलसनन्द्यानामुदकान्यभितोऽप्यपात् ॥ ८३८ ॥
तज्जलैरप्यशान्तायां, तृष्णायामग्नितैलवत् । वापीकूपतडागानि, पायं पायमशोषयत् ॥ ८३९ ॥

---

१ सेवन्ते । २ हे विश्वप्रकाशसूर्य ! । ३ अवतंसवदाचरन्ति । ४ चन्द्र । ५ दीनानाम् । ६ हे जगदीश्वर । ७ नपुंसका । ८ निःस्पृहा । ९ अमोचने । १० सेवाया अकरणे । ११ लोहमयी । १२ प्रतिनिधि । १३ रुळह । १४ नित्यानन्दमयम् । १५ शुष्कजले । १६ जलपात्रभेदा. ।

तथैव तृषितोऽथाऽपात्, सरितः सरितांपतीन् । न च तस्य तृषाऽत्रुट्यन्नारकस्येव वेदना ॥ ८४० ॥
मरुकूपे ततो यातः, कुशपूलं स रज्जुभिः । बद्ध्वा चिक्षेप पयसे, किमार्त्तः कुरुते नहि ? ॥ ८४१ ॥
दूराम्बुत्वेन कूपस्य, मध्येऽपि गलिताम्बुकम् । निश्चोत्य पूलं द्रमकः, स्नेहपोतमिवाऽपिबत् ॥ ८४२ ॥
न च्छिन्ना याऽर्णवाद्यैस्तृट्, छेद्या पूलाम्भसा न सा । तद्वद् वः स्वःसुखाच्छिन्ना, छेद्या राज्यश्रिया किमु ?
अमन्दानन्दनिःस्यन्दनिर्वाणप्राप्तिकारणम् । वत्साः ! संयमराज्यं तद्, युज्यते वो विवेकिनाम् ॥ ८४४ ॥
तत्कालोत्पन्नसंवेगवेगा भगवदन्तिके । तेऽष्टानवतिरप्याशु, प्रव्रज्यां जगृहुस्ततः ॥ ८४५ ॥
अहो ! धैर्यमहो ! सत्त्वमहो ! वैराग्यधीरिति । चिन्तयन्तस्तत्स्वरूपं, दूता राज्ञे न्यवेदयन् ॥ ८४६ ॥
ज्योतींषीव ज्योतिषां ज्योतिरीशस्तेजांसीवाऽहर्पतिः पावकानाम् ।
वारीणीव स्रोतसां वारिराशिस्तेषां राज्यान्याददे चक्रवर्ती ॥ ८४७ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये प्रथमे पर्वणि भरतचक्रोत्पत्ति-दिग्विजय-राज्याभिषेक-सोदर्यव्रतग्रहणकीर्त्तनो नाम चतुर्थः सर्गः ॥ ४ ॥

---

१ दर्भपूलम् । * हृस्रोत° ख, सं १ ॥ २ स्वर्गसुखाच्छिन्ना ।

## पञ्चमः सर्गः ।

ततश्च भरताधीशः, सदःसदनमीयिवान् । सुषेणसेनापतिना, नमस्कृत्येत्यभाष्यत ॥ १ ॥
कृत्वाऽपि दिग्जयमिदं, तव चक्रं पुरीमिमाम् । अद्याऽपि न प्रविशति, स्तम्भं व्याले इव द्विपः ॥ २ ॥
बभाषे भरतोऽप्येवं, षट्खण्डभरतान्तरे । अद्याऽपि वीरः को नाम, ममाऽऽज्ञां न प्रतीच्छति? ॥ ३ ॥
तदैव सचिवोऽवोचज्ञाने देवेन निर्जितम् । एतद्धि भरतक्षेत्रमा क्षुद्रहिमवद्गिरि ॥ ४ ॥
जेयः किमवशिष्टोऽस्ति, दिग्यात्राकृत्यपि त्वयि ? । भ्रमद्धरट्टे पतितास्तिष्ठन्ति चणकाः किमु ? ॥ ५ ॥
पुर्यामप्रविशच्चैतच्चक्रं सूचयति प्रभो ! । कमप्यद्याऽपि जेतव्यं, त्वदाज्ञालङ्घनोन्मदम् ॥ ६ ॥
देवेष्वपि न पश्यामि, जेतव्यं दुर्जयं च ते । आ ज्ञातमथवाऽस्त्येको, जेतव्यो विश्वदुर्जयः ॥ ७ ॥
ऋषभस्वामिनः सूनुः, स्वामिन्नवरजस्तव[3] । महाबलो बाहुबलिर्बलिनां बलसूदनः ॥ ८ ॥
सर्वास्त्राण्येकतो वज्रमेकतश्च यथा तथा । एकतो राजकं सर्वं, स बाहुबलिरेकतः ॥ ९ ॥
लोकोत्तरो यथाऽसि त्वमृषभस्वामिनन्दनः । तथा सोऽपि तदेतस्मिन्नजिते किं जितं त्वया ? ॥ १० ॥
षट्खण्डे भरते दृष्टो, न कोऽपि स्वामिनः समः । तज्जये परभागोऽस्तु, को नाम भरतेशितुः ? ॥११॥
अयं खलु जगन्मान्यां, भवदाज्ञां न मन्यते । तदसाधनतश्चक्रमेति ह्रीणमिवेह न ॥ १२ ॥
उपेक्षितव्यो न परः, स्वल्पोऽप्यामयवद् यतः । तदद्याऽलं विलम्बेन, यतध्वं तज्जयं प्रति ॥ १३ ॥
दावाग्निमेघवृष्टिभ्यामिवाऽद्रिर्भरतेश्वरः । सद्यः कोपोपशान्तिभ्यामाश्लिष्टोऽथाऽब्रवीदिदम् ॥ १४ ॥
नाऽनुजोऽपि करोत्याज्ञामिति लज्जाकृदेकतः । सार्द्धं कनीयसा युद्धमिति चैकत्र बाधते ॥ १५ ॥
स्वगृहेऽपि न यस्याऽऽज्ञा, तस्याऽऽज्ञा हासकृद् बहिः । प्रवादश्च कनिष्ठस्याऽविनयासहने मम ॥ १६ ॥
एकतो राजधर्मोऽयं, दृप्तानां दर्पशातनः । इतो भ्रातरि सौभ्रात्रं, सङ्कटे पतितोऽस्मि हा! ॥ १७ ॥
अमात्योऽप्यभ्यधादेवं, स्वमहत्त्वेन सङ्कटम् । यद् देवस्य कनीयांस्तत्, स एव ह्यपनेष्यति ॥ १८ ॥
आज्ञा हि ज्यायसा देया, कर्त्तव्या च कनीयसा । आचारो रूढ एवाऽयं, सामान्यगृहिणामपि ॥ १९ ॥
भ्रातरं तत् कनीयांसं, लोकरूढेन वर्त्मना । आज्ञापयतु देवोऽपि, प्रेष्य सन्देशहारकम् ॥ २० ॥
आज्ञां सर्वजगन्मान्यां, वीरमानी तवाऽनुजः । सहिष्यते न चेद् देव!, पर्याणमिव केसरी ॥ २१ ॥
प्रशास्यास्त्वं तदा पाकशासनोद्गाढशासनः । न चाऽपवादस्ते लोके, लोकाचारानतिक्रमात् ॥ २२ ॥
तथेति प्रतिपेदे तद्वचनं मेदिनीपतिः । उपादेया शास्त्रलोकव्यवहारानुगा हि गीः ॥ २३ ॥
अनुशिष्य ततो दूतं, नयज्ञं वाग्मिनं[11] दृढम् । सुवेगं नाम नृपतिः, प्रैषीद् बाहुबलिं प्रति ॥ २४ ॥
स्वामिशिक्षां दौत्यदीक्षामिवाऽऽदाय स सौष्ठवाम् । सुवेगो रथमारुह्याऽचलत् तक्षशिलां प्रति ॥ २५ ॥
सारसैन्यपरीवारो, रथेनाऽसंभ्रमरंहसा[12] । निर्ययौ स विनीतायाः, राजाज्ञेव वपुष्मती ॥ २६ ॥
कार्यारम्भविधौ वामं[13], दैवं पश्यदिवाऽसकृत् । पस्पन्दे लोचनं वामं, गच्छतस्तस्य वर्त्मनि ॥ २७ ॥
नाडी नाडीन्धमस्येव[14], वह्निमण्डलमध्यतः । उवाह दक्षिणा तस्य, रोगाभावेऽप्यनारतम् ॥ २८ ॥
समेष्वपि हि मार्गेषु, रथस्तस्याऽस्खलन्मुहुः । अप्यसंयुक्तवर्णेषु, जिह्वा लल्लगिरामिव[15] ॥ २९ ॥
सादिभिर्वार्यमाणोऽपि, प्रेर्यमाण इवाऽसकृत् । कृष्णसारः[16] पुरस्तस्य, दक्षिणाद् वामतो ययौ ॥ ३० ॥
तस्याऽग्रे करटः[17] शुष्के, निविष्टः कण्टकद्रुमे । अरसत् कटुकं घर्षश्चञ्चूं शस्त्रमिवोपले[18] ॥ ३१ ॥

१ सभामण्डपम् । २ दुष्टराज । ३ लघुभ्राता । ४ राजसमूहम् । ५ उत्कर्षता । ६ लज्जितमिव । ७ शत्रु॰ । ८ गर्वनाशक । ९ ज्येष्ठेन । १० लघुना । ११ वाचालम् । १२ वेगवता । १३ प्रतिकूलम् । १४ सुवर्णकारस्य । १५ स्खलद्गिराम् । १६ मृगविशेषः । १७ काक । १८ पाषाणे ।

उत्ततार पुरस्तस्य, प्रलम्बः कृष्णपन्नगः । क्षिप्तार्गलेव दैवेन, तद्यानंनिरुरुत्सया ॥ ३२ ॥
प्रतिकूलो ववौ वायुश्चक्षुषोः प्रक्षिपन् रजः । पर्यस्यन्निव तं पश्चाद्, विचारैकविपश्चितम् ॥ ३३ ॥
तस्य दक्षिणतो भूत्वा, विरराम च रासभः । अभोजितप्रस्फुटितमृदङ्गविरसस्वरः ॥ ३४ ॥
सुवेगोऽगादनिमित्तान्येतानि प्रविदन्नपि । सद्भृत्याः स्वामिनः कार्ये, काण्डवत् प्रस्खलन्ति न ॥३५॥
ललङ्घे स बहून् ग्रामनगराकरकर्बटान् । तद्वासिभिर्दृश्यमानो, वात्यावर्त इव क्षणम् ॥ ३६ ॥
तरुखण्डसरःसिन्धुपुलिनप्रभृतिष्वपि । विशश्राम न स स्वामिकार्यतोऽत्र प्रवर्त्तितः ॥ ३७ ॥
किरातैः सज्जकोदण्डैः, शरव्यीकृतकुञ्जरैः । §चमूरुचर्मसंव्यानैर्जातुधानैरिवाऽऽकुलाम् ॥ ३८ ॥
‡चमूरु-चित्रक-व्याघ्र-हरिभिः शरभैरपि । सगोत्रैरन्तकस्येव, क्रूरसत्त्वैर्निरन्तराम् ॥ ३९ ॥
युध्यमानाहि-नकुलवामलूरविभीषणाम् । भल्लूकीकेशधरणव्यग्रबालकिरातिकाम् ॥ ४० ॥
मिथो महिषसङ्ग्रामभज्यमानजरत्तरुम् । नाहलोत्थापितक्षौद्रमक्षिकाभिरसञ्चराम् ॥ ४१ ॥
अभ्रंलिहतरुस्तोमतिरोहितदिवाकराम् । रहोरतभुवं मृत्योरिवाऽऽप स महाटवीम् ॥४२॥ [पञ्चभिः कुलकम्]
घोरां तामटवीं वेगात्, सुवेगो वेगवद्रथः । सलीलं लङ्घयामास, विपदं पुण्यवानिव ॥ ४३ ॥
मार्गान्ततरुविश्रान्तैरलङ्करणधारिभिः । संलक्ष्यमाणसौराज्यं, सुस्थैः पान्थवधूजनैः ॥ ४४ ॥
गोकुले गोकुले वृक्षतलासीनैः प्रमोदिभिः । गीयमानर्षभस्वामिचरितं गोपदारकैः ॥ ४५ ॥
भद्रशालादिवाऽऽहृत्याऽऽरोपितैः फलमालिभिः । अलङ्कृताखिलग्रामं, बहलैर्बहुभिर्द्रुमैः ॥ ४६ ॥
पत्तने पत्तने ग्रामे, ग्रामे वेश्मनि वेश्मनि । दानैकदीक्षितैरिभ्यैः, शोध्यमानवनीपकम् ॥ ४७ ॥
आगतैर्भरतात् त्रस्तैरिवोदग्भरतार्द्धतः । प्रायेणाऽध्यासितग्रामं, म्लेच्छैरक्षीणऋद्धिभिः ॥ ४८ ॥
षड्भ्यो भरतखण्डेभ्यः, खण्डान्तरमिव स्थितम् । भरताज्ञानभिज्ञं स, बहलीदेशमासदत् ॥ ४९ ॥
[ सप्तभिः कुलकम् ]
ऋते श्रीबाहुबलिनं, राजान्तरमजानतः । जनान् जानपदान् मार्गेष्वनार्त्तान् वार्त्तयन् मुहुः ॥ ५० ॥
वनेचरान् गिरिचरान्, दुर्मदान् श्वापदानपि । द्राक् खञ्जीभवतः पश्यन्, सुनन्दानन्दनाज्ञया ॥ ५१ ॥
प्रजानामनुरागोक्त्या, महतीभिश्च ऋद्धिभिः । अद्वैतमनुमिमानः, श्रीबाहुबलिनो नयम् ॥ ५२ ॥
भरतावरजोत्कर्षाकर्णनाद् विस्मृतं मुहुः । अनुसरन् वाचिकं स, प्राप तक्षशिलापुरीम् ॥ ५३ ॥
[ चतुर्भिः कलापकम् ]
किञ्चिल्लोचनपातेन, पुरीपरिसरोषितैः । प्रेक्ष्यमाणः क्षणं लोकैरेकपान्थावलीढया ॥ ५४ ॥
लीलोद्यानेषु सम्भूय, खेलेन खुरलीजुषाम् । सुभटानां भुजास्फोटैस्त्रसद्रथतुरङ्गमः ॥ ५५ ॥
इतस्ततः पौरऋद्धिप्रेक्षणव्यग्रताजुषा । दक्षिणस्येनाऽनिषिद्धोत्पथगामिस्खलद्रथः ॥ ५६ ॥
एकत्रेवेभरत्नानि, समस्तद्वीपचक्रिणाम् । बद्धान् वरगजान् पश्यन्, बहिरुद्यानशाखिषु ॥ ५७ ॥
प्रेक्षमाणो मन्दुरासु, बन्धुरास्तुरगोत्तमः । ज्योतिष्काणां विमानानि विहायेव समागतः ॥ ५८ ॥
भरतावरजैश्वर्याश्चर्यालोकनजन्मना । शिरोऽन्यथेव शिरो धुन्वन्, प्रविवेश स ता पुरीम् ॥ ५९ ॥
[ षड्भिः कुलकम् ]
स्वच्छन्दवृत्तीनत्याढ्यानापणेषु वणिग्जनान् । अहमिन्द्रानिव पश्यन्, राजद्वारं जगाम सः ॥ ६० ॥

---

१ कृष्णसर्पः । * °ननिषिषित्सया खता ॥ २ विचारैकचतुरम् । ३ गर्दभः । ४ बाणवत् । ५ चक्रवात । ६ लक्ष्यीकृतकुञ्जरैः । § चमूरुच° खता, स २, आ ॥ ७ मृगविशेष । ‡ चमूरैश्चित्रकैर्व्याघ्रैर्ह° खता, स २, आ ॥ ८ अष्टापदः । ९ वल्मीका । १० घनैः । ११ याचकम् । १२ सुखिन । १३ हिस्त्रप्राणिन । १४ अनुमान कुर्वन् । १५ नीतिम् । १६ सन्देशम् । १७ शराभ्यासजुषाम् । १८ सारथिना । १९ अश्वशाला । २० हट्टेषु ।

सहस्ररोचिषो रोचींष्याच्छिद्येव विनिर्मितान् । कुन्तान् दधानैः कुत्राऽपि, पत्त्यनीकैरधिष्ठितम् ॥ ६१ ॥
बिभ्राणैरिक्षुपत्राख्यान्ययःशल्यानि पत्तिभिः । शोभितं कुत्रचिच्छौर्यद्रुमैः पल्लवितैरिव ॥ ६२ ॥
अभङ्गानश्ममङ्गेऽपि, बिभ्रद्भिर्लोहमुद्गरान् । सनाथं क्वाऽपि सुभटैरेकदन्तैरिव द्विपैः ॥ ६३ ॥
फलकासिधरैः क्वाऽपि, चन्द्रकेतुधरैरिव । शोभितं वीरपुरुषप्रकाण्डैश्चण्डशक्तिभिः ॥ ६४ ॥
आ नक्षत्रगणं दूरापातिभिः शब्दवेधिभिः । तूणपृष्ठैः कौलपृष्ठपाणिभिः क्वाऽप्यधिष्ठितम् ॥ ६५ ॥
उद्दामशुण्डादण्डाभ्यां, स्थिताभ्यां पार्श्वयोर्द्वयोः । इभाभ्यां द्वारपालाभ्यामिव दूराद् भयङ्करम् ॥ ६६ ॥
सिंहद्वारं नृसिंहस्य, पश्यन् विस्मितमानसः । द्वाःस्थप्रतीक्षितस्तस्थौ, स्थितिरेषा-नृपौकसाम् ॥ ६७ ॥
[ सप्तभिः कुलकम् ]

गत्वा च बाहुबलये, द्वास्थेनेति न्यवेद्यत । त्वद्भ्रातुर्ज्यायसो दूतः, सुवेगो द्वारि तिष्ठति ॥ ६८ ॥
वेत्रिणाऽथाऽऽज्ञया राज्ञोऽनुमतो धीमतां वरः । बुधोऽर्कमण्डलमिव, सुवेगः प्राविशत् सदः ॥ ६९ ॥
आबद्धरत्नमुकुटैस्तेजस्विभिरिलाधवैः । दिवाकरैरिव दिवो, भुवं प्राप्तैरुपासितम् ॥ ७० ॥
प्रदीप्तचूलामणिभिरधृष्यैर्जगतोऽपि हि । कुमारप्रवरैर्नागकुमारैरिव सेवितम् ॥ ७१ ॥
स्वामिविश्वाससर्वस्ववल्लीसन्तानमण्डपैः । सचिवैरुपधाशुद्धैर्धीमद्भिः परिवारितम् ॥ ७२ ॥
सहस्रशश्चाऽऽत्मरक्षैर्निष्कोशायुधपाणिभिः । उजिह्वैरिव फणिभिर्भीषणं मलयाद्रिवत् ॥ ७३ ॥
वारस्त्रीभिर्वीज्यमानं, चामरैरतिचारुभिः । शैलं हिमालयमिव, चमरीभिर्निरन्तरम् ॥ ७४ ॥
स्वर्णदण्डधरेणाऽग्रे, शुचिवेषेण वेत्रिणा । सविद्युता शरद्वारिधरेणेवोपशोभितम् ॥ ७५ ॥
रत्नसिंहासनासीनं, तेजसामिव दैवतम् । ददर्श बाहुबलिनं, स तत्रोद्भूतविस्मयः ॥ ७६ ॥
[ सप्तभिः कुलकम् ]

नरनाथं ननामाऽथ, ललाटस्पृष्टभूतलः । स करीव रणद्दीर्घतरकाञ्चनशृङ्खलः ॥ ७७ ॥
ततो भ्रूसंज्ञया राज्ञा, तत्कालमुपनायिते । प्रदर्शिते प्रतीहारेणाऽऽसाञ्चक्रे स आसने ॥ ७८ ॥
तं प्रसादसुधाधौतदृशा पश्यन् नृपोऽब्रवीत् । सुवेग ! कुशलं कच्चिदार्यस्य भरतेशितुः ? ॥ ७९ ॥
तातपादैर्लालितायां, पालितायां च सुन्दर ! । तस्यां पुरि विनीतायां, कच्चित् कुशलिनी प्रजा ? ॥८०॥
षण्णां भरतखण्डानां, कामादीनामिव द्विषाम् । निरन्तरायं विजयं, कच्चिद् व्यधित भूपतिः ? ॥ ८१ ॥
षष्टिं वर्षसहस्राणि, कृत्वा कटकमुत्कटम् । सेनान्यादिपरीवारः, कच्चित् कुशलमागतः ? ॥ ८२ ॥
सिन्दूरारुणितैः कुम्भैर्द्यां सन्ध्याभ्रमयीमिव । वितन्वती करिघटा, राज्ञः कच्चिन्निरामया ? ॥ ८३ ॥
आ हिमाद्रिमहीमेतां, समाक्रम्य समेयुषाम् । राज्ञो वरतुरङ्गाणां, वर्त्तते कच्चिदक्लमः ? ॥ ८४ ॥
अखण्डाज्ञस्य सर्वत्र, सेव्यमानस्य पार्थिवैः । सुखेन व्यतिगच्छन्ति, कच्चिदार्यस्य वासराः ? ॥ ८५ ॥
परिपृच्छयेति तूष्णीके, स्थिते वृषभनन्दने । कृताञ्जलिरनावेगः, सुवेग इदमभ्यधात् ॥ ८६ ॥
इलायाः सकलाया यः, करोति कुशलं स्वयम् । अस्ति तस्य स्वतः सिद्धं, कुशलं भरतेशितुः ॥८७॥
पुर्याः सुषेणादीनां च, हस्त्यश्वस्य च किं क्षमः ? । दैवोऽप्यकुशलं कर्तुं, येषां नेता तवाऽग्रजः ॥ ८८ ॥
तुल्योऽधिको वा किं कोऽपि,क्वाऽप्यस्ति भरतेशितुः। षण्णां भरतखण्डानां,जये यो विघ्नकृद् भवेत्?॥८९॥
अखण्डिताज्ञः सर्वत्र, सेव्यते च नरेश्वरैः । तथाऽपि भरताधीशो, जातु नाऽन्तैः प्रमोदते ॥ ९० ॥
दरिद्रोऽपि कुटुम्बेन, सेव्यते यः स ईश्वरः । न सेव्यते तु यस्तेन, तस्यैश्वर्यसुखं कुतः? ॥ ९१ ॥

---

१ सूर्यस्य । २ तेजांसि । ३ नक्षत्रगणपर्यन्तम् । ४ धनु.पाणिभि. । ५ भूपतिभि । ६ काम-क्रोध-लोभ-मान-मद-हर्षाणाम् । ७ अश्रम । * सुखेनैवातिग° सं १, ख ॥ † एवमापृच्छ्य तू° स २, आ ॥ ८ स्थिरः । ९ पृथ्व्याः । १० नायकः । ११ अन्तःकरणे ।

षष्टिवर्षसहस्रान्तादेयुषा ज्यायसा तव । उत्कण्ठया कनिष्ठानामागमाध्वा निरीक्षितः ॥ ९२ ॥
सर्वे तत्राऽऽययुर्बन्धुसम्बन्धिसुहृदादयः । विदधुश्च महाराज्याभिषेकं भरतेशितुः ॥ ९३ ॥
आसतां तैः समायातैः, सुरैरपि सवासवैः । न हृष्यति महीनाथोऽपश्यन् पार्श्वे निजानुजान् ॥ ९४ ॥
द्वादशस्वपि वर्षेषु, ज्ञात्वा भ्रातॄननागतान् । तानाह्वातुं नरं प्रैषीदुत्कण्ठा हि बलीयसी ॥ ९५ ॥
कश्चिद् विकल्पं सङ्कल्प्य, भरतं न समाययुः । ययुस्तु तातपादान्तं, दीक्षामाददिरे च ते ॥ ९६ ॥
तेषां सम्प्रत्यरागाणां, न कोऽपि स्वो न वा परः । तैः कथं पूर्यते राज्ञो, भ्रातृवात्सल्यकौतुकम् ? ॥ ९७ ॥
तदेहि देहि हृदयप्रमोदं मेदिनीपतेः । तत्राऽपि यदि तत्राऽस्ति, स्नेहः सौभ्रात्रसम्भवः ॥ ९८ ॥
कुलिशादप्यधिकं वः, कठोरांस्तर्कयाम्यहम् । चिराद् दिगन्तादायाते, ज्येष्ठेऽप्येवं यदास्यते ॥ ९९ ॥
शङ्के वो गुर्ववज्ञानान्निर्भयेभ्योऽपि निर्भयान् । शूरैरपि वर्त्तितव्यं, गुरौ हि सभयैरिव ॥ १०० ॥
एकत्र विश्वविजयी, विनयी चाऽन्यतो गुरौ । पारिषद्यैर्विचार्यालं, द्वैतीयीकः प्रशस्यते ॥ १०१ ॥
तवाऽविनयमप्येवं, सोढा सर्वमहो नृपः । कर्णेजपानां किन्त्वेवमवकाशो निरङ्कुशः ॥ १०२ ॥
पिशुनानां गिरस्तत्र, त्वद्भक्तिप्रकाशिकाः । दूषयिष्यन्ति तच्चेतः, क्षीरं शुक्तच्छटा इव ॥ १०३ ॥
अत्यल्पमपि तद् रक्ष्यमात्मच्छिद्रं निजे प्रभौ । छिद्रेण लघुनाऽप्यम्भः, सेतुमुन्मूलयत्यहो ! ॥ १०४ ॥
इयत्कालं नागतोऽसीत्याशङ्कां हृदि मा कृथाः । अधुनाऽप्येहि सुस्वामी, गृह्णाति स्खलितं नहि ॥ १०५ ॥
त्वयि तत्र गते सद्यः, पिशुनानां मनोरथाः । विलीयन्तां हिमानीव, नभोभाजि नभोमणौ ॥ १०६ ॥
तेजोभिश्चिरमेधस्व, स्वामिना तेन सङ्गमात् । अद्यैव पर्वणि दिवाकरेणेव निशाकरः ॥ १०७ ॥
स्वामीयन्तस्तमन्येऽपि, बहवो बाहुशालिनः । सेवाशालीनतां हित्वा, सेवन्ते प्रतिवासरम् ॥ १०८ ॥
अवश्यं सेवनीयो हि, चक्रवर्त्ती महीधवैः । निग्रहानुग्रहसहः, सहस्राक्ष इवाऽमरैः ॥ १०९ ॥
चक्रवर्त्तित्वपक्षेऽपि, तस्य सेवा त्वया कृता । अद्वैतंभ्रातृसौहार्दपक्षमुद्योतयिष्यति ॥ ११० ॥
भ्रातेति यदि निर्भीको, नाऽऽयास्येतन्न साम्प्रतम् । आज्ञासारा न गृह्यन्ते, ज्ञातेयेन महीभुजः ॥ १११ ॥
अयस्कान्तैरिवाऽयांसि, देवदानवमानवाः । कृष्टाः प्रकृष्टैस्तेजोभिरायान्ति भरतेश्वरम् ॥ ११२ ॥
यमर्द्धासनदानेन, वासवोऽपि सखीयति । तमागमनमात्रेणाऽनुकूलयसि किं नहि ? ॥ ११३ ॥
वीरमानितया चेत् तं, राजानमवमन्यसे । तर्हि तस्मिन् ससैन्योऽपि, त्वमब्धौ सक्तुमुष्टिवत् ॥ ११४ ॥
चतुरशीतिलक्षास्तद्गजाः शक्रेभसन्निभाः । सह्याः केनाऽभिसर्पन्तः, पर्वता इव जङ्गमाः ? ॥ ११५ ॥
तावतोऽश्वान् रथांश्चाऽस्य, विष्वक् प्लावयतो महीम् । कल्लोलानिव कल्पान्तोदधेः कः स्खलयिष्यति ? ॥ ११६ ॥
तस्य षण्णवतिग्रामकोटिभर्त्तुः पदातयः । तद्ग्रामप्रमिताः सिंहा, इव त्रासाय कस्य न ? ॥ ११७ ॥
एकः सुषेणः सेनानीर्दण्डपाणिः समापतन् । कृतान्त इव किं शक्यः, सोढुं देवासुरैरपि ? ॥ ११८ ॥
अमोघं बिभ्रतश्चक्रं, चक्रिणो भरतस्य तु । सूर्यस्येव तमस्तोमः, स्तोकिकैव त्रिलोक्यपि ॥ ११९ ॥
तेजसा वयसा ज्येष्ठो, नृपः श्रेष्ठः स सर्वथा । राज्यजीवितकामेन, सेव्यो बाहुबले ! त्वया ॥ १२० ॥

अथ बाहुबलिर्बाहुबलापास्तजगद्बलः । इत्यभाषिष्ट गम्भीरध्वानोऽर्णव इवाऽपरः ॥ १२१ ॥
साधु दूत ! त्वमेवैको, वाग्मिनामग्रणीरसि । ममाऽपि पुरतो वाचं, य एवं वक्तुमीशिषे ॥ १२२ ॥
राततुल्यो हि मे भ्राता, ज्यायान् सोऽपि यदिच्छति । समागमं बान्धवानां, युक्तमेव तदप्यहो ! ॥ १२३ ॥
सुरासुरनृपश्रीभिर्ऋद्धः सोऽस्माभिरागतैः । लज्जिष्यतेऽल्पविभवैरागमायेति नो वयम् ॥ १२४ ॥

१ आगतेन । २ आगमनमार्ग । ३ पिशुनानाम् । ४ भरतस्य चेतः । ५ काञ्जिकम् । ६ हिमसमूहः । ७ सूर्ये । ८ स्वामिवदाचरन्तः । ९ इन्द्रः । १० अद्वैतभ्रातृवात्सल्यपक्षम् । ११ ज्ञातिभावेन । १२ लोहानि । १३ सखिवदाचरति । * कोट्यः षण्णवति सि° सं २, आ ॥ १४ अल्पमात्रा । १५ अग्रेसर ।

षष्टिं वर्षसहस्राणि, परराज्यानि गृह्णतः । कनिष्ठराज्यग्रहणे, व्यग्रता तस्य कारणम् ॥ १२५ ॥
सौभ्रात्रं कारणं तस्य, यदि तत् प्राहिणोत्[1] कथम् । भ्रातृणामेकशो दूतान्, राज्यसङ्ग्रामकाम्यया ? ॥१२६॥
को भ्राता ज्यायसा सार्द्धं, लुब्धेनाऽपि हि योत्स्यते ? । इति बुद्ध्या महासत्त्वाः, कनिष्ठास्तातमन्वगुः ॥१२७॥
तेषां च राज्यग्रहणेनाऽपि त्वत्स्वामिनो ध्रुवम् । छलमन्वीक्षमाणस्य, प्रकटं बकचेष्टितम् ॥ १२८ ॥
असावस्मास्वपि स्नेहं, तादृशं दर्शयन्नहो ! । प्रजिघाय विशिष्टं त्वां, वाक्प्रपञ्चविचक्षणम् ॥ १२९ ॥
प्रव्रज्य भ्रातृभी राज्यदानाद् याऽकारि तस्य मुत् । आगतेन मया राज्यगृध्नोः किं सा करिष्यते ? ॥१३०॥
वज्रादपि कठोरोऽहं, यत् स्वल्पविभवोऽपि सन् । तस्य ऋद्धिं न गृह्णामि, भ्रातृ[3]न्यकारकातरः ॥ १३१ ॥
स तु पुष्पादपि मृदुर्मायावी योऽनुजन्मनाम् । अवर्णवादभीरूणां, राज्यानि स्वयमाददे ॥ १३२ ॥
निर्भया निर्भयेभ्योऽपि, कथं दूत ! वयं ननु । भ्रातृराज्यानि गृह्णन्तं, यदुपेक्षामहे स्म तम् ? ॥ १३३ ॥
गुरौ प्रशस्यो विनयी, गुरुर्यदि गुरुर्भवेत् । गुरौ गुरुगुणैर्हीने, विनयोऽपि त्रपास्पदम् ॥ १३४ ॥
गुरोरप्यवलिप्तस्य, कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य, परित्यागो विधीयते ॥ १३५ ॥
तस्याऽऽच्छिन्नं किमश्वादि ?, भग्नं वा नगरादिकम् ? । येनाऽविनयमस्माकं, सोढा सर्वंसहो नृपः ॥ १३६ ॥
दुर्जनप्रतिकाराय, न तत्र प्रयतामहे । विमृश्यकारिणः सन्तः, किं दूष्यन्ते खलोक्तिभिः ? ॥ १३७ ॥
इयत्कालं नाऽऽगताः स्मो, यतो हेतोः स किं ययौ । अनीहालक्षणः क्वाऽपि ?, यामो येनाऽद्य चक्रिणम् ॥१३८॥
सर्वत्राऽप्यप्रमत्तानामलुब्धानां च नः सदा । स्खलितं किं स गृह्णीयाच्छलान्वेष्यपि भूतवत् ? ॥ १३९ ॥
किमप्यनाददानानां, तदीयं नीवृदादिकम् । स्वाम्येव नः कथं नाम, स भवेद् भरतेश्वरः ? ॥ १४० ॥
भगवानृषभस्वामी, स्वाम्येको मम तस्य च । मिथः स्वस्वामिसम्बन्धो, घटते कथमावयोः ? ॥ १४१ ॥
तेजोहेतोर्मयि गते, तत्र स्यात् तस्य कीदृशम् । तेजोऽभ्युदितवत्यर्के, तेजस्वी नहि पावकः ॥ १४२ ॥
स्वामीयन्तोऽक्षमास्ते तु, निषेवन्तां क्षमाभुजः । एष येषु वराकेषु, निग्रहानुग्रहक्षमः ॥ १४३ ॥
सेवाऽस्मिन् भ्रातृसौहार्दपक्षेणाऽपि मया कृता । चक्रवर्त्तित्वपक्षे स्याद्, यदबद्धमुखो जनः ॥ १४४ ॥
भ्राताऽस्म्य[11]भीः स चाऽऽज्ञे[12]शे, आज्ञापयतु यद्यलम् । ज्ञातिस्नेहेन किं वज्रं, वज्रेण न विदार्यते ? ॥१४५॥
सुरासुरनरोपा[13]स्त्या, प्रीतोऽस्त्वेष मयाऽस्य किम् ? । मार्ग एव क्षमः स्त[14]म्बे, रथः सज्जोऽपि भज्यते ॥१४६॥
तातभक्तो महेन्द्रश्चेज्ज्येष्ठं तं तातनन्दनम् । आसयत्यासनस्याऽर्द्धे, स किं तेनाऽपि दृप्यति ? ॥ १४७ ॥
ते त्वन्येऽस्मिन् समुद्रे ये, ससैन्याः सक्तुमुष्टिवत् । तेजोभिर्दुःसहोऽहं तु, हन्त ! स्वां वडवानलः ॥१४८॥
पत्तयोऽश्वा रथा नागाः, सेनानीर्भरतोऽपि च । मयि सर्वे प्रलीयन्तां, तेजांसीवाऽर्कतेजसि ॥ १४९ ॥
करिणेव करेणोच्चैर्यः समादाय पादयोः । मयोदलालि गगने, बालत्वे लोष्टुलीलया ॥ १५० ॥
गगने दूरमध्वानं, गत्वा यश्च पतन् भुवि । मा भूत् परासुरित्येष, मया प्र[15]त्यैषि पुष्पवत् ॥ १५१ ॥
चाटुभिश्चाटुकाराणां, निर्जितानां क्षमाभुजाम् । व्यस्मार्षीत् तदसौ प्राप्तो, जन्मान्तरमिवाऽधुना ॥ १५२ ॥
चाटुकाराः प्रणश्यन्ति, ते सर्वेऽपि स्वयं त्वसौ । एकः सहिष्यते बाहुबलिबाहुबलाद् व्यथाम् ॥ १५३ ॥
याहि दूत ! स एवैतु, राज्यजीवितकाम्यया । तातदत्तांशतुष्टेन, मयैवोपैक्षि तस्य भूः ॥ १५४ ॥

चित्रकायैरिव दृढस्वाम्याज्ञापाशयन्त्रितैः । अकोपताम्रनयनैः, प्रेक्ष्यमाणो नरेश्वरैः ॥ १५५ ॥
रोषाद्धृत हतेऽत्यन्तर्गृणद्भिः स्फुरिताधरैः । कटाक्ष्यमाणो विकटं, कुमारैश्च मुहुर्मुहुः ॥ १५६ ॥
जिघं[16]त्सुभिरिवोद्भ्रू[17]कैः, किञ्चिच्चलि[18]तहेतिभिः । दृढाबद्धपरिकरैरीक्ष्यमाणोऽङ्गरक्षकैः ॥ १५७ ॥

---

१ प्रेषयामास । २ राज्यलुब्धस्य । ३ भ्रातृतिरस्कारकातर । ४ लज्जास्थानम् । ५ सावलेपस्य । ६ निःस्पृहालक्षण । ७ ग्रहण अकुर्वाणानाम् । ८ देशादिकम् । ९ स्वामिवदाचरन्तः । १० भरत । ११ निर्भीक । १२ आज्ञाकारक । १३ उपासनया । १४ काण्डरहिते वृक्षादौ । १५ प्रत्यग्रहीष्ट । १६ अत्तुमिच्छुभि. । १७ ऊर्ध्वीकृतभ्रकुटिभिः । १८ चलितखड्गैः ।

हनिष्यते वराकोऽयं, केनाऽपि रभसाजुषा । नः स्वामिपदिकेनेति, चिन्त्यमानश्च मन्त्रिभिः ॥ १५८ ॥
सज्जीकृतेन हस्तेन, पादमुत्क्षिप्य तस्थुषा । कण्ठे धर्तुमिवोत्कैनोत्थापितो वेत्रपाणिना ॥ १५९ ॥
सुवेगो धैर्यमालम्ब्य, मनसि क्षुभितोऽपि सन् । निर्जगाम समुत्थाय, सदःसदनतस्ततः ॥ १६० ॥
[ षड्भिः कुलकम् ]

क्रुद्धतक्षशिलाधीशतारशब्दानुमानतः । द्वारस्थया पत्तिचम्वा, रोषक्षुभितया भृशम् ॥ १६१ ॥
आस्फाल्यमानैः फलकैर्नर्त्यमानैर्महासिभिः । उदस्यमानैश्चक्रैश्च, गृह्यमाणैश्च मुद्गरैः ॥ १६२ ॥
स्फाल्यमानैस्त्रिंशल्यैश्च, पीड्यमानैश्च तूणकैः । आदीयमानैर्दण्डैश्चोद्यम्यमानैश्च पर्शुभिः ॥ १६३ ॥
सर्वतोऽप्यात्मनो मृत्युमिव पश्यन् पदे पदे । स्खलत्पदो नृसिंहस्य, सिंहद्वारात् स निर्ययौ ॥ १६४ ॥
[ चतुर्भिः कुलकम् ]

क एष नूतनो राजद्वारान्निरगमत् पुमान् ? । आगतः खल्वयं दूतो, भरतस्य महीपतेः ॥ १६५ ॥
राजा किमपरः कश्चिदप्यस्तीह महीतले ? । भ्राता बाहुबलेर्ज्येष्ठोऽयोध्यायां भरतेश्वरः ॥ १६६ ॥
अत्र च प्रजिघायेमं, स दूतं केन हेतुना ? । आकारणाय स्वभ्रातुः, श्रीबाहुबलिभूपतेः ॥ १६७ ॥
इयत्कालं गतः क्वाऽऽसीद्, भ्राताऽस्मत्स्वामिनो ननु ? । षट्खण्डभरतक्षेत्रजयाय स गतो ह्यभूत्॥१६८॥
उत्कण्ठितः कनिष्ठं स, किं समाह्वयतेऽधुना ? । अन्यराजन्यसामान्यां, सेवां कारयितुं ननु ॥ १६९ ॥
तस्याऽसारान् नृपान् जित्वा, किं कीलेऽत्राऽधिरोहणम् ? । अखण्डश्चक्रवर्तित्वाभिमानस्तत्र कारणम् ॥१७०॥
कनिष्ठेन जितो राज्ञां, स्वं कथं दर्शयिष्यति ? । न वेत्ति जितकासी स, भाविनं स्वपराभवम् ॥ १७१ ॥
मन्त्रणे नाऽऽखुरप्यस्ति, भूपतेर्भरतस्य किम् ? । भूयांसो मन्त्रिणः सन्ति, मतिमन्तः क्रमागताः ॥१७२॥
स कण्डूयिषिषुस्तुण्डमहेः किं तैर्न वारितः ? । न वारितः प्रेरितः किन्त्वीदृशी भवितव्यता ॥ १७३ ॥
नागराणामिति मिथो, जल्पतामुच्चकैर्गिरम् । आकर्णयन् रथारूढो, नगर्या निर्जगाम सः ॥ १७४ ॥
[ दशभिः कुलकम् ]

देवताभिरिव प्रादुष्कृतां द्वारे व्रजन्नसौ । आर्सभ्योविग्रहकथामिनिहासमिवाऽशृणोत् ॥ १७५ ॥
क्रोधात् त्वरितमप्यस्य, गच्छतः स्पर्धयेव सा । वर्त्मनि त्वरितनर, तद्विग्रहकथा ययौ ॥ १७६ ॥
वार्त्तयाऽपि तया राजादेशेनेव क्षणाद् भटाः । प्रतिग्रामं प्रतिपुरं, कटकाय ममज्जिरे ॥ १७७ ॥
रथान् साङ्ग्रामिकान् कृष्ट्वा, शालाभ्योऽक्षादिभिर्नवैः । केचिद् दृढतरांश्चक्रुः, शरीराणीव योगिनः ॥१७८॥
आरुह्याऽऽरुह्य वाह्याल्यां, धाराभिरपि पञ्चभिः । कर्तुं रणसहानश्वान्, केऽपि श्रममजापयन् ॥ १७९ ॥
अयस्कारगृहेष्वेत्य, कृपाणादिकमायुधम् । अपरे तेजयाञ्चासुस्तेजोमूर्तिमिव प्रभो ॥ १८० ॥
संयोज्य शृङ्गसाराणि, वद्ध्वाऽभिनवतन्त्रिभिः । यमभ्रूसोदराण्यन्ये, शार्ङ्गधन्वान्यमन्त्रयन् ॥ १८१ ॥
वर्मादिवहनायोष्ट्रानरण्यान् केचिदानयन् । तूर्याणि प्राणवन्तीव, प्रयाणेषु प्रणादिनः ॥ १८२ ॥
सबाणान् बाणधीन् केचिन्, सशिरस्कांश्च कङ्कटान् । दृढानपि दृढांश्चक्रुः, सिद्धान्तानिव तार्किकाः ॥ १८३ ॥
केऽपि गुप्यद्गुरून् काण्डपटान् पटकुटीरपि । गन्धर्वभवनानीव, वितत्याऽऽलोकयन् क्षणात् ॥ १८४ ॥
स्पर्द्धयेव मिथः सर्वे, भक्ता बाहुबलौ नृपे । युधि सज्जीभवन्ति स्म, जना जानपदा अपि ॥ १८५ ॥
आप्तेन तत्र यः कोऽपि, न्यवार्यत रणोन्मुखः । अनामायेव तस्मै सोऽकुप्यद् भक्तिचिकीर्नृपे ॥ १८६ ॥

---

१ साहसिकेन । २ स्वामिपत्तिना । ३ उत्कण्ठेनेन । ४ पदातिसेनया । ५ अस्त्रनिधाननिवारके टाल इति लोके । ६ शस्त्रविशेषैः । ७ निषङ्ग । * °ष्यते ख, स १ ॥ ८ मूषक । ९ मुखम् । १० बाहुबलि-भरतयो । ११ सैन्याय । १२ रथावयवादिभि । १३ अश्वपाटिकायाम् । १४ अश्वगतिभि । १५ लोहकारगृहेषु । १६ यमभ्रूसदृशानि । १७ निषङ्गान् । १८ वर्माणि । १९ "कनात" इति लोके ।

प्राणैरपि प्रियं राज्ञोऽनुरागेण चिकीर्षताम् । जनानामेवमारम्भं, स ददर्श पथि व्रजन् ॥ १८७ ॥
श्रुत्वा दृष्ट्वा च तल्लोके, [*]पर्वतीयनृपा अपि । प्रतिराजानमद्वैतभक्तिमानितयाऽमिलन् ॥ १८८ ॥
गावो गोपस्वरेणेव, निकु[1]ञ्जेभ्यः सहस्रशः । तेषां गोशृङ्गनादेन, किराताः प्रदधाविरे ॥ १८९ ॥
[3]द्वीपिपुच्छत्वचा केचित्, केकि[4]पिच्छैश्च केचन । लताभिः केऽपि वेगेन, बबन्धुः कुन्तलान् भटाः ॥१९०॥
दन्दशू[5]कत्वचा केऽपि, तार्[6]क्ष्या केचन त्वचा । केचिद् गोधात्वचाऽबध्नन्, परिधानं मृगत्वचम् ॥ १९१ ॥
ग्रावहस्ता धनुर्हस्ताः, प्लवमानाः प्लवङ्गवत् । स्वपतीन् परिवव्रुस्ते, पतिभक्ताश्ववद् भृशम् ॥ १९२ ॥
अद्य दद्मो बाहुबलिप्रसादावक्रयं चिरात् । भरताक्षौहिणीक्षोदादिति तेषां गिरोऽभवन् ॥ १९३ ॥
तेषामप्येवमारम्भं, ससंरम्भं निरूपयन् । सुवेगश्चिन्तयामास, मनसैवं विविक्तधीः ॥ १९४ ॥
पैतृकेणेव वैरेण, त्वरन्ते रणकर्मणे । अहो! अमी बाहुबलिगृह्या विषयवासिनः ॥ १९५ ॥
[*]किराता अप्यमी हन्तोत्सहन्ते हन्तुमागतम् । असह्यलं बाहुबलिबलाग्रे समरे[†]च्छवः ॥ १९६ ॥
तं कञ्चन न पश्यामि, यः सज्जति युधे नहि । विद्यते स न कोऽपीह, रक्तो बाहुबलौ न यः ॥१९७॥
शूराश्च स्वामिभक्ताश्च, बहल्यां हलि[7]नोऽप्यहो! । तत् किं देशस्वभावोऽयमुत बाहुबलेर्गुणः? ॥१९८॥
भवन्तु वेतनक्रीताः, सामन्ताद्याः पदातयः । अहो! अस्य गुणक्रीती, पत्तीभूताऽखिलाऽपि भूः ॥१९९॥
बह्वीमपि चाक्रिचमूं, मन्ये लघ्वीं लघीयसः । श्रीबाहुबलिसैन्यस्य, तृण्यां वह्नेरिवाऽग्रतः ॥ २०० ॥
महावीरस्य किं चाऽस्य, न्यूनं बाहुबलेः पुरः? । कलभं शरभस्येव, शङ्के चक्रिणमप्यहो! ॥ २०१ ॥
ओजस्वी भुवि चक्र्येव, वज्र्येव दिवि विश्रुतः । तयोरन्तरवर्त्यूर्द्धवर्त्ती वा लघुरार्षभिः ॥ २०२ ॥
अपि तच्चक्रिणश्चक्रमपि वज्रं च वज्रिणः । मन्ये विफलमेवाऽस्य, चपेटाघातमात्रतः ॥ २०३ ॥
ऋक्षः कर्णे तदात्तोऽयं, महाहिर्मुष्टिना धृतः । विरोधितो यदस्माभिरहो! बाहुबलिर्बली ॥ २०४ ॥
मृगमेकमिव द्वीपी, गृहीत्वा भूमिखण्डलम् । सन्तुष्टोऽयं मुधाऽस्माभिस्तर्जयित्वा खलीकृतः ॥ २०५ ॥
अनेकनृपसेवाभिः, किमपूर्णं नृपस्य? यत् । अयमारम्भि सेवायै, वाहनायेव केसरी ॥ २०६ ॥
धिग् मन्त्रिणः स्वामिहितमानिनोऽस्मानपीह धिक् । यैर्द्विषद्भिरिवोपेक्षाश्चक्रे स्वाम्यत्र कर्मणि ॥ २०७ ॥
गत्वैकेन सुवेगेन, विग्रहश्चालितः प्रभोः । भणिष्यतीति लोकस्तु, धिग् दौत्यं गुणदूषणम् ॥ २०८ ॥
एवं विचिन्तयन् नित्यं, दिनैः कतिपयैरपि । सुवेगो नगरीं प्राप, विनीतां नीतिकोविदः ॥ २०९ ॥
नीतः सभायां द्वास्थेन, प्रणामरचिताञ्जलिः । न्यषीदत् सोऽथ पप्रच्छे, सादरं चक्रवर्त्तिना ॥ २१० ॥
किं नाम कुशलं बाहुबलेर्मदनुजन्मनः? । यत् त्वं सुवेग! वेगेनाऽऽगतोऽसि क्षुभितोऽसि तत् ॥२११॥
अथवा तेन पर्यस्तस्ततस्त्वरितमागतः । वीरवृत्तिरियं युक्ता, मद्भ्रातुस्तस्य दो[11]र्ष्मतः ॥ २१२ ॥
सुवेगोऽपि जगादैवं, देव! देवोऽपि न क्षमः । तस्याऽकुशलमाधातुं, तवेवाऽनर्वमौजसः ॥ २१३ ॥
स उक्तः स्वामिसेवार्थं, पूर्वं विनयपूर्वकम् । मया तवाऽनुजन्मेति, नितान्तहितकाङ्क्षिणा ॥ २१४ ॥
भेषजेनेव तीव्रेण, परिणामोपकारिणा । सोऽवाच्यवचनीयेन, वचसा तदनन्तरम् ॥ २१५ ॥
न साम्ना न खरे[12]णाऽपि, देवसेवां स मन्यते । किं नाम भेषजं कुर्याद्, विकारे सान्निपातिके? ॥२१६॥
मानसारस्तृणायैतत्, त्रैलोक्यमपि मन्यते । स सिंह इव जानीते, प्रतिमल्लं न कञ्चन ॥ २१७ ॥
अस्मिन् सुषेणसेनान्यां, सैन्ये च तव वर्णिते । किमेतदिति दुर्गन्धादिवाऽभाङ्क्षीत् स नासिकाम् ॥२१८॥
प्रभोर्भरतषट्खण्डविजये प्रस्तुते च सः । अनाकर्णितकं कुर्वन्, [13]स्वदोर्दण्डौ निरीक्षते ॥ २१९ ॥

---

* भूभुजः पार्वता अपि खता । पार्वे° स १ ॥ १ पर्वतसम्बन्धिनो नृपा । २ लतागृहेभ्य. । ३ व्याघ्रपुच्छत्वचा । ४ मयूरपिच्छै । ५ सर्पत्वचा । ६ तरुसम्बन्धिन्या । * अयं श्लोक आ पुस्तके पतितः । † °रे क च खं ॥ ७ कृषीवलाः । ८ तृणसमूहम् । ९ बाहुबलि । १० बलवत. । ११ उत्तमपराक्रमस्य । १२ तीक्ष्णेन । १३ स्वभुजदण्डौ ।

तातदत्तांशतुष्टस्य, ममैवोपेक्षयाऽग्रहीत् । भरतो भरतक्षेत्रषट्खण्डमिति चाऽऽह सः ॥ २२० ॥
पर्याप्तं सेवया तस्य, प्रत्युताऽऽह्वयतेऽधुना । रणाय देवं स व्याघ्रीमिव दोहाय निर्भयः ॥ २२१ ॥
ईदृक् तावत् तव भ्रातौजस्वी मानी महाभुजः । गन्धद्विप इवाऽसह्यः, सहते नाऽन्यविक्रमम् ॥ २२२ ॥
सभायां तस्य सामन्ता, हरेः सामानिका इव । प्रचण्डभुजशौण्डीर्या, न हीयन्ते तदाश्रयात् ॥ २२३ ॥
कुमारा अपि तस्योच्चै, राजतेजोभिमानिनः । रणकण्डूलदोर्दण्डास्ततो दशगुणा इव ॥ २२४ ॥
तन्मन्त्रमनुमन्यन्ते, मन्त्रिणोऽप्यस्य मानिनः । यादृशो भवति स्वामी, परिवारोऽपि तादृशः ॥ २२५ ॥
तस्याऽनुरागिणः पौरा, अप्यन्यं पार्थिवं न हि । जानन्ति न सहन्ते च, सत्योऽपरपतीनिव ॥ २२६ ॥
जना जानपदा ये च, तस्याऽष्टकरविष्टयः । भृत्या इवाऽनुरागेण, तेऽपि प्राणैः प्रियैषिणः ॥ २२७ ॥
वनेचरा गिरिचराः, सिंहा इव भटाश्च ये । मानसिद्धिं चिकीर्षन्ति, तेऽपि तस्य वशंवदाः ॥ २२८ ॥
अलमुक्त्वा बह्वथवा, स वीरो वर्त्ततेऽधुना । युयुत्सया दिदृक्षुस्त्वां, स्वामिन्नुत्कण्ठया न तु ॥ २२९ ॥
यदात्मने रोचतेऽतः परं स्वामी करोतु तत् । दूता न मन्त्रिणः किन्तु, सत्यवाचिकवाचिनः ॥ २३० ॥
युगपद् विस्मयामर्षमर्षहर्षादि तत्क्षणम् । नाटयित्वा भरतवद्, भरतोऽथाऽब्रवीदिति ॥ २३१ ॥

सुरासुरमनुष्येषु, तुल्यो नाऽमुष्य कश्चन । अर्थोऽनुभूत एवाऽयं, शिशुक्रीडास्वपि स्फुटम् ॥ २३२ ॥
जगत्त्रयस्वामिसूनोस्तस्याऽस्मदनुजन्मनः । त्रिलोक्यपि तृणायेति, वास्तवं न पुनः स्तवः ॥ २३३ ॥
सर्वथा श्लाघ्य एवाऽहमनेनाऽवरजन्मना । भाति नैको गुरुर्बाहुर्द्वितीयस्मिन् लघीयसि ॥ २३४ ॥
सिंहः सहेताऽऽलानं चेच्छरभो वा वशं व्रजेत् । वश्यो बाहुबलिश्च स्यात्, किं हि न्यूनं तदा भवेत् ?॥२३५॥
तत् सहिष्यामहे तस्य, वयं दुर्विनयानपि । यदि लोका अशक्तं मां, वदिष्यन्ति वदन्तु तत् ॥ २३६ ॥
सर्वमप्याप्यते वस्तु, पौरुषेण धनेन वा । न भ्राता प्राप्यते क्वाऽपि, तादृशस्तु विशेषतः ॥ २३७ ॥
किमेवं युज्यते नो वा ?, तूर्णीमास्थाय किं स्थिताः ? उदासीना इव यूयं ?, यथार्थं ब्रूत मन्त्रिणः ! ॥२३८॥

क्षमया स्वामिनो बाहुबलेरविनयेन च । प्रहारेणेव दूनोऽथ, सेनानीरित्यवोचत ॥ २३९ ॥
ऋषभस्वामिनः सूनोः, सुप्रभोर्भरतेशितुः । उचितैव क्षमा किन्तु, करुणाभाजने जने ॥ २४० ॥
वसेद् ग्रामेऽपि यो यस्य, तस्याधीनः स जायते । स देशमपि भुञ्जानो, वाचाऽपि न वशस्तव ॥ २४१ ॥
प्राणापहार्यपि वरं, वैरी तेजःप्रवर्द्धयन् । न तु बन्धुरपि भ्रातुस्तेजोवधविधायकः ॥ २४२ ॥
कोशैः सैन्यैः सुहृद्भिश्च, तनयैर्वपुषाऽपि च । तेजो रक्षन्ति राजानस्तेषां तेजो हि जीवितम् ॥ २४३ ॥
किमपूर्णं स्वराज्येनाऽप्यभूद् भर्तुः कृतस्तु यः । षट्खण्डभरतक्षेत्रविजयस्तेजसे स तु ॥ २४४ ॥
एकत्राऽपि क्षतं तेजः, सर्वत्र क्षतमेव हि । एकदाऽपि सती लुप्तशीला स्यादसती सदा ॥ २४५ ॥
संविभागो धनेष्वेव, गृहिणामपि बान्धवैः । गृह्यमाणं तेऽपि तेजो, नोपेक्षन्ते मनागपि ॥ २४६ ॥
सकलं भरतं जिष्णोर्यदिहाऽविजयः प्रभोः । उत्तीर्णस्य पयोराशिं, गोष्पदे तन्निमज्जनम् ॥ २४७ ॥
किञ्च श्रुतमिदं क्वाऽपि, दृष्टं वा क्वाऽपि यद् भुवि । चक्रिणोऽपि प्रतिस्पर्द्धी, राजा राज्यं भुनक्ति च ? ॥२४८॥
तत्राऽविनीते यः स्नेहो, भ्रातृसम्बन्धमात्रजः । तदेतदेकहस्तेन, तालिकावादनं विभोः ॥ २४९ ॥
वेश्याजन इवाऽस्नेहे, तत्राऽपि स्नेहलः प्रभुः । एवं निगदतो नस्तन्निषेधति निषेधतु ॥ २५० ॥
शत्रून् सर्वान् विजित्याऽन्तः प्रवेक्ष्यामीति संश्रवात् । निषेधितः कथं चक्रं, देवोऽद्यापि बहिःस्थितम् ॥२५१॥
भ्रातृव्याजाद् द्विषन्नेष, युज्यते न ह्युपेक्षितुम् । अमुमर्थं प्रभुः पृच्छत्वपरानपि मन्त्रिणः ॥ २५२ ॥

१ गन्धहस्ती इव । २ प्रचण्डभुजपराक्रमाः । * किं च तस्य कुमारा अप्योजस्ते- खन ॥ ३ ...कण्डूयुक्तभुजदण्ड । ४ पतिव्रता स्त्रियः । ५ योद्धुमिच्छया । ६ सत्यसन्देशवाचिनः । ७ सूत्रधारवत् । ८ स्तवम् । ... राजन्येको गुरुर्बाहुर्न द्वितीये ल० खंता ॥ ९ बन्धनम् । १० दयापात्रे । ११ गृहिणोऽपि । १२ समुद्रम् । ... ने स्नेहोऽयं खना ॥ १ तु ।

सम्मुखालोकनेनाऽनुयुक्तो वसुमतीभुजा । वाचस्पतिसमोऽवोचदथैवं सचिवाग्रणीः ॥ २५३ ॥
सेनानीरुक्तवान् युक्तं, कोऽन्यो वक्तुमिदं क्षमः ? । स्वामितेजो ह्युपेक्षन्ते, विक्रमायासभीरवः ॥ २५४ ॥
तेजसे स्वामिनाऽऽदिष्टा, अपि प्रायो नियोगिनः । रचयन्त्युत्तरं स्वार्थे, व्यसनं वर्द्धयन्ति वा ॥ २५५ ॥
अयं तु सेनाधिपतिर्दैवकीयस्य तेजसः । पवनः पावकस्येव, केवलं वृद्धिहेतवे ॥ २५६ ॥
चक्ररत्नमिव स्वामिन् !, सेनाधिपतिरप्यसौ । अपि स्तोकं द्विषच्छेषमविजित्य न तुष्यति ॥ २५७ ॥
पर्याप्तं तद् विलम्बेन, दण्डहस्तैस्त्वदाज्ञया । प्रयाणभम्भा तेऽद्यैव, ताड्यतां प्रतिपक्षवत् ॥ २५८ ॥
सर्पता तन्निनादेन, सवाहनपरिच्छदाः । मिलन्तु सैन्याः सुघोषाघोषेणेव दिवौकसः ॥ २५९ ॥
विदधातु प्रयाणं च, देवस्तक्षशिलां प्रति । उत्तराभिमुखं तेजोवृद्धये भानुमानिव ॥ २६० ॥
गत्वा स्वयमपि स्वामी, भ्रातुः सौभ्रात्रमीक्षताम् । वेत्तु सत्यमसत्यं वा, सुवेगमुखवाचिकम् ॥ २६१ ॥
तद्वचो भरताधीशस्तथेति प्रत्यपद्यत । युक्तं वचोऽपरस्याऽपि, मन्यन्ते हि मनीषिणः ॥ २६२ ॥
ततः शुभेऽह्नि भूपालः, कृतयात्रिकमङ्गलः । आरुरोह प्रयाणाय, नागं नगमिवोन्नतम् ॥ २६३ ॥
स्यन्दनाश्वरथारूढैः, पत्तिभिश्च सहस्रशः । यात्रातूर्याण्यवाद्यन्ताऽन्यराजैकचमूनिभैः ॥ २६४ ॥
नादैः प्रयाणतूर्याणां, सर्वसैन्यान्यथाऽमिलन् । समहस्तकनिर्घोषैरिव सङ्गीतकारिणः ॥ २६५ ॥
नरेन्द्रमन्त्रिसामन्तचमूपैः परिवारितः । अनेकमूर्त्तिर्भूत्वेव, नगर्या निर्ययौ नृपः ॥ २६६ ॥
अथ यक्षसहस्रेणाऽधिष्ठितं भरतेशितुः । अभूत् सेनापतिरिव, चक्ररत्नं पुरस्सरम् ॥ २६७ ॥
राज्ञः प्रयाणपिशुनाः, पांशुपूराश्चमूत्थिताः । दूरमाशु प्रससृपुरपसर्पा इव द्विषाम् ॥ २६८ ॥
तदा प्रचलितैस्तस्य, लक्षसङ्ख्यैर्मतङ्गजैः । अलक्ष्यन्त गजोत्पत्तिभूमयो निर्गजा इव ॥ २६९ ॥
चलद्भिस्तस्य तुरगैः, स्यन्दनैर्वेसरैर्नरैः । निर्वाहनमभून्मन्ये, सर्वमन्यन्महीतलम् ॥ २७० ॥
पादातं पश्यतां तस्य, बभौ नरमयं जगत् । अम्भोधिं वीक्षमाणानामम्भोमयमिवाऽखिलम् ॥ २७१ ॥
साधितं भरतक्षेत्रं, क्षेत्रमेकमिवाऽमुना । पूर्वाणीव मुनिः प्राप, रत्नान्येष चतुर्दश ॥ २७२ ॥
आयुक्ता इव निधयोऽस्याऽभूवन् वशगा नव । एवं सति कुतो हेतोः, क्व वा प्रास्थित पार्थिवः ? ॥ २७३ ॥
यदृच्छया गच्छति वा, स्वदेशान् वैष वीक्षितुम् । द्विषत्साधनहेतुस्तच्चक्रमग्रे प्रयाति किम् ? ॥ २७४ ॥
ध्रुवं दिगनुमानेन, याति बाहुबलिं प्रति । अहो ! अखण्डप्रसराः, कषाया महतामपि ॥ २७५ ॥
स तावच्छ्रूयते देवासुरैरपि सुदुर्जयः । तं जिगीषुरसौ मेरुमङ्गुल्योद्धर्तुमिच्छति ॥ २७६ ॥
जितोऽनुजोऽनुजेनाऽपि, जित इत्ययशो महत् । महीपतेरुभयथाऽप्यत्र नूनं भविष्यति ॥ २७७ ॥
इति प्रवादा लोकानां, ग्रामे ग्रामे पुरे पुरे । मार्गे मार्गे च भूपस्य, गच्छतो जज्ञिरे चिरम् ॥ २७८ ॥
[ सप्तभिः कुलकम् ]

वर्द्धिष्णुमिव विन्ध्याद्रिमन्धकारमिवोच्छलत् । उत्पतत्पांशुपूरेण, सर्वतोऽपि प्रदर्शयन् ॥ २७९ ॥
हेषाबृंहितचीत्कारकरास्फोटरवैर्दिशः । नादयन् पृतनाङ्गानां, चतुर्णामाननैरिव ॥ २८० ॥
शोषयन् मार्गसरितो, ग्रीष्मार्क इव सर्वतः । पवमान इवोद्दामः, पातयन्नध्वपादपान् ॥ २८१ ॥
बलाकिनीमिव दिवं, कुर्वन् सैन्यध्वजांशुकैः । सैन्यार्दितामिभमदैर्भुवं निर्वापयन्निव ॥ २८२ ॥
दिने दिने नरपतिर्गच्छंश्चक्रपदानुगः । राश्यन्तरमिवाऽऽदित्यो, बहलीदेशमासदत् ॥ २८३ ॥
[ पञ्चभिः कुलकम् ]

प्रवेशे तस्य देशस्य, निवेश्य शिबिरं नृपः । अवतस्थे समर्यादो, मर्यादायामिवाऽर्णवः ॥ २८४ ॥

---

१ प्रेरितः । २ देवसम्बन्धिन. । ३ शत्रुवत् । * °मन्त्रैश्चमू° स २, आ ॥ ४ प्रयाणसूचका । ५ गुप्तचराः । ६ पदातीनां समूहम् । ७ ढक्काख्यवाद्यविशेषै. । ८ पवनः । ९ बलाकायुताम् । १० मेषादिराश्यन्तरम् ।

अज्ञासीदागतं तत्र, सुनन्दानन्दनोऽपि तम् । राजनीतिगृहस्तम्भैः, सद्यः प्रणिधिपूरुषैः[1] ॥ २८५ ॥
अथ बाहुबलिर्यात्राहेतोर्भम्भामवीवदत्[2] । प्रतिनादैर्निनदन्तीं, द्यां भम्भीकुर्वतीमिव ॥ २८६ ॥
कृतप्रस्थानकल्याणः, कल्याणमिव मूर्त्तिमत् । आरुरोहोत्साहमिव, भद्रं बाहुबलिर्द्विपम् ॥ २८७ ॥
नृपैः कुमारैः सचिवैः, प्रवीरैरपरैरपि । सद्योऽपि परिवव्रे स, सुरैरिव पुरन्दरः ॥ २८८ ॥
महाबलैर्महोत्साहैरेककार्यप्रवृत्तिभिः । अभेद्यैस्तैरात्मनोऽंशैरिव बाहुबलिर्बभौ ॥ २८९ ॥
निषादिनः सादिनश्च, रथिनोऽथ पदातयः । तस्येयुर्लक्षशः सद्यस्तन्मनोधिष्ठिता इव ॥ २९० ॥
ओजस्विभिरुदस्त्रैः स्वैरेकवीरमयीमिव । स वीरैः रचयन्नुर्वीं, चचालाऽचलनिश्चयः ॥ २९१ ॥
अहमेकोऽपि जेष्यामि, परानिति परस्परम् । तद्वीरा व्यवदन्निःसंविभागजयगृध्नवः ॥ २९२ ॥
तत्र सैन्ये वीरमानी, कोहलावादकोऽप्यभूत् । सर्वेऽपि मणिताभाजः, कर्करा अपि रोहणे[3] ॥ २९३ ॥
महामाण्डलिकच्छत्रमण्डलैरिन्दुपाण्डुभिः । पुण्डरीकमयीव द्यौस्तदानीं समजायत ॥ २९४ ॥
ययौ बाहुबलिः पश्यन्, प्रत्येकमपि भूभुजः । भुजानिव निजानुच्चैर्मन्यमानो महौजसः ॥ २९५ ॥
भुवं भारैरनीकानां, जयतूर्यरवैर्दिवम् । आस्फोटयदिवोद्दामैर्व्रजन् बाहुबलिः पथि ॥ २९६ ॥
स्वदेशसीम्नि दूरेऽपि, शीघ्रं बाहुबलिर्ययौ । वायुतोऽपि भृशायन्ते, समरोत्कण्ठिताः खलु ॥ २९७ ॥
गङ्गातटे बाहुबलिः, स्कन्धावारं न्यवेशयत् । नात्यासन्ने नातिदूरे, शिविराद् भरतेशितुः ॥ २९८ ॥
प्रातर्युद्धोत्सवायाऽथ, मागधैः[4] ऋषभात्मजौ । निमन्त्रयामासतुस्तावन्योऽन्यमतिथी इव ॥ २९९ ॥
अथ बाहुबलिर्नक्तं[5], राजकानुमतं सुतम् । चक्रे सेनापतिं सिंहरथं सिंहमिवौजसा ॥ ३०० ॥
मूर्ध्नि पट्टद्विपस्येव, रणपट्टोऽस्य भूभुजा । स्वयं न्यवेशि सौवर्णः, प्रताप इव भासुरः ॥ ३०१ ॥
स राजानं नमस्कृत्य, लब्धया रणशिक्षया । मुदेव प्राप्तया हृष्टो, ययावावासमात्मनः ॥ ३०२ ॥
राजा युद्धार्थमादिश्याऽन्यानपि व्यसृजन्नृपान् । स्वयं रणार्थिनां तेषां, सत्कारः स्वामिशासनम् ॥ ३०३ ॥
कुमारनृपसामन्तसम्मतां भरतोऽपि हि । रणदीक्षां सुषेणस्य, ददावाचार्यवर्यवत् ॥ ३०४ ॥
*सिद्धिमन्त्रमिवाऽऽदाय, सुषेणः स्वामिशासनम् । चक्रवाक इव प्रातः, काम्यन् निजगृहं ययौ ॥ ३०५ ॥
कुमारान् बद्धमुकुटान्, सामन्तानितरानपि । आहूय भरताधीशः, समरायैवमन्वशात् ॥ ३०६ ॥
सेनापतिः सुषेणोऽयं, रणे मदनुजन्मनः । अप्रमत्तैरहमिवाऽनुगम्यो हे महौजसः ! ॥ ३०७ ॥
भो भो ! भवद्भिर्भूयांसो, भूभुजो भुजदुर्मदाः । महामात्रैरिव व्याला[6], व्यधीयन्त वशंवदाः ॥ ३०८ ॥
वैताढ्याद्रिमतिक्रम्य, किराताश्च दुराक्रमाः । विक्रान्तैर्बाढमाक्रान्ता, हन्त ! देवैरिवाऽसुराः ॥ ३०९ ॥
जीयन्तां हन्त ते सर्वे, यतस्तेषु न कोऽप्यभूत् । अपि तक्षशिलाधीशपत्तिमात्रस्य सन्निभः ॥ ३१० ॥
एकोऽपि सोमः सैन्यानि, तूलानीव समीरणः । दिशो दिशि क्षेप्तुमलं, ज्येष्ठो बाहुबलेः सुतः ॥ ३११ ॥
कनिष्ठो वयसा तस्याऽकनिष्ठो विक्रमेण[7] तु । महारथः सिंहरथः, शत्रुसैन्यदवानलः ॥ ३१२ ॥
किञ्च बाहुबलेः पुत्रपौत्रादिष्वपरेषु च । एकैकोऽक्षौहिणीमल्लः, कृतान्तस्याऽपि भीतये ॥ ३१३ ॥
सामन्ताद्याश्च ये तस्य, स्वामिभक्त्या बलेन च । तोल्यन्ते तेऽपि तैः सार्द्धं, प्रतिमानस्थिता[8] इव ॥ ३१४ ॥
अन्यसैन्येऽग्रणीर्यादृग्, भवत्येको महाबलः । सर्वेऽपि तादृशाः सैन्याः, सैन्ये तस्य महौजसः ॥ ३१५ ॥
दूरे बाहुबलिस्तावत्, स महाबाहुराहवे[9] । एतस्यैकोऽपि हि व्यूहो[10], दुःस्फोटो हन्त ! वज्रवत् ॥ ३१६ ॥
तद्युद्धायाऽभिगच्छन्तं, सुषेणमनुगच्छत । प्रावृषेण्यं पयोवाहं[11], पौरस्त्यपवना[12] इव ॥ ३१७ ॥
सुधोपमगिरा भर्त्तुरन्तस्ते पूरिता इव । स्फारीबभूवुर्वपुषः, पुलकेन समन्ततः ॥ ३१८ ॥

---

१ गुप्तचरैः । २ कांस्याख्यवाद्यविशेषः । ३ रोहणाचले । ४ चारणैः । ५ रात्रौ । *सिद्धम° सं१, खं॥
६ दुष्टगजाः । ७ पराक्रमेण श्रेष्ठः । ८ प्रतिबिम्बस्थिता इव । ९ युद्धे । १० सैन्यरचनाविशेषः । ११ मेघम् । १२ पूर्वदिक्पवनाः ।

विसृष्टास्ते नरेन्द्रेण, जयश्रीणामिव स्वयम् । वरणं प्रतिवीराणां, कुर्वाणाः स्वगृहं ययुः ॥ ३१९ ॥
द्वयोरपि तदाऽऽर्षभ्योः, प्रसादार्णमहार्णवम् । तितीर्षवो वीरवराः, ससज्जू रणकर्मणे ॥ ३२० ॥
कृपाणचापतूणीरगदाशक्त्यादिकान्यथ । आनर्चुर्दैवतानीव, स्वानि स्वान्यायुधानि ते ॥ ३२१ ॥
शस्त्राग्रे वादयामासुस्तूर्याण्युच्चैर्महाभटाः । तालं पूरयितुमिवोत्साहाच्चित्तस्य नृत्यतः ॥ ३२२ ॥
आत्मानं मार्जयन्ति स्म, चन्दनोद्वर्त्तनैर्नवैः । महाभटाः सुरभिभिः, स्वयशोभिरिवाऽमलैः ॥ ३२३ ॥
चक्रुर्भटा मार्गमदीर्ललाटेषु ललाटिकाः[1] । आबद्धमेचकपटवीरपट्टविडम्बिनीः[2] ॥ ३२४ ॥
शस्त्राणि जाग्रतां भाविशस्त्राशस्त्रिकथाकृताम्[3] । सैन्यद्वयेऽपि वीराणां, निद्रा भीतेव नाऽऽययौ ॥ ३२५ ॥
सैन्यद्वितयवीराणां, प्रातर्युद्धाभिकाङ्क्षिणाम् । त्रियामा शतयामेव, कथञ्चिदपि सा ययौ ॥ ३२६ ॥
आर्षभ्योर्वीक्षितुमिव, रणक्रीडाकुतूहलम् । अथाऽऽरुरोह चण्डांशुरुदयाचलचूलिकाम् ॥ ३२७ ॥
मन्दरक्षुब्धसङ्क्षुभ्यत्पयोधिपयसामिव । पुष्करावर्त्तमेघानामिव प्रलयजन्मनाम् ॥ ३२८ ॥
दम्भोलिताड्यमानानामिव सानुमतां महान् । प्रणादो रणतूर्याणां, सैन्ययोरुभयोरभूत् ॥३२९॥ [युग्मम्]
उत्कर्णतालास्तत्कालं, वित्रेसुर्दिग्मतङ्गजाः । सभयभ्रान्तयादस्काश्चुक्षुभुश्च पयोधयः ॥ ३३० ॥
गुहासु विविशुः क्रूराण्यपि सत्त्वानि सर्वतः । रन्ध्रादपि हि रन्ध्रेषु, न्यलीयन्त महोरगाः ॥ ३३१ ॥
गण्डशैलीभवच्छृङ्गाः, शैलाश्च प्रचकम्पिरे । बिभाय सङ्कुचत्पादकण्ठं कमठराडपि ॥ ३३२ ॥
बाढमध्वंसतेव द्यौर्विदद्र इव मेदिनी । रणातोद्यप्रणादेन, तदा तेन प्रसर्पता ॥ ३३३ ॥
[ चतुर्भिः कलापकम् ]
राजदौवारिकेणेव, रणतूर्येण चालिताः । उभयोः सैन्ययोः सैन्याः, ससज्जुरथ संयते ॥ ३३४ ॥
रणोत्साहोच्छ्वसद्देहात्, त्रुट्यन्तीर्वर्मजालिकाः । भूयो भूयो नवनवास्ताः केऽपि समचारयन् ॥ ३३५ ॥
आरोचकितयाऽश्वान् केऽप्यात्मना समनाहयन् । स्वतोऽपि ह्यधिकां रक्षां, भटाः कुर्वन्ति वाहने ॥३३६॥
सन्नाह्याऽऽरुह्य केऽप्यश्वान्, परीक्षितुमवाहयन् । दुःशिक्षितो जडश्चाऽश्वः, शत्रवत्येव सादिनि ॥ ३३७ ॥
सन्नाहग्राहणे केऽपि, हेषमाणांस्तुरङ्गमान् । आनर्चुर्दैववद् युद्धे, हेषा हि जयसूचिनी ॥ ३३८ ॥
लब्धाश्वान् केऽप्यसन्नाहान्, सन्नाहान् विजहुर्निजान् । शौण्डीरदोष्णां समरेष्विदं हि पुरुषव्रतम् ॥३३९॥
अस्खलन् सञ्चरेर्घोरे, रणे मत्स्य इवाऽर्णवे । दर्शयेः कौशलमिति, शशासुः केऽपि सारथिम् ॥ ३४० ॥
पथिका इव पाथेयैरस्त्रैः केऽपि निजान् रथान् । समन्तात् पूरयामासुः, पश्यन्तः समरं चिरम् ॥ ३४१ ॥
दूरादात्मख्यापनाय, केऽपि वैतालिकानिव । उत्तम्भितस्वस्वचिह्नान्, ध्वजस्तम्भान् दधान् व्यधुः ॥३४२॥
रथेष्वायोजयन् केऽपि, सुश्लिष्टयुगशालिषु । परसैन्यपयोराशिजलकान्तांस्तुरङ्गमान् ॥ ३४३ ॥
सारथिभ्यो दृढीयांसि[11], तनुत्राणि[12] केऽप्यदुः । रथाः सरथ्या[13] अपि हि, निष्फलाः सारथिं विना ॥३४४॥
उद्दामलोहवलयश्रेणिसम्पर्ककर्कशान् । आनर्चुर्दन्तिनां दन्तान्, केचिन्निजभुजानिव ॥ ३४५ ॥
करिष्वारोपयन् शारीः[14], पताकामालभारिणीः । केचिद् वासगृहाणीव, समेष्यन्त्या जयश्रियः ॥ ३४६ ॥
सद्यःस्फुटद्गण्डगजमदैर्मृगमदैरिव[15] । जल्पन्तः शकुनमिति, तिलकान् केऽपि चक्रिरे ॥ ३४७ ॥
परेभमदगन्धाढ्यं, वायुमप्यसहिष्णवः । कैश्चिदप्यारुरुहिरे, मनोवद् दुर्धरा गजाः ॥ ३४८ ॥
सौवर्णान् ग्राहयामासुः, सर्वैः सर्वेऽपि सिन्धुरैः । समरोत्सवशृङ्गारचोलकानिव कङ्कटान् ॥ ३४९ ॥
उन्नालनीलनलिनीलीलया लोहमुद्गरान् । कुञ्जरैर्ग्राहयामासुः, कराग्रेषु निषादिनः ॥ ३५० ॥

---

१ ललाटालङ्कारान् । २ कृष्णवस्त्र बोध्यम् । ३ शस्त्राशस्त्रियुद्धकथा कुर्वाणानाम् । ४ भयं प्राप्त. । ५ युद्धाय । ६ कवचजालिका. । ७ शत्रुवदाचरति । ८ अश्वशब्द. । ९ पराक्रमिभुजानाम् । १० चारणान् । ११ दृढतमानि । १२ कवचानि । १३ अश्वसहिता. । १४ गजकवचान् । १५ कस्तूरीभिः ।

कालायसमयान् कोशानाशु हस्तिपकाः शितान् । यमस्येवाऽऽहृतान् दन्तान्, दन्तिदन्तेषु विन्यधुः ॥३५१॥

वेसराः शकटाश्चाऽस्त्रपूर्णास्तूर्णं प्रयान्त्वनु । अन्यथा लघुहस्तानामस्त्रं पूरिष्यते कथम् ? ॥ ३५२ ॥
वर्मपूर्णाश्च यान्तूष्ट्रा, वर्माण्यग्रे धृतानि यत् । त्रुटिष्यन्ति हि वीराणामत्रुटद्रणकर्मणाम् ॥ ३५३ ॥
रथान्तराणि गच्छन्तु, सज्जानि रथिनामनु । भज्यन्ते हि रथाः शस्त्राशनिपातान्नगा इव ॥ ३५४ ॥
श्रान्तेषु प्रथमाश्वेषु, युद्धविघ्नो मास भूदिति । सादिनां पृष्ठतो यान्तु, शतशोऽश्वान्तराण्यपि ॥ ३५५ ॥
एकैकं बद्धमुकुटं, भूयांसोऽप्यनुयान्त्विभाः । न निर्वहति यत् तेषामिभेनैकेन सङ्गरः ॥ ३५६ ॥
गच्छन्तु महिषाश्चाऽनुसैनिकं वारिवाहिनः । रणायासनिदाघर्त्तुतप्तानां जङ्गमप्रपाः ॥ ३५७ ॥
कोश इवौषधीशस्य, सारं हिमगिरेरिव । उत्पाद्यन्तां च गोणीभी, रोहणौषधयो नवाः ॥ ३५८ ॥
रणे राजनियुक्तानामित्याज्ञापनजन्मभिः । कोलाहलैरतायिष्ट, रणतूर्यमहारवः ॥ ३५९ ॥

[ अष्टभिः कुलकम् ]

विश्वं शब्दमयमिव, तुमुलैर्विष्वगुत्थितैः । अयोमयमिव चाऽऽसीत्, सर्वतः प्रेङ्खदायुधैः ॥ ३६० ॥
स्मारयन्तश्चरित्राणि, पूर्वेषां दृष्टपूर्ववत् । शंसन्तो रणनिर्वाहफलं व्यासवदुच्चकैः ॥ ३६१ ॥
उद्दीपनाय वीराणां, कीर्त्तयन्तो मुहुर्मुहुः । उपस्थितान् प्रतिभटान्, सादरा नारदर्षिवत् ॥ ३६२ ॥
प्रतिनागं प्रतिरथं, प्रत्यश्वं पर्ववन्मुदा । वैतालिका रणोत्तालास्तत्र भ्रेमुरनाकुलम् ॥ ३६३ ॥

[ त्रिभिर्विशेषकम् ]

अथ बाहुबलिः स्नात्वा, प्रययौ देवमर्चितुम् । देवागारे गरीयांसः, कार्ये मुह्यन्ति न क्वचित् ॥३६४॥
ऋषभस्वामिनस्तत्र, प्रतिमां गन्धवारिभिः । भक्त्या सोऽस्नपयज्जन्माभिषेक इव वासवः ॥ ३६५ ॥
दिव्यया गन्धकाषाय्या, निष्कषायस्ततः स ताम् । ममार्ज परमश्राद्धः, श्रद्धयेव निजं मनः ॥ ३६६ ॥
प्रतिमायास्ततो यक्षकर्दमेन विलेपनम् । चक्रे दिव्यांशुकमयं, रचयन्निव चोलकम् ॥ ३६७ ॥
राजा जिनार्चामानर्च, विचित्रैः पुष्पदामभिः । सुरद्रुसुमनोदामसोदरैरिव सौरभात् ॥ ३६८ ॥
सौवर्णे धूपदहने, दिव्यं धूपं ददाह च । तद्धूमै रचयन् पूजां, नीलोत्पलमयीमिव ॥ ३६९ ॥
ततः कृतोत्तरासङ्गो, मकरस्थ इवाऽर्यमा । प्रतापमिव जग्राहाऽऽरात्रिकं दीप्रदीपकम् ॥ ३७० ॥
तदाऽऽरात्रिकमुत्तार्य, प्रणम्य च कृताञ्जलिः । आदिनाथं बाहुबलिर्भक्तिमानेवमस्तवीत् ॥ ३७१ ॥

अवज्ञायाऽज्ञतां स्वस्य, सर्वज्ञ! त्वां स्तवीम्यहम् । यन्मां मुखरयत्येषा, दुर्वारा भक्तिमानिता ॥ ३७२ ॥
जयन्त्यादिमतीर्थेश!, त्वत्पादनखदीप्तयः । वज्रपञ्जरतां यान्त्यो, भवारित्रस्तदेहिनाम् ॥ ३७३ ॥
देव! त्वच्चरणाम्भोजमीक्षितुं राजहंसवत् । धन्याः प्रतिदिनं दूरादपि धावन्ति देहिनः ॥ ३७४ ॥
घोरसंसारदुःखार्त्तैः, शीतार्त्तैरिव भास्करः । शरणीक्रियसे देव!, त्वमेवैको विवेकिभिः ॥ ३७५ ॥
ये त्वां पश्यन्ति भगवन्!, नेत्रैरनिमिषैर्मुदा । परलोकेऽप्यनिमिषीभावस्तेषां न दुर्लभः ॥ ३७६ ॥
देव! त्वद्देशनावाग्भिर्याति कर्ममलो नृणाम् । क्षीरेण क्षौमवस्त्राणामिव मालिन्यमाञ्जनम् ॥ ३७७ ॥
स्वामिन्नृषभनाथेति, जप्यमाना तवाऽभिधा । आलम्बते सर्वसिद्धिसमाकर्षणमन्त्रताम् ॥ ३७८ ॥
न वज्रमपि भेदाय, न शूलमपि हि च्छिदे । तेषां शरीरिणां नाथ!, येऽधित्वद्भक्तिवर्मिताः ॥ ३७९ ॥

भगवन्तमिति स्तुत्वा, नत्वा च पुलकाञ्चितः । निरगाद् देवतागारान्नरेश्वरशिरोमणिः ॥ ३८० ॥

---

१ कृष्णलोहमयान् । २ हस्तलाघववताम् । ३ अविच्छिन्नरणकर्मणाम् । ४ रणप्रयासग्रीष्मर्त्तुतप्तानाम् । ५ जङ्गमजलसत्राणि । ६ चन्द्रस्य । ७ व्रणसंरोहणी । ८ लोहमयमिव । ९ महान्त । १० सुगन्धिद्रव्यमिश्रितविलेपनविशेषेण । ११ कल्पवृक्षपुष्पमालासमानैरिव । १२ कृत उत्तरासङ्गो येन स, सूर्यपक्षे कृत उत्तरदिशि सङ्गो येन स । १३ मकरराशिस्थित । १४ सूर्य । १५ संसाररिपुत्रस्तप्राणिनाम् । १६ देवत्वम् । १७ कज्जलसम्बन्धि ।

जग्राह वज्रसन्नाहं, हेममाणिक्यमण्डितम् । विजयश्रीविवाहाय, स कञ्चुकमिवोच्चकैः ॥ ३८१ ॥
शुशुभे वर्मणा तेन, भासुरेण नरेश्वरः । घनैर्विद्रुमसंहत्याऽधिपतिर्यादसामिव ॥ ३८२ ॥
शिरस्त्राणं च शिरसि, न्यधत्त धरणीधवः । शैलशृङ्गनिविष्टाभ्रमण्डलश्रीविडम्बकम् ॥ ३८३ ॥
पृष्ठेऽबध्नाच्च तूणीरौ, लोहनाराचपूरितौ । महाफणिगणाकीर्णपातालविवरोपमौ ॥ ३८४ ॥
युगान्तसमयोदस्तयमदण्डसहोदरम् । कोदण्डं वामदोर्दण्डे, धारयामास भूपतिः ॥ ३८५ ॥
आशास्यमानः स्वस्तीति, सौवस्तिकवरैः पुरः । जीव जीवेत्युच्यमानः, स्वगोत्रजरतीजनैः ॥ ३८६ ॥
नन्द नन्देत्युच्यमानो, जरदाप्तजनैः पुनः । चिरं जय जयेत्युच्चैर्गद्यमानश्च बन्दिभिः ॥ ३८७ ॥
मेरुशृङ्गमिव स्वारोढ्, महेभं स महाभुजः । आरुरोहाऽऽरोहकेण, दत्तहस्तावलम्बनः ॥ ३८८ ॥
[ त्रिभिर्विशेषकम् ]

इतस्तदानीमेव श्रीभरतेशोऽपि पुण्यधीः । जगाम देवतागारं, कोशागारं शुभश्रियः ॥ ३८९ ॥
प्रतिमामादिनाथस्य, स्नपयामास तत्र सः । दिग्जयानीतपद्मादितीर्थतोयैर्महामनाः ॥ ३९० ॥
ममार्ज राजशार्दूलो, देवदूष्येण वाससा । प्रतिमां तामप्रतिमां, शिल्पिवर्यो मणीनिव ? ॥ ३९१ ॥
हिमाचलकुमारादिदत्तैर्गोशीर्षचन्दनैः । विलिलेप प्रतिमां तां, स्वयशोभिरिवाऽवनीम् ॥ ३९२ ॥
पद्मैर्विकस्वरैः पद्मासद्मपद्मसहोदरैः । रचयामास पूजां च, नयनस्तम्भनौषधीम् ॥ ३९३ ॥
प्रतिमायाः पुरो धूपं, निर्ददाह महीपतिः । आलिखन्निव कस्तूरीपत्रालीं धूमवल्लिभिः ॥ ३९४ ॥
निःशेषकर्मसमिधामग्निकुण्डमिवोल्वणम् । आदत्ताऽऽरात्रिकं दीप्रदीपकं राजदीपकः ॥ ३९५ ॥
तदुत्तार्याऽऽदिनाथाय, नमस्कृत्य च भूपतिः । विरचय्याऽञ्जलिं मूर्ध्नि, स्तोतुमित्युपचक्रमे ॥ ३९६ ॥
त्वां जडोऽपि जगन्नाथ !, युक्तमानी स्तवीम्यहम् । लल्ला अपि हि बालानां, युक्ता एव गिरो गुरौ ॥ ३९७ ॥
देव ! त्वामाश्रयन् जन्तुर्गुरुकर्माऽपि सिध्यति । अयोऽपि हेमीभवति, स्पर्शात् सिद्धरसस्य हि ॥ ३९८ ॥
त्वां ध्यायन्तः स्तुवन्तश्च, पूजयन्तश्च देहिनः । धन्याः स्वामिन्नाददते, मनोवाग्वपुषां फलम् ॥ ३९९ ॥
पृथ्व्यां विहरतः स्वामिन्नपि ते पादरेणवः । महामतङ्गजायन्ते, पापद्रुन्मूलने नृणाम् ॥ ४०० ॥
नैसर्गिकेण मोहेन, जन्मान्धानां शरीरिणाम् । विवेकलोचनं नाथ !, त्वमेको दातुमीशिषे ॥ ४०१ ॥
सुचिरं चञ्चरीकन्ति, ये भवत्पादपद्मयोः । तेषां न दूरे लोकाग्रं, मेर्वादि मनसामिव ॥ ४०२ ॥
देव ! त्वद्देशनावाग्भिर्गलन्त्याशु शरीरिणाम् । कर्मपाशा जम्बुफलानीव वारिदवारिभिः ॥ ४०३ ॥
इदं याचे जगन्नाथ !, त्वां प्रणम्य मुहुर्मुहुः । त्वयि भक्तिस्त्वत्प्रसादादक्षयाऽस्त्वब्धिवारिवत् ॥ ४०४ ॥
आदिनाथमिति स्तुत्वा, नमस्कृत्य च भक्तिमान् । निर्ययौ देवतागारान्नरदेवदिवाकरः ॥ ४०५ ॥
भूयो भूयोऽपि शिथिलीकृत्य माने विनिर्मितम् । अङ्गेन हर्षोच्छ्वसितेनाऽऽददे कवचं नृपः ॥ ४०६ ॥
रेजे तेनाऽङ्गलग्नेन, दिव्येन मणिवर्मणा । माणिक्यपूजया देवप्रतिमेव महीपतिः ॥ ४०७ ॥
स्वर्णरत्नशिरस्त्राणं, मध्योच्चं छत्रवर्तुलम् । द्वैतीयीकमिवोष्णीषं, बभार भरतेश्वरः ॥ ४०८ ॥
नागराजाविवाऽत्यन्ततीक्ष्णनाराचदन्तुरौ । पृष्ठे निषङ्गौ बिभराञ्चक्रे विश्वम्भराधवः ॥ ४०९ ॥
उपाददे ततो वैरिवामं वामेन पाणिना । कालपृष्ठं महाचापं, वज्रीव ऋजुरोहितम् ॥ ४१० ॥
अन्यतेजस्विनां तेजो, ग्रसमानो ग्रहेन्द्रवत् । लीलास्थिरपदन्यासं, क्रामन् भद्रगजेन्द्रवत् ॥ ४११ ॥
तृणवद् गणयन्नग्रे, प्रतिवीरान् मृगेन्द्रवत् । दृष्ट्याऽपि दुर्विषहया, भीषणः पन्नगेन्द्रवत् ॥ ४१२ ॥

१ वज्रकवचम् । २ विपुलप्रवालसमूहेन । ३ यादसा अधिपति समुद्र । ४ पुरोहितैः । ५ इन्द्र । * शिवश्रि° खंता ॥
६ लक्ष्मीगृहपद्मसदृशैः । ७ समग्रकर्मकाष्ठानाम् । ८ स्खलिता । ९ सुवर्णीभवति । १० अमरायन्ते । † एकं खंता ॥
११ शिरोवेष्टनम् । १२ पृथ्वीपतिः । १३ वैरिप्रतिकूलम् ।

बन्दिवृन्दारकैरुच्चैः, स्तूयमानो महेन्द्रवत् । नरेन्द्रो रणनिस्तन्द्रमारुरोह महागजम् ॥ ४१३ ॥

[ त्रिभिर्विशेषकम् ]

मागधेभ्यः प्रयच्छन्तौ, द्रविणं कल्पशाखिवत् । पश्यन्तावागतान् सैन्यान्, सहस्रेक्षणवन्निजान् ॥४१४॥
बिभ्राणौ बाणमेकं च, मृणालं राजहंसवत् । कुर्वाणौ रणवार्त्तां च, रतवार्त्तां विलासिवत् ॥ ४१५ ॥
महोत्साहौ महौजस्कौ, नभोमध्यं दिनेशवत् । उभावप्यार्षभी स्वस्वसैन्यमध्यमथेयतुः ॥ ४१६ ॥

[ त्रिभिर्विशेषकम् ]

भरतो बाहुबलिश्च, निजसैन्यान्तरस्थितः । बभार जम्बूद्वीपान्तर्वर्त्तिमेरुगिरिश्रियम् ॥ ४१७ ॥
तयोश्च सेनयोरन्तर्वर्तिनी भूरलक्ष्यत । विदेहक्षेत्रभूमीव, मध्ये निषधनीलयोः ॥ ४१८ ॥
उभे अपि तयोः सेने, पङ्क्तीभूयाऽभ्यसर्पताम् । कल्पान्तसमये पूर्वापरवारिनिधी इव ॥ ४१९ ॥
बहिर्विस्फुट्य गच्छन्तो, न्यवार्यन्त पदातयः । राजदौवारिकैर्वारिप्रवाहा इव सेतुभिः ॥ ४२० ॥
मिथः समपदन्यासं, चेलू राजाज्ञया भटाः । ते तालेनैकसङ्गीतवर्त्तिनो नर्त्तका इव ॥ ४२१ ॥
अलङ्घितनिजस्थानं, चलद्भिः सर्वसैनिकैः । पताकिन्यौ तयोरेकतनू इव विरेजतुः ॥ ४२२ ॥
दारयन्तः शताङ्गानां, रथाङ्गैरायसाननैः । अयःकुद्दालकल्पैश्च, खनन्तो वाजिनां खुरैः ॥ ४२३ ॥
भिन्दाना वेसरखुरैरर्द्धचन्द्रैरिवाऽऽयसैः । क्षुन्दन्तश्च पदातीनां, चरणैर्वज्रपार्ष्णिभिः ॥ ४२४ ॥
खण्डयन्तः क्षुरप्राभैर्महिषोक्षखुरैः खरैः । मुद्गराभैः करिपादैश्चूर्णयन्तश्च मेदिनीम् ॥ ४२५ ॥
छादयन्तो रजोभिर्द्यामन्धकारसहोदरैः । द्योतयन्तश्च शस्त्रोस्रैर्भानुमद्भानुबन्धुभिः ॥ ४२६ ॥
भूयसा निजभारेण, क्लिश्नन्तः कूर्मकर्परम् । दंष्ट्रां महावराहस्य, नामयन्तः समुन्नताम् ॥ ४२७ ॥
गाढं शिथिलयन्तश्च, फणाटोपं फणीशितुः । दिग्गजानपि खर्वाङ्गीकुर्वन्तो निखिलानपि ॥ ४२८ ॥
ब्रह्माण्डभाण्डं क्ष्वेडाभिर्वादयन्त इवोच्चकैः । करास्फोटप्रणादैश्च, स्फोटयन्त इवोत्कटैः ॥ ४२९ ॥
उपलक्ष्योपलक्ष्योच्चैर्विश्रुतैः केतुलाञ्छनैः । नामग्राहं च बृण्वन्त, अनिवारान् महौजसः ॥ ४३० ॥
अन्योन्यमाह्वयमाना मानशौण्डीर्यशालिनः । अग्रमैन्यग्रमैन्या अमिलन् सैन्ययोर्द्वयोः ॥ ४३१ ॥

[ नवभिः कुलकम् ]

गजिनो गजिनां यावद्, यादांसि यादसामिव । सादिनां सादिनो यावद्, वीचिनामिव वीचयः ॥४३२॥
रथिनां रथिनो यावद्, वायूनामिव वायवः । पत्तीना पत्तयो यावच्छृङ्गिणामिव शृङ्गिणः ॥ ४३३ ॥
प्रासं प्रासस्याऽसिमसेर्मुद्गरं मुद्गरस्य च । दण्डं दण्डस्य चाऽस्पर्धन्मेलयन्तो ढुढौकिरे ॥ ४३४ ॥
तावन्नभसि सम्भ्रान्तास्त्रिलोक्योन्माथशङ्कया । उपर्युपरि गीर्वाणं, गीर्वाणाः समुपागमन् ॥ ४३५ ॥

[ चतुर्भिः कलापकम् ]

सङ्घर्षः कोऽयमार्षभ्योः, स्वकयोरिव हस्तयोः ? । इत्यामृशन्तस्ते प्रोचुरुभयोः सैनिकानिति ॥४३६॥
ऋषभस्वामिनोऽत्राऽऽज्ञा, योद्धव्यं केनचिन्न हि । युष्माकं स्वामिनो यावद्, बोधयामो मनस्विनौ ॥४३७॥
आज्ञया त्रिजगद्भर्तुरुभयेऽपि हि सैनिकाः । तथैव तस्थुस्ते सर्वेऽप्यालेख्यलिखिता इव ॥ ४३८ ॥
किममी बाहुबलिनः ?, किं वा भरततः सुराः ? । एवं तु चिन्तयामासुः, सैनिकास्ते तथास्थिताः ॥४३९॥
न व्यनश्यदहो ! कार्यं, भद्रं लोकाय सम्प्रति । इति ब्रुवाणा गीर्वाणाश्चक्रिणं ययुरादितः ॥ ४४० ॥
दत्त्वा जयजयेत्याशीर्वादं देवाः प्रियंवदाः । युक्तियुक्तेन वचसा, तं मन्त्रिण इवाऽवदन् ॥ ४४१ ॥
साधु षट्खण्डभरतक्षेत्रे भूपास्त्वया जिताः । नृदेव ! देवराजेन, पूर्वदेवा इवाऽभितः ॥ ४४२ ॥

---

१ पूर्वपश्चिमसमुद्रौ । २ गजद्वारपालैः । ३ रथानाम् । ४ चक्रैः । ५ महिषवृषखुरैः । ६ सूर्यकिरणसदृशैः । ७ कूर्मपृष्ठम् । ८ कुब्जीकुर्वन्त । ९ सिंहनादैः । १० चित्रलिखिता इव । ११ न विनष्टम् । १२ असुराः ।

तवौजसा तेजसा च, तेषु राजेन्द्र! राजसु । मृगेषु शरभस्येव, प्रतिमल्लो[1] न कोऽप्यभूत् ॥ ४४३ ॥
अपूर्यत रणश्रद्धा, तैर्नूनं भवतो नहि । हैयङ्गवीनश्रद्धेव[2], वारिकुम्भैर्विलोडितैः ॥ ४४४ ॥
द्वितीयेनाऽऽत्मनो भ्रात्रा, सहाऽऽरेभे त्वया ततः । युद्धमेतत्[3] स्वहस्तेन, स्वहस्तस्येव ताडनम् ॥ ४४५ ॥
दोःकण्डूरेव ते राजंस्तद्रणे कारणं ध्रुवम् । गण्डकण्डूरिवेभस्य, महातरुनिघर्षणे ॥ ४४६ ॥
भुजक्रीडाऽपि युवयोर्जगतां प्रलयाय हि । वनभङ्गाय सम्फेटो, मत्तयोर्हि वनेभयोः ॥ ४४७ ॥
विश्वं संहर्तुमारब्धं, क्रीडामात्रकृते कुतः ? । क्षणिकप्रीतये मांसादिना[4] खगकुलं यथा ॥ ४४८ ॥
जगत्रातुः कृपाम्भोधे ऋषभादाप्तजन्मनः । अग्निवृष्टिः सुधासूतेरिवेदं[5] किं तवोचितम् ? ॥ ४४९ ॥
तद् घोरात् सङ्गरादस्मात्, सङ्गेभ्य इव संयमी । विरम क्षोणिरमण!, निजं व्रज निकेतनम् ॥ ४५० ॥
त्वय्यायाते समायातो, याते यास्यत्यसावपि । तवाऽनुजो बाहुबलिः, कार्यं हि खलु कारणात् ॥४५१॥
शुभं भवतु वां विश्वक्षयांहःपरिहारतः[6] । उभयेभ्योऽपि सैन्येभ्यश्चाऽस्तु क्षेमं रणोज्झनात्[7] ॥ ४५२ ॥
त्वत्सैन्यभारसम्भूतभूमिभङ्गविरामतः । भूगर्भवासिनः सन्तु, भवनेन्द्रादयः सुखम् ॥ ४५३ ॥
भूमिः शैलाः समुद्राश्च, प्रजाः सत्त्वानि सर्वतः । क्षोभं त्यजन्तु त्वत्सैन्यविमर्दविरहादिह ॥ ४५४ ॥
युष्मत्समरसम्भाविविश्वसंहारशङ्कया । विना भूताः सुखं तिष्ठन्त्वपि सर्वे दिवौकसः ॥ ४५५ ॥
इत्युदित्वा कार्यवादं, विरतेषु सुपर्वसु[8] । बभाषे भरताधीशो, गिरा स्तनितधीरया[9] ॥ ४५६ ॥
इमां विश्वहितां वाचं, के ब्रूयुर्भवतो विना ? । जनो मुदास्ते[10] प्रायेण, परकौतुकमीक्षितुम् ॥ ४५७ ॥
किन्त्वत्र समरोत्थानकारणं वतुतोऽन्यथा । युक्त्याऽन्यथा तु युष्माभिरूहितं हितकाङ्क्षिभिः ॥ ४५८ ॥
कार्यमूलमविज्ञाय, स्वयमभ्यूह्य[11] किञ्चन । शासितुः शासनं मोघं, भवेत् सुरगुरोरपि ॥ ४५९ ॥
दोष्मानस्मीति[12] सहसा, सङ्ग्रामेच्छुर्न खल्वहम् । सति भूयसि किं तैले, शैलेभ्यङ्गो[13] विधीयते ? ॥४६०॥
षट्खण्डभरतक्षेत्रे, नृपतीन् जयतो मम । प्रतिमल्लो यथा नाऽऽसीत्, तथाऽद्याऽपि न विद्यते ॥४६१॥
प्रतिमल्लो द्विषन्नेव, जयाजयनिबन्धनम् । बाहुबलिस्त्वहमेव, जातभेदो विधेर्वशात् ॥ ४६२ ॥
निर्वादभीरुर्लज्जावान्, विवेकी विनयी सुधीः । पुरा तातमिवाऽमंस्त, मां हि बाहुबलिः खलु ॥४६३॥
षष्टिं वर्षसहस्राणि, कृत्वा दिग्जयमागतः । तं वीक्षेऽन्यादृशमिव, भूयान् कालोऽत्र कारणम् ॥ ४६४ ॥
ततोऽभिषेकवर्षेषु, द्वादशस्वपि मां न हि । आगाद् बाहुबलिस्तत्र, प्रमादस्तर्कितो मया ॥ ४६५ ॥
आह्वानाय मया दूते, प्रहितेऽप्येष नैति यत् । तर्क्यते मन्त्रिणां मन्त्रदोषस्तत्राऽपि कारणम् ॥ ४६६ ॥
अहमप्याह्वयाम्येनं, न लोभान्न च कोपतः । किन्त्वन्तर्न विशेच्चक्रमेकस्मिन्नप्यनानते[14] ॥ ४६७ ॥
न चक्ररत्नं नगरीं, प्रविशत्येष मां न च । परस्परस्पर्द्धयेवेत्यनयोः सङ्कटेऽपतम् ॥ ४६८ ॥
स एकवारमायातु, मम भ्राता मनस्व्यपि । अन्योर्वीमपि गृह्णातु, मत्तः पूजामिवाऽतिथिः ॥ ४६९ ॥
विना चक्रप्रवेशं मे, नाऽन्यत् सङ्ग्रामकारणम् । नतेनाऽप्यनतेनाऽपि, न मे मानोऽनुजन्मना ॥ ४७० ॥
अथोचिरे सुरा राजन्!, महत् सङ्ग्रामकारणम् । अल्पेन कारणेनेदृक्, प्रवृत्तिर्न भवादृशाम् ॥ ४७१ ॥
उपेत्य बाहुबलिनं, बोधयामोऽधुना वयम् । युगक्षय इवाऽऽगच्छन्, रक्षणीयो जनक्षयः ॥ ४७२ ॥
भवानिव बुधः सोऽपि, यद्युच्चैः कारणान्तरम् । वदेत् तथाऽपि युद्धेन, योद्धव्यमधमेन न ॥ ४७३ ॥
दृष्टि-वाग्बाहु-दण्डाद्यैर्युद्धैर्योद्धव्यमुत्तमैः । वधो निरपराधानां, गजादीनां यथा न हि ॥ ४७४ ॥
तथेति प्रतिपेदाने, चक्रवर्त्तिनि नाकिनः । द्वितीयस्मिन् बले[15] बाहुबलिराजानमभ्ययुः ॥ ४७५ ॥

---

१ प्रतिस्पर्धी । २ नवनीतश्रद्धा । ३ युद्धम् । ४ मांसभक्षिणा । ५ चन्द्रात् । ६ विश्वक्षयपापपरिहारत । ७ रणत्यागात् । ८ देवेषु । ९ मेघगर्जनगभीरया । १० उदासीनो भवति । ११ वितर्क्य । १२ बलवान् अस्मि । १३ पर्वतमर्दनम् । १४ अनम्रीभूते । १५ सैन्ये ।

अहो ! अधृष्यो मूर्त्याऽसौ, दृढावष्टम्भगर्भया । इत्यन्तर्विस्मयजुषस्ते तमेवं बभाषिरे ॥ ४७६ ॥
चिरं जय चिरं नन्द, वृषभस्वामिनन्दन ! । जगन्नेत्रचकोराणामानन्दैकनिशाकर ! ॥ ४७७ ॥
अम्भोधिरिव मर्यादां, नोल्लङ्घयसि जातुचित् । बिभेष्यवर्णवादाच्च, समरादिव कातरः ॥ ४७८ ॥
निजसम्पत्स्वनुत्सेकी, परसम्पत्स्वमत्सरी । विनेता दुर्विनीतानां, विनीतश्च गुरुष्वपि ॥ ४७९ ॥
विश्वाभयकृतो देवस्याऽनुरूपस्त्वमात्मजः । उच्छेदायाऽपरस्याऽपि, नाभ्ययुङ्क्था मनागपि ॥ ४८० ॥
तत् किं ते भ्रातरि गुरावारम्भोऽयं भयङ्करः ? । त्वत्तः सम्भाव्यते नैष, पञ्चत्वममृतादिव ॥ ४८१ ॥
इयत्यपि गते कार्यं, न विनष्टं मनागपि । तद्रणारम्भसंरम्भं, खलमैत्रीमिव त्यज ॥ ४८२ ॥
सम्परायरयाद् वीरान्, निवारय नरेश्वर ! । निजाज्ञया प्रसरतो, मन्त्रेणेव महोरगान् ॥ ४८३ ॥
भरते भ्रातरि गुरौ, गत्वा भव वशंवदः । एवं च श्लाघ्यसेऽत्यन्तं, शक्तो विनयभागिति ॥ ४८४ ॥
तदिदं भरतक्षेत्रं, षट्खण्डं भरतार्जितम् । भुङ्क्ष्व स्वोपार्जितमिव, युवयोर्हि किमन्तरम् ? ॥ ४८५ ॥
इत्युदित्वा विरतेषु, तेषु वृष्ट्वा घनेष्विव । एवं बाहुबलिः स्माऽऽह, स्मित्वा गम्भीरया गिरा ॥ ४८६ ॥
आवयोर्विग्रहे हेतुमज्ञात्वा परमार्थतः । निजस्वच्छतया यूयमेवं वदथ हे सुराः ! ॥ ४८७ ॥
तातभक्ताः सदा यूयमावां तातस्य चाऽऽत्मजौ । इति सम्बन्धतोऽप्युक्तं, युक्तं युष्माभिरीदृशम् ॥ ४८८ ॥
पुरा हि दीक्षासमये, तातोऽर्थिभ्यो हिरण्यवत् । विभज्य देशानस्मभ्यमदत्त भरताय च ॥ ४८९ ॥
वयं सर्वेऽपि तिष्ठामः, सन्तुष्टाः स्वस्वनीवृता । धनमात्रकृते हन्त !, परद्रोहं करोति कः ? ॥ ४९० ॥
असन्तुष्टस्तु भरतो, जग्रसे भरतोदधौ । मत्स्यानिव महामत्स्यो, राज्यान्यखिलभूभुजाम् ॥ ४९१ ॥
राज्यैस्तैरप्यसन्तुष्ट, आद्यून इव भोजनैः । आचिच्छेद स राज्यानि, स्वेषामवरजन्मनाम् ॥ ४९२ ॥
पितृदत्तानि राज्यानि, भ्रातृणामाच्छिनत्ति यः । गुरुत्वमात्मनस्तेन, स्वयमेव निवारितम् ॥ ४९३ ॥
वयोमात्रेण न गुरुर्गुरुर्गुरुवदाचरन् । गुरुत्वं दर्शितं तेन, भ्रातृनिर्वासनादिदम् ॥ ४९४ ॥
भ्रान्तेनाऽयमियत्कालं, दृष्टो गुरुधिया मया । स्वर्णबुद्ध्या पित्तलवन्मणिबुद्ध्या च काचवत् ॥ ४९५ ॥
पित्रा वंश्येन वाऽन्यस्याऽप्युर्वी दत्तां निरागसः । न हरेदल्पराज्योऽपि, किं पुनर्भरतेश्वरः ? ॥ ४९६ ॥
हृत्वाऽनुजानां राज्यानि, नूनमेष न लज्जितः । जितकाशी राज्यकृते, मामप्याह्वयते यतः ॥ ४९७ ॥
जित्वाऽसौ भरतं सर्वं, रयादास्फलितो मयि । तीर्त्वाऽम्भोधिं पोत इव, दन्ते तटमहीभृतः ॥ ४९८ ॥
ज्ञात्वा लुब्धममर्यादं, क्रव्यादमिव निर्घृणम् । अमुं ममाऽनुजन्मानोऽप्यभजन् लज्जया नहि ॥ ४९९ ॥
तस्य केन गुणेनाऽहं, भवाम्यद्य वशंवदः ? । ब्रूत माध्यस्थ्यमास्थाय, सभासद इवाऽमराः ! ॥ ५०० ॥
अथ स्वविक्रमेणाऽयं, मां करोति वशंवदम् । तत् करोत्वेष पन्था हि, क्षत्रियाणां वशंवदः ॥ ५०१ ॥
एवं स्थितेऽपि ह्यालोच्य, वलित्वा हन्त ! याति चेत् । एष क्षेमेण तद् यातु, लुब्धोऽहं न ह्यसाविव ॥ ५०२ ॥
तद्दत्तं भरतं सर्वं, भुञ्जेऽहमिति किं भवेत् ? । केसरी केनचिद् दत्तं, किमश्नाति कदाचन ? ॥ ५०३ ॥
भरतं गृह्णतस्तस्य, वर्षषष्टिसहस्र्यगात् । इदं यद्यजिघृक्षिष्यमग्रहीष्यं तदाऽपि हि ॥ ५०४ ॥
कालेनैतावता तस्य, जातं भरतवैभवम् । तद्वैनस्य धनमिव, कथं भ्राता हराम्यहम् ? ॥ ५०५ ॥
करीव जातीकवलेनाऽमुना वैभवेन चेत् । अन्धम्भविष्णुर्भरतः, सुखं न स्यातुमीश्वरः ॥ ५०६ ॥
तदेतद् भरतक्षेत्रवैभवं भरतेशितुः । हृतमेव मया वित्थोपेक्षितं ह्यनपेक्षया ॥ ५०७ ॥
मह्यमर्पयितुं कोशं, हस्त्यश्वादि यशोऽपि च । प्रतिभूभिरिवाऽऽनीतोऽमात्यैः स्वसदृशैरसौ ॥ ५०८ ॥

---

१ धर्षितुमशक्य. । २ गर्वरहित. । ३ नाभियोगमकुरुथा. । ४ मरणम् । ५ युद्धवेगात् । ६ निजहृदयनैर्मल्येन । ७ स्वस्वदेशेन । ८ भरतक्षेत्रसमुद्रे । ९ उदरपूरक । १० लघुभ्रातृणाम् । ११ बन्धुनिष्कासनात् । १२ राक्षसम् । १३ निर्दयम् । १४ कृपणस्य । १५ जानीथ । १६ प्रतिनिधिभिः ।

युद्धान्निषेधतैनं तद्, यद्यस्य हितकाङ्क्षिणः । अयुध्यमानेनाऽन्येनाऽप्यहं युध्ये न जातुचित् ॥ ५०९ ॥
ऊर्जितं तद् वचस्तस्य, पर्जन्यस्येव गर्जितम् । आकर्ण्य विस्मयोत्कर्णास्ते भूयोऽप्येवमभ्यधुः ॥ ५१० ॥
इतो जल्पन् युधे हेतुं, चक्री चक्राप्रवेशनम् । न शक्योऽनुत्तरीकृत्य, निरोद्धुं गुरुणाऽपि हि ॥ ५११ ॥
युध्यमानेन युध्येऽहमिति जल्पन् भवानपि । युद्धान्निरोद्धुं नियतं, शक्रेणाऽपि न शक्यते ॥ ५१२ ॥
द्वयोरप्यृषभस्वामिदृढसंसर्गशालिनोः । द्वयोरपि महाबुद्ध्योर्द्वयोरपि विवेकिनोः ॥ ५१३ ॥
द्वयोरपि जगत्त्रात्रोर्द्वयोरपि दयावतोः । भाग्यक्षयेण जगतां, युद्धोत्पात उपस्थितः ॥ ५१४ ॥ [युग्मम्]
तथापि प्रार्थ्यसे वीर!, प्रार्थनाकल्पपादप! । उत्तमेनैव युद्धेन, युध्येथा माऽधमेन तु ॥ ५१५ ॥
अधमेन हि युद्धेन, युवयोरुग्रतेजसोः । भूयिष्ठलोकप्रलयादकाले प्रलयो भवेत् ॥ ५१६ ॥
दृष्टियुद्धादिभिर्युद्धैर्योद्धव्यं साधु तेषु हि । आत्मनो मानसिद्धिः स्याल्लोकानां प्रलयो न च ॥ ५१७ ॥
आमेति तस्मिन् वदति, नातिदूरे दिवौकसः । तस्थुर्द्रष्टुं तयोर्युद्धं, नगर्या नागरा इव ॥ ५१८ ॥
अथाऽऽज्ञया बाहुबलेः, प्रतीहारो गजस्थितः । गर्जन् गज इवोर्जस्वि, जगादेति स्वसैनिकान् ॥५१९॥
भो भोः ! समस्तराजन्याश्चिरं चिन्तयतां हि वः । उपस्थितं स्वामिकार्यमभीष्टं पुत्रलाभवत् ॥ ५२० ॥
परं वः स्वल्पपुण्यत्वाद्, देवैर्देवोऽयमर्थितः । भरतेन सह द्वन्द्वयुद्धहेतोर्महाभुजः ॥ ५२१ ॥
स्वतोऽपि द्वन्द्वयुद्धेच्छुः, किं पुनः प्रार्थितः सुरैः ? । स्वामी स्वा[2]राजतुल्यौजाः, सम[3]राद् वो निषेधति ॥५२२॥
हस्तिमल्ल इवैकाङ्गमल्लो युष्माभिरेष तत् । युध्यमानः प्रेक्षणीयस्तटस्थैरमरैरिव ॥ ५२३ ॥
वालयित्वा रथानश्वान्, कुञ्जरांश्च महौजसः । अपक्रामत तद् यूयं, वक्रीभूता इव ग्रहाः ॥ ५२४ ॥
खड्गान् क्षिपत कोशेषु, करण्डेष्विव पन्नगान् । कुन्तान् केतूनिवोदस्तान्, मो[6]चकान्तर्विमुञ्चत ॥ ५२५ ॥
मुद्गरान् न्यञ्चतोदस्तान्, हस्तानिव महाद्विपाः । उत्तारयत कोदण्डान्मौर्वीं भालादिव भ्रुवम् ॥ ५२६ ॥
भूयोऽपि बाणधौ बाणं, निधत्ताऽर्थं निधानवत् । शल्यानि संवृणुत च, विद्युतो वारिदा इव ॥ ५२७ ॥
प्रतीहारगिरा वज्रनिर्घोषेणेव घूर्णिताः । सैनिका बाहुबलिनश्चेतसेवं व्यचिन्तयन् ॥ ५२८ ॥
अहो! रणाद् भाविनोऽपि, भीतैर्वाणिजकैरिव । भरतेश्वरसैन्येभ्यो, लब्धोत्कोचैरिवोच्चकैः ॥ ५२९ ॥
प्राग्जन्मवैरिभिरिवाऽकस्मादस्माकमागतैः । हा प्रभुं प्रार्थ्य विबुधै, रुद्धो युद्धोत्सवोऽधुना ॥५३०॥ [युग्मम्]
अग्रतो भाजनमिव, भोजनाय निषेदुषाम् । पर्यङ्कतः सूनुरिव, लालनायोपसर्पताम् ॥ ५३१ ॥
आकर्षणीरज्जुरिव, कूपान्निर्गच्छतामहो ! । अहारि दैवेनाऽस्माकमागतोऽपि रणोत्सवः ॥५३२॥ [युग्मम्]
अन्यो भरततुल्यः कः, प्रतिपक्षो भविष्यति । स्वामिनो येन सङ्ग्रामे, भविष्यामोऽनृणा वयम् ॥५३३॥
मुधोपादायि दायादैरिव स्तेयकैरिव । सौवासिनेयैरिव चाऽस्माभिर्बाहुबलेर्धनम् ॥ ५३४ ॥
*नूनं गतं मुधा बाहुदण्डवीर्यमिदं च नः । अरण्यभववृक्षाणामिव प्रसवसौरभम् ॥ ५३५ ॥
क्लीबैः स्त्रीणामिवाऽस्त्राणामस्माभिः सङ्ग्रहो मुधा । व्यधायि शस्त्राभ्यासश्च, शास्त्राभ्यासः शुकैरिव ॥५३६॥
इदं चाऽप्यूयताऽस्माभिः, पादात्म्यपि निष्फलम् । कामशास्त्रपरिज्ञानमिव तापसदारकैः ॥ ५३७ ॥
मुधैव कारिता माराभ्यासमेते मतङ्गजाः । वाजिनश्च श्रमजयमस्माभिर्हतबुद्धिभिः ॥ ५३८ ॥
मुधा गर्जितमस्माभिर्वारिदैरिव शारदैः । महिषीभिरिवाऽस्माभिर्विकटं च कटाक्षितम् ॥ ५३९ ॥
मुधा सन्नद्धमस्माभिः, सामग्रीदर्शकैरिव । तच्चाऽहङ्कारगर्भत्वमपूर्णे युद्ध[13]दोहदे ॥ ५४० ॥
एवं विचिन्तयन्तस्ते, विषादविषगर्भिताः । सस्त्कारारः सफूत्कारा, इव सर्पा अपासृपन् ॥ ५४१ ॥

---

१ मेघस्य । २ इन्द्रतुल्यपराक्रमः । ३ युद्धात् । ४ हस्तिश्रेष्ठ. । ५ वक्रगतियुक्ताः । ६ कोशान्त. । ७ नीचै. कुरुत । ८ ललाटात् । ९ 'लाच' इति लोके । १० ऋणरहिता. । ११ चौरैः । १२ चिरपितृगृहवासिनीस्त्रीपुत्रैः । * मन्ये ग° आ, स २ ॥ १३ युद्धमनोरथे ।

तत्कालं भरतेशोऽपि, क्षत्रव्रतमहाधनः । स्वामपासारयत् सेनां, वेलामिव महार्णवः ॥ ५४२ ॥
चक्रिणा सैनिकाः स्वेऽपसार्यमाणा महौजसा । एवमालोचयामासुर्वृन्दीभूय पदे पदे ॥ ५४३ ॥
स्वामिना कस्य मन्त्रेण, मन्त्रिव्याजेन वैरिणः । द्विबाहुमात्रकेणेव, द्वन्द्वयुद्धममन्यत ? ॥ ५४४ ॥
स्वामिना यो हि सङ्ग्रामो, यद् भोजनमुदश्विता । पर्याप्तमेव तदहो!, किं कृत्यं नस्ततः परम् ? ॥ ५४५ ॥
षट्खण्डभरतक्षेत्रभूभुजां रणकर्मसु । कोऽपि नः किमपक्रान्तो, यन्निषिध्यामहे रणात् ? ॥ ५४६ ॥
युक्तं भृत्येषु नष्टेषु, विजितेषु हतेषु वा । युद्धं भर्त्तुर्नान्यथा तु, विचित्रा हि रणे गतिः ॥ ५४७ ॥
*स्वामिनः संशयं युद्धे, जातु शङ्कामहे न हि । विनैकं बाहुबलिनं, प्रतिपक्षो[2] भवेद् यदि ॥ ५४८ ॥
उदग्रबाहुना बाहुबलिना सममाहवे । विजये संशयः पाकशासनस्या[3]ऽपि केऽपरे ? ॥ ५४९ ॥
महाकल्लोलिनीपूरस्येव दुस्सहरंहसः[4] । तस्य प्रथमतोऽप्याजौ[5], स्थातुं भर्त्तुर्न युज्यते ॥ ५५० ॥
अस्माभिर्योधिते पूर्वं, भर्तुस्तत्रोचितो रणः । पूर्वमश्वदमैर्दान्ते, वाजिनीवाऽधिरोहणम् ॥ ५५१ ॥
अन्योऽन्यं सैनिकानेवं, गृणतः प्रेक्ष्य चक्रभृत् । भावज्ञ इङ्गिताकारैः, समाहूयेत्यभाषत ॥ ५५२ ॥
तमोनिर्दलने भानोर्यद्वदग्रेसराः कराः । द्विषदायोधने तद्वद्, यूयमग्रेसरा मम ॥ ५५३ ॥
युष्मासु सत्सु योधिषु, न मां कोऽप्याययौ रिपुः । परिखायामगाधायामिव वप्रतटं द्विपः ॥ ५५४ ॥
अदृष्टपूर्विणो युद्धं, ततो मे यूयमीदृशम् । आशङ्कध्वे मुधा भक्तिर्ह्यपदेऽपीक्षते भयम् ॥ ५५५ ॥
सर्वे कुरुध्वं सम्भूय, दोर्बलालोकनं मम । शङ्का नश्यति वो येनाऽगदेनेव गदः क्षणात् ॥ ५५६ ॥
इत्युदित्वा क्षणेनाऽपि, चक्री खनकपूरुषैः । अतिविस्तीर्णगम्भीरं, गर्तमेकमखानयत् ॥ ५५७ ॥
तीरे दक्षिणपाथोधेरिव सह्य[6]महीधरः । अवट[7]स्य तटे तस्योपाविशद् भरतेश्वरः ॥ ५५८ ॥
वामे स दोर्ष्णि[8] निबिडाः, शृङ्खलाः प्रतिशृङ्खलाः । अबन्धयल्लम्बमाना, वटवृक्षे जटा इव ॥ ५५९ ॥
ताभिः सहस्रसङ्ख्याभिः, सहस्रांशुरिवाऽंशुभिः । महाद्रुरिव वल्लीभिश्चकासामास चक्रभृत् ॥ ५६० ॥
सोऽथ राज्ञ उवाचैवं, यूयं सबलवाहनाः । महाशकटवद् गावो[9], मामाकर्षत निर्भयम् ॥ ५६१ ॥
सर्वे सर्वौजसा कृष्ट्वा, मां गर्ते पातयन्त्विह । मद्दोर्बलपरीक्षार्थं, स्वाम्यवज्ञाछलं न वः ॥ ५६२ ॥
दुःस्वप्नोऽप्ययमस्माभिर्दृष्टस्तत् प्रतिहन्यताम् । स हि मोघीभवेदेव, चरितार्थीकृतः स्वयम् ॥ ५६३ ॥
भूयो भूयश्चक्रिणैवमादिष्टास्ते ससैनिकाः । कथञ्चित् प्रत्यपद्यन्त, स्वाम्याज्ञा हि बलीयसी ॥ ५६४ ॥
चक्रुषः शृङ्खलाजालं, सैन्याश्चक्रिभुजस्य ते । नेत्रीभूत[10]महिं मन्थगिरे[11]रिव सुरासुराः ॥ ५६५ ॥
गाढलग्नाः प्रलम्बासु, चक्रिदोःशृङ्खलासु ते । उत्तुङ्गशाखिशाखाग्रेष्विव शाखामृगा[12] बभुः ॥ ५६६ ॥
इमानिवाऽद्रिं भिन्दानान्, कर्षतः स्वं च सैनिकान् । कौतुकप्रेक्षणायोपेक्षाञ्चक्रे चक्रभृत् स्वयम् ॥ ५६७ ॥
हृद्यङ्गरागं चक्रेऽथ, चक्री तेनैव पाणिना । मालाबद्धघटीमालान्यायात् ते तु सहाऽपतन् ॥ ५६८ ॥
निरन्तरं लम्बमानैः, सैनिकैश्चक्रिणो भुजः । रराज खर्जूरतरुशाखा खर्जूरकैरिव ॥ ५६९ ॥
हृष्यन्तः स्वामिनः स्थाम्ना[13], सैन्यास्तद्बाहुशृङ्खलाः । प्राकृतामिव दुःशङ्कामुज्झाञ्चक्रुः क्षणादपि ॥ ५७० ॥
चक्रभृत् कुञ्जरारूढस्तदेव समराजिरम् । जग्राह प्राक्तनं भूयोऽप्युद्ग्राहमिव गायनः ॥ ५७१ ॥
उभयोः सैन्ययोर्मध्ये, विपुलं विपुला[14]तलम् । गङ्गायमुनयोरन्तर्वेदिदेश इवाऽऽबभौ ॥ ५७२ ॥
जगत्संहाररक्षातो, मुदिता मरुत[15]स्ततः । आयुक्ता इव शनकैस्तत्रोर्व्यामहरन् रजः ॥ ५७३ ॥
गन्धाम्बुवृष्ट्या समवसरणोर्विमिवाऽभितः । तां मेदिनीमभ्यषिञ्चन्नुचितज्ञा दिवौकसः ॥ ५७४ ॥

---

१ तर्केण । * अयं श्लोकः ख पुस्तके नोपलभ्यते ॥ २ शत्रुः । ३ इन्द्रस्य । ४ दुस्सहवेगस्य । ५ युद्धे । ६ एतदाख्यः पर्वतः । ७ गर्तस्य । ८ भुजे । ९ वृषभाः । १० मन्थनरज्जुभूतम् । ११ मन्दराचलस्य । १२ कपयः । १३ बलेन । १४ पृथ्वीतलम् । १५ देवाः ।

मान्त्रिका मण्डलावन्यामिव तत्र रणावनौ । उन्मेषवन्त्य[1]निमिषाः[2], कुसुमानि विचिक्षिपुः ॥ ५७५ ॥
कुञ्जरादवतीर्याऽथ, तावुभौ राजकुञ्जरौ । कुञ्जराविव गर्जन्तौ, प्रविष्टौ समरावनिम् ॥ ५७६ ॥
उभावपि महौजस्कौ, सर्पन्तौ लीलयाऽपि हि । पदे पदेऽरोपयतां, कूर्मेन्द्रं प्राणसंशये ॥ ५७७ ॥
दृष्टियुद्धेन योद्धव्यं, प्रतिज्ञायेति तस्थतुः । सम्मुखावनिमेषाक्षौ, शक्रेशानाविवाऽपरौ ॥ ५७८ ॥
सम्मुखौ मुखमन्योऽन्यस्यैक्षेतामरुणेक्षणौ । उभयत्र स्थितार्केन्दुसायाह्नगगनश्रियौ ॥ ५७९ ॥
उभौ मिथो निध्यायन्तौ, ध्यायन्ताविव योगिनौ । चिरकालं वितस्थाते, तौ निश्चलविलोचनौ ॥५८०॥
दिवाकरकराक्रान्तनीलोत्पलवदीक्षणे । ज्येष्ठस्य ऋषभस्वामिनन्दनस्य न्यमीलताम् ॥ ५८१ ॥
कीर्त्तेर्महत्या भरतषट्खण्डजयजन्मनः । वारीवाऽस्रजलव्याजाददातां चक्रिणोऽक्षिणी ॥ ५८२ ॥
तदा शिरांसि धुन्वानाः, प्रत्यूषे पादपा इव । विदधुर्बाहुबलिनि, पुष्पवृष्टिं दिवौकसः ॥ ५८३ ॥
विजये बाहुबलिनो, वीरैः सोमप्रभादिभिः । हर्षकोलाहलश्चक्रे, सूर्यस्येवोदये खगैः ॥ ५८४ ॥
जयतूर्याण्यवाद्यन्त, राज्ञो बाहुबलेर्बलैः । तत्कालं कीर्तिनर्त्तक्या, नृत्तारम्भ इवोद्यते ॥ ५८५ ॥
अभूवन् भरतस्याऽपि, सैन्या मन्दायितौजसः । मूर्च्छिता इव संसुप्ता, इव रोगातुरा इव ॥ ५८६ ॥
ते विषादप्रमोदाभ्यामयुज्येतामुभे बले । अन्धकारप्रकाशाभ्यां, मेरुपार्श्वाविवाऽधिकम् ॥ ५८७ ॥
विजितं काकतालीयन्यायेनेति स मा वदः । वाग्युद्धेनाऽपि युध्यस्वेत्यवोचच्चक्रिणं नृपः ॥ ५८८ ॥
फणीव चरणस्पृष्टः, सामर्षश्चक्रवर्त्यपि । जितकासिन् ! भवत्वेवमित्यभाषत भूपतिम् ॥ ५८९ ॥
ईशानोक्षेव[3] निनदं, शक्रेभ[4] इव बृंहितम् । स्तनितं वारिद इवोच्चैः क्ष्वेडां भरतोऽकरोत् ॥ ५९० ॥
रणेक्षकाणां देवानां, विमानान् पातयन्निव । नभस्तो ग्रहनक्षत्रतारकाः स्रंसयन्निव ॥ ५९१ ॥
कुलाचलानामत्युच्चैः, शृङ्गाणि चलयन्निव । समन्ताज्जलराशीनां, जलान्युच्छालयन्निव ॥ ५९२ ॥
व्यानशे प्रसरंस्तस्य, क्ष्वेडानादः स रोदसी[5] । महास्रवन्त्याः[6] परितः, पूरवारीव रोधसी[7] ॥ ५९३ ॥
[ त्रिभिर्विशेषकम् ]
रश्मिं[8] नाऽजीगणन् रथ्या[9], गुर्वाज्ञामिव दुर्धियः । सृणीन्[10] नाऽमानयन् नागाः, पिशुना इव सद्गिरम् ॥५९४॥
अश्वा नाऽज्ञासिषुर्वल्गां, कटुत्वं श्लेष्मला[11] इव । मया[12] नाऽगणयन् नासारज्जुं लज्जां विटा[13] इव ॥ ५९५ ॥
न वेसराः कशाघातं, भूताविष्टा इवाऽविदन् । त्रस्यन्तस्तेन नादेन, न केऽपि स्थैर्यमादधुः ॥ ५९६ ॥
अथाऽऽपतत्पक्षिराज[14]पक्षनिर्घोषबुद्धितः । पातालतोऽपि पातालं, विविक्षुभिरिवोरगैः ॥ ५९७ ॥
अन्तःप्रविष्टमन्थाद्रिमन्थनध्वानशङ्कया । मध्येजलधि यादोभिस्त्रस्यद्भिः सर्वतोऽपि च ॥ ५९८ ॥
भूयो जम्भारि[15]निर्मुक्तदम्भोलिध्वनितभ्रमात् । क्षयं स्वस्याऽऽशङ्कमानैः, कम्पमानैः कुलाचलैः ॥ ५९९ ॥
कल्पान्तपुष्करावर्तमुक्तविद्युद्ध्वनिभ्रमात् । लुठद्भिरवनीपीठे, मध्यलोकनिवासिभिः ॥ ६०० ॥
अकाण्डागतदैत्यावस्कन्दकोलाहलभ्रमात् । आकुलैश्चाऽमरकुलैः, श्रूयमाणोऽतिदुःश्रवः ॥ ६०१ ॥
लोकनालिस्पर्द्धयेव, वर्धमानोऽधरोत्तरम् । विदधे बाहुबलिना, सिंहनादोऽतिभैरवः ॥ ६०२ ॥
[ षड्भिः कुलकम् ]
भूयो व्यधत्त भरतः, सिंहनादं महाबलः । वैमानिकानां वनितास्त्रासयन्तं मृगीरिव ॥ ६०३ ॥
एवं क्रमेण चक्राते, चक्रिभूपौ महाध्वनिम् । जगतो मध्यमस्याऽस्य, क्रीडया भीषकाविव ॥ ६०४ ॥
हस्तो मतङ्गजस्येव, शरीरं दर्वीश्रुते[16]रिव । अहीयत[17]तमां शब्दः, क्रमेण भरतेशितुः ॥ ६०५ ॥

१ विकसितानि । २ देवा । ३ ईशानेन्द्रस्य वृषभ इव । ४ ऐरावत इव । ५ द्यावाभूमी । ६ महानद्याः । ७ तटे । ८ प्रग्रहान् । ९ रथयोजिताश्वा । १० अङ्कुशान् । ११ श्लेष्मरोगिण । १२ उष्ट्रा. । १३ जारा. । १४ गरुड. । १५ इन्द्रः । १६ सर्पस्य । १७ अतिशयेन हीनोऽभवत् ।

सिंहनादो बाहुबलेर्ववृधे त्वधिकाधिकम् । प्रवाहः सरित इव, सज्जनस्येव सौहृदम् ॥ ६०६ ॥
शास्त्रीयवाग्युद्धेऽप्येवं, वादिना प्रतिवाद्यसौ । वीरेण बाहुबलिना, विजिग्ये भरतेश्वरः ॥ ६०७ ॥

अथ तौ बाहुयुद्धार्थमुभावपि हि बान्धवौ । बबन्धतुः परिकरं, बद्धकक्षद्विपोपमौ ॥ ६०८ ॥
अथ बाहुबलेर्गर्जन्नुद्वेल इव वारिधिः । स्वर्णदण्डधरः स्माऽऽह, प्रतीहाराग्रणीरिति ॥ ६०९ ॥
वज्रकीलानिव शैलानवष्टभ्य विशेषतः । आस्थाय स्थाम[1] चाऽशेषमपि पृथ्वि! स्थिरीभव ॥ ६१० ॥
परितः पूरयित्वा च, कुम्भयित्वा[2] च मारुतम् । हे नागराज! नगवद्, दृढीभूय धरां धर ॥ ६११ ॥
लुठित्वा वारिधेः पङ्के, विहायाऽग्रेतनं श्रमम् । पुनर्नवीभूय महाक्रोड[3]! क्रोडीकुरु[4] क्षितिम् ॥ ६१२ ॥
वज्रमानिन्! निजाङ्गानि, सङ्कोच्य परितोऽपि हि । स्वपृष्ठं कमठप्रष्ठ[5]!, द्रढयित्वा महीं वह ॥ ६१३ ॥
प्रमादतो मदतो वा, निद्रां मा धत्त पूर्ववत् । सर्वात्मना सावधाना, वसुधां धत्त दिग्गजाः! ॥ ६१४ ॥
वज्रसारो बाहुबलिर्वज्रसारेण चक्रिणा । यदसौ मल्लयुद्धेन, योद्धुमुत्तिष्ठतेऽधुना ॥ ६१५ ॥

महामल्लौ तडिद्दण्डताडिताद्रिरवोपमम् । विदधानौ करास्फोटमाह्वासातां मिथोऽथ तौ ॥ ६१६ ॥
तौ सलीलपदन्यासं, चेलतुश्चलकुण्डलौ । सार्केन्दू धातकीखण्डात्, क्षुद्रमेरू इवाऽऽगतौ ॥ ६१७ ॥
तावन्योऽन्यं कराभ्यां चाऽऽस्फालयामासतुः करौ । नदन्तौ बलवद्दन्तौ, दन्ताभ्यां दन्तिनाविव ॥ ६१८ ॥
अयुज्येतां क्षणेनाऽपि, व्ययुज्येतां क्षणेन च । तावासन्नमहावृक्षाविवोद्दण्डानिलेरितौ ॥ ६१९ ॥
उत्पेततुः क्षणेनाऽपि, क्षणेनाऽपि निपेततुः । वीरौ तौ दुर्दिनोन्मत्तमहाम्भोधितरङ्गवत् ॥ ६२० ॥
अथ स्नेहादिवाऽमर्षाद्, धावित्वा तावुभावपि । अङ्गेनाऽङ्गं पीडयन्तौ, सस्वजाते[6] महाभुजौ ॥ ६२१ ॥
क्षणादधः क्षणादूर्ध्वं, कदाचित् कश्चिदप्यभूत् । नियुद्धविज्ञानवशात्, प्राणी कर्मवशादिव ॥ ६२२ ॥
उपर्यसावधोऽसावित्यज्ञायेतां जनैर्न तौ । जलान्तर्मत्स्यवद् वेगान्मुहुर्विपरिवर्तिनौ ॥ ६२३ ॥
चक्रतुर्बन्धविज्ञानं, महाही इव तौ मिथः । निरासतुश्च सद्योऽपि, चपलौ प्लवंगाविव[7] ॥ ६२४ ॥
मुहुर्महीलुठनतस्तावुभौ धूलिधूसरौ । बभासाते प्राप्तधूलीमदौ मदकलाविव[8] ॥ ६२५ ॥
असहिष्णुस्तयोर्भारं, शैलयोरिव सर्पतोः । पादनिर्घातनिर्घोषादाररराटेव[9] मेदिनी ॥ ६२६ ॥
अथ बाहुबलिः क्रुद्धः, करेणैकेन चक्रिणम् । शरभः[10] कुञ्जरमिवोदग्रहीदुग्रविक्रमः ॥ ६२७ ॥
व्योमन्युल्लालयामास, स तं रूपमिव[11] द्विपः । अहो! निरवधिः सर्गो, बलिनो बलिनामपि ॥ ६२८ ॥
चापादिषुरिवोन्मुक्तः, पाषाण इव यन्त्रतः । तारापथपथे[12] दूरं, जगाम भरतेश्वरः ॥ ६२९ ॥
भरतेशादापततः, शक्रमुक्तात् पवेरिव[13] । पलायाञ्चक्रिरे सर्वे, खेचराः समरेक्षिणः ॥ ६३० ॥
हाहारवो महान् जज्ञे, सेनयोरुभयोरपि । कस्य दुःखाकरो न स्यान्महतां ह्यापदागमः? ॥ ६३१ ॥
धिग् मे बलमिदं बाह्वोर्धिग् धिग् राभसिकं[14] च माम् । एतत् कर्मोपेक्षकांश्च, धिग् राज्यद्वयमन्त्रिणः ॥ ६३२ ॥
किं वा विगर्हितैरेभिर्यावदद्याऽपि मेऽग्रजः । पतित्वा मेदिनीपृष्ठे, कणशो न विशीर्यते ॥ ६३३ ॥
तावत् पतन्तं गगनात्, प्रतीच्छामीति चिन्तयन् । तल्पकल्पौ[15] भुजौ तस्याऽधो दधौ बाहुबल्यपि ॥ ६३४ ॥
[ त्रिभिर्विशेषकम् ]

ऊर्ध्वबाहुव्रतीवोर्ध्वबाहुर्बाहुबलिः क्षणम् । तस्थौ दिनकरालोकव्रतीव च तदोन्मुखः ॥ ६३५ ॥
पादाग्रप्राणतस्तिष्ठन्नुत्पिपतिषुरिव[16] स क्षणात् । निपतन्तं प्रतीयेषाऽग्रजं[17] गेन्दुकलीलया[18] ॥ ६३६ ॥
भरतोत्क्षेपणोद्भूतं, विषादं द्रागबाधत । चम्वोस्तद्रक्षणाद्धर्षं, उत्सर्गमपवादवत् ॥ ६३७ ॥

---

१ बलम् । २ स्तम्भयित्वा । ३ हे महावराह । ४ मध्येकुरु । ५ हे कूर्मश्रेष्ठ ! ६ आलिङ्गितवन्तौ । ७ वानरौ । ८ हस्तिनौ । ९ आचुक्रोश । १० अष्टापदः । ११ पशुम् । १२ गगनमार्गे । १३ वज्रात् । १४ साहसिकम् । १५ शय्यातुल्यौ । १६ उत्पतितुमिच्छुः । १७ जग्राह । १८ कन्दुकलीलया ।

लब्ध्वार्षभे[1]र्विवेकेन, भ्रातृरक्षणजन्मना । विद्या शीलगुणेनेव, पौरुषं तुष्टुवे जनैः ॥ ६३८ ॥
उपरिष्टाद् बाहुबलेः, पुष्पवृष्टिं व्यधुः सुराः । तादृग्वीरव्रतजुषस्तस्येदमथवा कियत् ? ॥ ६३९ ॥
तदा वैलक्ष्यकोपाभ्यां, युगपद् भरतेश्वरः । धूमध्वज[2] इव धूमज्वालाभ्यां समयुज्यत ॥ ६४० ॥
अथ बाहुबलिर्लज्जानमद्वदनपङ्कजः । वैलक्ष्यं ज्यायसो[3] हर्तुमित्युवाच सगद्गदम् ॥ ६४१ ॥
मा विषीद जगन्नाथ !, महावीर्य ! महाभुज ! । दैवात् कदाचित् केनाऽपि, विजय्यपि विजीयते ॥६४२॥
एतावता नाऽसि जितो, विजयी चाऽसि नेयता । घुणाक्षरन्यायभवं, मन्येऽद्याप्यात्मनो जयम् ॥६४३॥
इयत्यपि त्वमेवैको, वीरोऽसि भुवनेश्वर ! । अमरैर्मथितोऽप्यब्धिरब्धिरेव न दीर्घिका[4] ॥ ६४४ ॥
फालच्युत इव द्वीपी, षट्खण्डभरतेश्वर ! । किं तिष्ठसि ? समुत्तिष्ठोत्तिष्ठस्व रणकर्मणे ॥ ६४५ ॥
बभाषे भरतोऽप्येवं, निजदोषस्य मार्जनम् । करिष्यत्येव दोर्दण्डो, मुष्टिं प्रगुणयन्नयम् ॥ ६४६ ॥
ततो मुष्टिं समुद्यम्य, फणामिव फणीश्वरः । प्रकोपताम्रनयनोऽपेत्या[5]ऽधावत चक्रभृत् ॥ ६४७ ॥
भरतो मुष्टिना तेनाऽऽजघान नृपतेरुरः । कपाटं गोपुरस्येव, दशनेन मतङ्गजः ॥ ६४८ ॥
प्रदानवदसत्पात्रे, बधिरे कर्णजापवत् । सत्कारवच्च पिशुने[6], जलवृष्टिवदूषरे[7] ॥ ६४९ ॥
सङ्गीतवदरण्यान्यां[8], हिमान्यां[9] वह्निपातवत् । मुधाऽभूच्चक्रिणो मुष्टिप्रहारः पार्थिवोरसि ॥६५०॥ [ युग्मम् ]
असभ्यमपि किं क्रुद्ध, इत्याशङ्क्येक्षितोऽमरैः । उच्चिक्षेपोच्चकैर्मुष्टिं, सुनन्दानन्दनोऽप्यथ ॥ ६५१ ॥
मुष्टिनाऽताडयत् तेन, स चक्रिणमुरःस्थले । कुम्भस्थले महामात्रो[10]ऽयोगोलेनेव कुम्भिनम् ॥ ६५२ ॥
घातेन तेन दम्भोलिनिपातेनेव पर्वतः । पपात मूर्च्छाविधुरो, भूतले भरतेश्वरः ॥ ६५३ ॥
चकम्पे पतता तेन, भूः पत्येव कुलाङ्गना । पर्वता अप्यवेपन्त, बान्धवेनेव बान्धवाः ॥ ६५४ ॥
क्षत्रियाणां कुहेवाकः[11], कोऽयं वीरव्रताग्रहे ? । विग्रहो निग्रहान्तोऽयं, यत्र भ्रातर्यपीदृशः ॥ ६५५ ॥
न जीवेदग्रजश्चेत् तज्जीवितेन ममाऽप्यलम् । एवं मनसि कुर्वाणः, सिञ्चन् नयनवारिभिः ॥ ६५६ ॥
स्वमुत्तरीयं व्यजनीकृत्य[12] बाहुबलिस्ततः । भरतं वीजयामास, यो बन्धुर्बन्धुरेव सः ॥ ६५७ ॥
[ त्रिभिर्विशेषकम् ]
चक्री सुप्त इवोत्तस्थौ, लब्धसंज्ञः क्षणादथ । ददर्श च पुरो भृत्यमिव बाहुबलिं स्थितम् ॥ ६५८ ॥
अधोमुखौ वितस्थाते, बान्धवौ तावुभावपि । पराजयो जयश्चाऽपि, लज्जायै महतामहो ! ॥ ६५९ ॥
किञ्चित् पश्चात्पदन्यासमपचक्राम चक्रभृत् । पुंसामोजायमानानां, युयुत्सालक्षणं ह्यदः ॥ ६६० ॥
युयुत्सुः पुनरप्यार्यः, शङ्के युद्धेन केनचित् । नोज्झन्ति मानिनो मानं, यावज्जीवं मनागपि ॥ ६६१ ॥
अवर्णवादो बलवान्, भावी बाहुबलेः खलु । भ्रातृहत्याभवो मन्ये, नैवाऽन्तेऽपि विरंसति ॥ ६६२ ॥
इति सञ्चिन्तयामास, यावद् बाहुबलिः क्षणम् । तावच्चक्रधरो दण्डं, दण्डपाणि[13]रिवाऽऽददे ॥ ६६३ ॥
तेनोदस्तेन दण्डेन, चकासामास चक्रभृत् । चूलयेवाऽचलश्छायापथेनेव मरुत्पथः ॥ ६६४ ॥
अथ तं दण्डमुत्पातकेतुभ्रमविधायिनम् । नभसि भ्रमयामास, क्षणं भरतभूपतिः ॥ ६६५ ॥
पञ्चानन[14]युवा पुच्छदण्डेनेव महीतलम् । शिरस्यताडयच्चक्री, तेन दण्डेन भूपतिम् ॥ ६६६ ॥
समास्फलन्त्या सह्याद्रौ, वेलयेव महोदधेः । तन्मूर्ध्नि चक्रिणो दण्डघातेनाऽभून्महान् ध्वनिः ॥६६७॥
दण्डेनाऽचूर्णयच्चक्री, किरीटं मूर्ध्नि भूपतेः । अयोघनेनाऽय इवाऽधिकरण्या[15]मवस्थितम् ॥ ६६८ ॥
किरीटरत्नखण्डानि, निपेतुर्नृपमूर्धतः । वातान्दोलितवृक्षाग्रादिव पुष्पाणि भूतले ॥ ६६९ ॥
भूपतिस्तेन घातेन, क्षणं मुकुलितेक्षणः । तन्निर्घोषेण घोरेण, लोकश्च समजायत ॥ ६७० ॥

१ बाहुबलिनः । २ अग्नि । ३ ज्येष्ठस्य । ४ वापिका । ५ अपसृत्य । ६ मूर्खे । ७ क्षारभूमौ । ८ महति अरण्ये । ९ महति हिमे । १० अङ्कुशेन । ११ कुस्वभावः । १२ तालवृन्तीकृत्य । १३ यमराजः । १४ सिंहयुवा । १५ लोहशिलायाम् ।

उन्मील्य नयने हस्तेनाऽऽददे बाहुबल्यपि । उद्दण्डमायसं दण्डं, साङ्ग्रामिक इव द्विपः ॥ ६७१ ॥
पाटयिष्यत्यसौ किं मां?, किं माम्रुत्पाटयिष्यति? । इत्याशशङ्के स द्यावापृथिवीभ्यां यथाक्रमम् ॥६७२॥
रेजे बाहुबलेर्मुष्टौ, लोहदण्डः स आयतः । पर्वतस्याऽग्रभागस्थवामल्लूर इवोरगः ॥ ६७३ ॥
दूरतोऽप्यन्तकाह्वानसंज्ञावस्त्रमिवाऽथ तम् । भृशमुद्भ्रमयामास, दण्डं तक्षशिलापतिः ॥ ६७४ ॥
निर्दयं हृदये तेन, चक्रिणं बह्लीपतिः । ताडयामास लकुटेनेव *बीजस्य मूटकम् ॥ ६७५ ॥
तेन घातेन घटवद्, द्रढीयानपि खण्डशः । विशीर्यते स्म सहसा, सन्नाहश्चक्रवर्तिनः ॥ ६७६ ॥
निरभ्र इव मार्तण्डो, निर्धूम इव पावकः । शीर्णवर्मा चक्रवर्ती, दिद्युतेऽमर्षतोऽधिकम् ॥ ६७७ ॥
क्षणार्धं विह्वलीभूतो, नाऽचेतयत किञ्चन । भरतः सप्तममदावस्थाप्राप्त इव द्विपः ॥ ६७८ ॥
प्रियमित्रमिवाऽऽलम्ब्याऽविलम्बाद् बाहुपौरुषम् । चक्रभृद् दण्डमुद्यम्य, भूयो राज्ञेऽभ्यधावत ॥ ६७९॥
पीडयन्नधरं दन्तैर्भृकुटीभङ्गभीषणः । भरतोऽभ्रमयद् दण्डमौर्वीवर्तविडम्बिनम् ॥ ६८० ॥
मूर्ध्नि बाहुबलिं तेन, चक्रपाणिरताडयत् । तडिद्दण्डेन कल्पान्तजीमूत इव पर्वतम् ॥ ६८१ ॥
ममज्जाऽऽजानु घातेन, तेन बाहुबलिर्भुवि । लोहाधिकरणीमध्ये, वज्रोपल इवाऽऽहतः ॥ ६८२ ॥
आस्फल्य बाहुबलिनि, वज्रसारे व्यशीर्यत । स्वेन तेनाऽऽगसा भीत, इव दण्डः स भारतः ॥ ६८३ ॥
आजानु मग्नो मेदिन्यामवगाढ इवाऽचलः । निष्क्रान्तशेषः शेषाहिरिव बाहुबलिर्बभौ ॥ ६८४ ॥
अधूनयत् स मूर्धानं, घातवेदनया तया । अन्तश्चमत्कृत इव, ज्यायसो भ्रातुरोजसा ॥ ६८५ ॥
आत्माराम इव योगी, न किञ्चिदशृणोत् क्षणम् । तदा बाहुबलिस्तेन, घातेन प्राप्तवेदनः ॥ ६८६ ॥
निर्ययौ मेदिनीमध्यात्, सुनन्दानन्दनस्ततः । आरुयानकूलिनीकूलपङ्कमध्यादिव द्विपः ॥ ६८७ ॥
लाक्षारसारुणैर्दृष्टिपातैरातर्जयन्निव । स्वौ दोर्दण्डौ च दण्डं चाऽपश्यत् सोऽमर्षणाग्रणीः ॥ ६८८ ॥
दुष्प्रेक्षं तर्क्ष्कमित्राऽभीक्ष्णं तक्षशिलापतिः । ततस्तं भ्रमयामास, दण्डमेकेन पाणिना ॥ ६८९ ॥
सुनन्दासूनुना दण्डो, भ्रम्यमाणोऽतिवेगतः । राधावेधपरिभ्राम्यच्चक्रलक्ष्मीमुवाह सः ॥ ६९० ॥
कल्पान्तसागरावर्तगर्तभ्रान्तादिमत्स्यवत् । स भ्राम्यन् प्रेक्ष्यमाणोऽपि, भ्रमिं व्यधित चक्षुषाम् ॥ ६९१ ॥
उत्पतंस्तपनं कांस्यपात्रवत् स्फोटयिष्यति । भारुण्डाण्डवदक्षेशमण्डलं चूर्णयिष्यति ॥ ६९२ ॥
तारागणानामलकीफलवद् भ्रंशयिष्यति । वैमानिकविमानानि, नीडवत् पातयिष्यति ॥ ६९३ ॥
पतन् पर्वतशृङ्गाणि, नाकुवद् दलयिष्यति । महातरुनिकुञ्जानि, निष्पेक्ष्यति तृणौघवत् ॥ ६९४ ॥
अपक्वमृत्तिकागोलवच्च भेत्स्यति मेदिनीम् । हस्तादमुष्य दैवाच्चेद्, दण्ड एष पतिष्यति ॥ ६९५ ॥
इत्याशङ्काकुलैः सैन्यैः, प्रेक्ष्यमाणोऽमरैरपि । भूपतिश्चक्रिणं तेन, दण्डेन शिरसि न्यहन् ॥ ६९६ ॥
[ पञ्चभिः कुलकम् ]
तेन दण्डाभिघातेन, चक्रवर्ती महीयसा । आकण्ठं प्रविवेशोर्व्यां, मुद्गराहतकीलवत् ॥ ६९७ ॥
यथाऽस्मत्स्वामिनो दत्तं, विवरं देहि नस्तथा । इतीव पेतुर्मेदिन्यां, विषण्णाश्चक्रिसेवकाः ॥ ६९८ ॥
राहुग्रस्त इवाऽऽदित्ये, भूमग्ने चक्रवर्तिनि । तुमुलोऽभूद् भुवि महान्, नृणां दिवि दिवौकसाम् ॥६९९॥
निमीलिताक्षः श्यामास्यः, षट्खण्डभरतेश्वरः । लज्जयेव महीमध्ये, क्षणमेकमवास्थित ॥ ७०० ॥
अथैकस्य क्षणस्याऽन्ते, तेजसा सोऽतिभासुरः । निर्ययाववनीमध्यान्निशान्त इव भास्करः ॥ ७०१ ॥
सोऽथैवं चिन्तयामास, युद्धेषु निखिलेष्वपि । जितोऽहममुना द्यूतेष्विवाऽन्यद्यूतकारकः ॥ ७०२ ॥

---

१ दण्डेन । * बीजान्नमूटकम् स २, आ ॥ २ निर्मेघ. । ३ वडवानल. । ४ कल्पान्तमेघ । ५ वज्रमणि । ६ शेषनागः । ७ शुष्कनदीतटपङ्कमध्यात् । ८ नागविशेषम् । ९ सूर्यम् । १० भारण्डपक्षिण. अण्डवत् । ११ चन्द्रमण्डलम् । १२ एतदाख्यवृक्ष-फलवत् । १३ पक्षिगृहवत् । † अय श्लोक. खं पुस्तके पतित । १४ वल्मीकवत् । १५ कोलाहल. । १६ रात्र्यन्ते ।

किं स्यादस्योपयोगाय, साधितं भरतं मया ? । गोदोहकस्येव गवा, जग्धं दूर्वातृणादिकम् ॥ ७०३ ॥
एकस्मिन् भरतक्षेत्रे, युगपच्चक्रवर्तिनौ । उभावसी कोश इव, न च दृष्टौ न वा श्रुतौ ॥ ७०४ ॥
इन्द्रो विजीयते देवैश्चक्रवर्ती च पार्थिवैः । अनाकर्णितपूर्वं नश्चेदं खरविषाणवत् ॥ ७०५ ॥
अमुना विजितश्चक्रवर्ती किं न भवाम्यहम् ? । मयाऽप्यविजितो विश्वाजय्यस्तच्चक्रवर्त्यसौ ? ॥ ७०६ ॥
एवं चिन्तयतस्तस्य, चिन्तामणिविडम्बकैः । यक्षराजैः समानीय, चक्रमारोपितं करे ॥ ७०७ ॥
तत्प्रत्ययाच्चक्रिमानी, चक्रं भ्रमयति स्म सः । वात्यावर्त इवाऽम्भोजरजोमण्डलमम्बरे ॥ ७०८ ॥
कालानल इवाऽकालेऽप्यौर्वानल इवाऽपरः । वज्रानल इवाऽकस्मादुल्कापुञ्ज इवोच्चकैः ॥ ७०९ ॥
रविबिम्बमिव प्रसद्, विद्युद्गोल इव भ्रमन् । ज्वालाजालकरालं तच्चक्रं व्योमन्यलक्ष्यत ॥७१०॥ [ युग्मम् ]
भ्रम्यमाणं प्रहाराय, तच्चक्रं चक्रवर्तिना । निध्याय दध्यौ मनसि, मनस्वी बह्लीपतिः ॥ ७११ ॥
धिक् तातपुत्रमानित्वमस्य क्षत्रव्रतं च धिक् । मयि दण्डायुधे चक्रादानं यद् भरतेशितुः ॥ ७१२ ॥
समक्षं द्युसदामस्योत्तमयुद्धप्रतिश्रवम् । धिगहो ! बालकस्येव, संव्यानादानमीदृशम् ॥ ७१३ ॥
तेजोलेश्यां तपस्वीव, रुष्टश्चक्रं प्रदर्शयन् । यथैषोऽभापयद् विश्वं, मां बिभाययिषुस्तथा ॥ ७१४ ॥
निजदोर्दण्डदण्डानां, सारं विज्ञातवान् यथा । असौ तथा रथाङ्गस्याऽप्यस्य जानातु विक्रमम् ॥ ७१५ ॥
एवं चिन्तयतो बाहुबलेर्दोर्बलशालिनः । प्रैर्य सर्वौजसा चक्रं, मुमोच भरतेश्वरः ॥ ७१६ ॥
दण्डेन दलयाम्याशु, किमिदं जीर्णभाण्डवत् ? । किं वा कन्दुकवत् पश्चात्, क्षिपाम्याहत्य हेलया ? ॥७१७॥
शष्कुलीवत् किमथवा, लीलयोच्छालयामि खे ? । यदि वा मेदिनीमध्ये, न्यस्यामि शिशुनालवत् ? ॥७१८॥
गृह्णामि पाणिना किं वोच्छलच्चटकपोतवत् ? । अथाऽपहस्तयाम्याराद्, वधानर्हापराधिवत् ? ॥ ७१९ ॥
अथाऽधिष्ठायकानस्य, सहस्रं यक्षकानमून् । दलयाम्याशु दण्डेन, घरट्टेन कणानिव ? ॥ ७२० ॥
विधेयमथवा सर्वमिदं पश्चादमुष्य हि । जानामि प्रथमं तावदलङ्कर्मीणतावधिम् ॥ ७२१ ॥
एवं विमृशतस्तक्षशिलाभर्तुरुपेत्य तत् । चक्रे प्रदक्षिणां चक्रमन्तेवासी गुरोरिव ॥ ७२२ ॥
[ षड्भिः कुलकम् ]
न चक्रं चक्रिणः शक्तं, सामान्येऽपि स्वगोत्रजे । विशेषतस्तु चरमशरीरे नरि तादृशे ॥ ७२३ ॥
चक्रं चक्रभृतः पाणिं, पुनरप्यापपात तत् । वासयष्टिं खग इव, तुरङ्ग इव मन्दुराम् ॥ ७२४ ॥
विषं विषधरस्येवाऽमोघं मारणकर्मणि । इदमेवाऽस्त्रसर्वस्वमस्य नाऽन्यदतः परम् ॥ ७२५ ॥
मयि दण्डायुधे चक्रमोक्षादन्यायकारिणम् । तदेनमेष मृद्नामि, सचक्रमपि मुष्टिना ॥ ७२६ ॥
अमर्षाच्चिन्तयित्वैवं, सुनन्दानन्दनो दृढाम् । मुष्टिमुद्यम्य यमवद्, भीषणः समधावत ॥ ७२७ ॥
करीवोन्मुद्गरकरः, कृतमुष्टिकरो द्रुतम् । जगाम भरताधीशान्तिकं तक्षशिलापतिः ॥ ७२८ ॥
मर्यादोर्व्यामिवोदन्वांस्तत्र तस्थौ रयादपि । एवं च स महासत्त्वश्चिन्तयामास चेतसि ॥ ७२९ ॥
अहो ! राज्यस्य लुब्धेन, लुब्धकादपि[11] पापिना । अमुनेव समारब्धो, धिग् धिग् भ्रातृवधो मया ॥७३०॥
यदादावपि हन्यन्ते, भ्रातृभ्रातृव्यकादयः[12] । शाकिनीमन्त्रवत् तस्य, राज्यस्याऽर्थे यतेत कः ? ॥ ७३१ ॥
राज्यश्रिया प्राप्तयाऽपि, यथेच्छं भुक्तयाऽपि च । सुरयेव सुरापस्य[13], पुंसस्तृप्तिर्न जायते ॥ ७३२ ॥
भवेदाराध्यमानाऽपि, प्राप्य स्तोकमपि च्छलम् । राज्यलक्ष्मीः क्षणात् क्षुद्रदेवतेव पराङ्मुखी ॥ ७३३ ॥
राज्यलक्ष्मीरमावास्यारात्रिवद् भूरितामसा । उज्झाञ्चकार तृणवत्, तातोऽप्येनां कुतोऽन्यथा ? ॥७३४॥
तस्य तातस्य पुत्रेण, सताऽप्येषा मया चिरात् । दुर्वृत्तत्वेन विज्ञाता, ज्ञास्यत्यन्यः कथं ह्यमूम् ? ॥७३५॥

---

१ भुक्तम् । २ वडवाग्नि । ३ दृष्ट्वा । ४ चक्रस्य । ५ उत्पलपत्रिकावत् । ६ पराक्रमावधिम् । ७ शिष्य. । ८ अश्वशालाम् ।
९ भरतस्य । १० समुद्र । ११ व्याधात् । १२ भ्रातृ. पुत्रादयः । १३ मदिरापानकारकस्य ।

सर्वथा त्यजनीयेयमिति निश्चित्य चेतसि । महामना बाहुबलिरित्यूचे चक्रवर्त्तिनम् ॥ ७३६ ॥

तितिक्षस्व क्षमानाथ !, राज्यमात्रकृतेऽपि यत् । द्विषन्निव मया भ्रातरेवं त्वमसि खेदितः ॥ ७३७ ॥
महाभवह्रदेऽमुष्मिंस्तन्तु[1]पाशसहोदरैः । भ्रातृपुत्रकलत्राद्यैः, राज्येन च कृतं मम ॥ ७३८ ॥
त्रिजगत्स्वामिनो विश्वाभयदानैकसत्रिणः । एष पान्थीभविष्यामि, पथि तातस्य सम्प्रति ॥ ७३९ ॥
इत्युदित्वा महासत्त्वः, सोऽग्रणीः शीघ्रकारिणाम् । तेनैव मुष्टिना मूर्ध्नः, उद्दध्रे तृणवत् कचान्[2] ॥ ७४० ॥
साधु साध्विति सानन्दं, निगदन्तो दिवौकसः । बाहुबलेरुपरिष्टात्, पुष्पवृष्टिं वितेनिरे ॥ ७४१ ॥
सोऽप्येवं चिन्तयामास, प्रतिपन्नमहाव्रतः । किं तातपादपद्मान्तमहं गच्छामि सम्प्रति ? ॥ ७४२ ॥
नो वा यास्यामि पूर्वात्तव्रतानां ज्ञानशालिनाम् । मध्येऽनुजानामपि मे, यल्लघुत्वं भविष्यति ॥ ७४३ ॥
इहैव दग्ध्वा घातीनि, कर्माणि ध्यानवह्निना । अवाप्तकेवलज्ञानो, यास्यामि स्वामिपर्षदि ॥ ७४४ ॥
मनस्वी चिन्तयन्नेवं, प्रलम्बितभुजद्वयः । कायोत्सर्गेण तत्रैवाऽस्थाद् रत्नप्रतिमेव सः ॥ ७४५ ॥

भरतस्तं तथा दृष्ट्वा, विचार्य स्वं कुकर्म च । बभूव न्यञ्चित[3]ग्रीवो, विविक्षु[4]रिव मेदिनीम् ॥ ७४६ ॥
शान्तं रसं मूर्त्तमिव, भ्रातरं प्रणनाम सः । नेत्रयोरश्रुभिः कोष्णैः, कोपशेषमिवोत्सृजन् ॥ ७४७ ॥
भरतः प्रणमंस्तस्याऽधिकोपास्ति[5]विधित्सया । नखादर्शेषु सङ्क्रान्त्या, नानारूप इवाऽभवत् ॥ ७४८ ॥
सुनन्दानन्दनमुनेर्गुणस्तवनपूर्विकाम् । स्वनिन्दामित्यथाऽकार्षीत्, स्वापवादगदौषधीम् ॥ ७४९ ॥
धन्यस्त्वं तत्यजे येन, राज्यं मदनुकम्पया । पापोऽहं यदसन्तुष्टो, दुर्मदस्त्वामुपाद्रवम् ॥ ७५० ॥
स्वशक्तिं ये न जानन्ति, ये चाऽन्यायं प्रकुर्वते । जीयन्ते ये च लोभेन, तेषामसि धुरन्धरः ॥ ७५१ ॥
राज्यं भवतरोर्बीजं, ये न जानन्ति तेऽधमाः । तेभ्योऽप्यहं विशिष्ये तदजहानो विदन्नपि ॥ ७५२ ॥
त्वमेव पुत्रस्तातस्य, यस्तातपथमन्वगाः । पुत्रोऽहमपि तस्य स्यां, चेद् भवामि भवादृशः ॥ ७५३ ॥
विषादपङ्कमुन्मूल्य, पश्चात्तापजलैरिति । तत्पुत्रं सोमयशसं, तद्राज्ये स न्यवीविशत् ॥ ७५४ ॥
तदादि सोमवंशोऽभूच्छाखाशतसमाकुलः । तत्तत्पुरुषरत्नानामेकमुत्पत्तिकारणम् ॥ ७५५ ॥
ततो बाहुबलिं नत्वा, भरतः सपरिच्छदः । पुरीमयोध्यामगमत्, स्वाराज्यश्रीसहोदराम् ॥ ७५६ ॥

भगवानपि तत्रैकस्तस्थौ बाहुबलि*र्मुनिः । भूमेरिव समुद्भूतोऽवतीर्णो गगनादिव ॥ ७५७ ॥
ध्यानैकतानो नासान्तविश्रान्तनयनद्वयः । निष्कम्पः स मुनिः शङ्कु[6]रिव दिक्साधनो बभौ ॥ ७५८ ॥
विकिरन्तीं वह्निकणानिवोष्णान् वालुकाकणान् । उष्णर्तुवात्यां[7] देहेन, स सेहे वनवृक्षवत् ॥ ७५९ ॥
अग्निकुण्डमिव ग्रीष्ममध्यन्दिनरविं च सः । शुभध्यानसुधामग्नो, नाऽज्ञासीन्मूर्ध्न्यपि स्थितम् ॥ ७६० ॥
आशिरःप्रपदं[8] ग्रीष्मतापात् स स्वेदवारिभिः । रजःपङ्कीकृतैः क्रोडं[9], इवाऽभात् पङ्कनिर्गतः ॥ ७६१ ॥
स प्रावृषि महाझञ्झानिलघूर्णितपादपैः । धारासारैर्गिरिरिव, नाऽभिद्यत मनागपि ॥ ७६२ ॥
विद्युत्पातेषु निर्घातकम्पिताद्रिशिरःस्वपि । न कायोत्सर्गतो नाऽपि, ध्यानतः प्रचचाल सः ॥ ७६३ ॥
अधोवहद्वारिभवैः, शैवलैश्चरणद्वयम् । तस्योर्द्ध्वं[10]सग्रामवापीसोपानवदलिप्यत ॥ ७६४ ॥
हिमर्तौ हिमसाद्भूत[11]द्विपदघ्नसरित्यपि । सोऽस्थात् कर्मेन्धनप्लोषोद्युक्तध्यानाग्निना सुखम् ॥ ७६५ ॥
हैमनीषु[12] हिमप्लुष्टद्रुषु[13] रात्रिषु कुन्दवत्[14] । धर्म्यं ध्यानं बाहुबलेरुज्जजृम्भे विशेषतः ॥ ७६६ ॥
तस्मिन्नरण्यमहिषा, विषाणाच्छोट[15]पूर्वकम् । महातरुस्कन्ध इव, स्कन्धकण्डूयनं व्यधुः ॥ ७६७ ॥

---

१ तन्तुपाशसदृशैः । २ केशान् । ३ नम्रीभूतग्रीवः । ४ प्रवेष्टुमिच्छुः । ५ अधिकोपासनां विधातुमिच्छया ।
* °लिर्नृपः खंता ॥ ६ स्थाणुरिव । ७ ग्रीष्मर्त्तुवातसमूहम् । ८ आमस्तकपादाग्रम् । ९ सूकर । १० निर्जनग्रामवापीसोपानवद् । ११ हिमसाद्भूतगजप्रमाणसरिति । १२ हेमन्तर्त्तुसम्बन्धिनीषु । १३ हिमदग्धवृक्षासु । १४ माघ्यकुसुमवद् । १५ शृङ्गाच्छोटनपूर्वकम् ।

वपुषा तद्वपुरवष्टभ्य शैलतटीमिव । वार्ध्रीणसकुलान्यन्वभूवन्निद्रासुखं निशि ॥ ७६८ ॥
सल्लकीपल्लवभ्रान्त्या, तत्पाणिचरणं मुहुः । कर्षन्तः कर्षुमसहा, वैलक्ष्यं करिणो ययुः ॥ ७६९ ॥
उत्कण्टककरालाभिर्जिह्वाभिः करपत्रवत् । विश्वस्तास्तं लिहन्ति स्मोदाननाश्चमरीगणाः ॥ ७७० ॥
लताभिः शतशाखाभिः, प्रसरन्तीभिरुच्चकैः । मुरजैश्चर्मवर्ध्रीभिरिव सोऽवेष्ट्यताऽभितः ॥ ७७१ ॥
परितस्तं शरस्तम्बाः, प्ररोहन्ति स्म सन्ततः । पूर्वस्नेहवशायातशराल्यशरधिश्रियः ॥ ७७२ ॥
उद्ययुः पादयोस्तस्य, प्रावृट्पङ्कनिमग्नयोः । चलच्छतपदीगर्भा, अदभ्रा दर्भसञ्चयः ॥ ७७३ ॥
प्रचक्रिरे कुलायांश्च, तद्देहे वल्लिसङ्कुले । परस्पराविरोधेन, ते श्येनचटकादयः ॥ ७७४ ॥
अरण्यकेकिकेकातस्त्रस्तास्तत्र महोरगाः । वल्लीवितानगहने, समारोहन् सहस्रशः ॥ ७७५ ॥
शरीरमधिरूढैस्तैर्लम्बमानैर्भुजङ्गमैः । बभौ बाहुबलिर्बाहुसहस्रमिव धारयन् ॥ ७७६ ॥
पादपर्यन्तवल्मीकविनिर्यातैर्महोरगैः । पादयोर्वेष्टयाञ्चक्रे, स पादकटकैरिव ॥ ७७७ ॥
इत्थं स्थितस्य ध्यानेन, तस्यैको वत्सरो ययौ । विनाऽऽहारं विहरतो, वृषभस्वामिनो यथा ॥ ७७८ ॥
पूर्णे तु वत्सरे विश्ववत्सलो वृषभध्वजः । आहूय भगवान् ब्राह्मीसुन्दर्यावेवमादिशत् ॥ ७७९ ॥
स इदानीं बाहुबलिः, क्षीणप्रचुरकर्मकः । शुक्लचतुर्दशीरात्रिरिव प्रायेण निस्तमाः ॥ ७८० ॥
मानात् स मोहनीयांशाज्ज्ञानं नाऽऽप्नोति केवलम् । तिरोहितः काण्डपटेनाऽप्यर्थो न हि दृश्यते ॥७८१॥
युवयोर्वचसा मानं, सद्यस्त्यक्ष्यति सोऽद्य तत् । यातं तस्योपदेशाय, समयः खलु वर्त्तते ॥ ७८२ ॥
तामाज्ञां शिरसाऽऽदाय, नत्वा च चरणौ प्रभोः । प्रति बाहुबलिं ब्राह्मीसुन्दर्यौ चेलतुस्ततः ॥७८३॥
ज्ञात्वाऽपि तन्मानमुपेक्षाञ्चक्रे वत्सरं प्रभुः । अमूढलक्ष्या अर्हन्तः, समये ह्युपदेशकाः ॥ ७८४ ॥
ते आर्ये जग्मतुस्तत्र, देशे वल्लीतिरोहितम् । रत्नं रजश्छन्नमिवाऽलक्षयेतां न तं मुनिम् ॥ ७८५ ॥
मुहुरन्वेषयन्तीभ्यां, ताभ्यामथ तथास्थितः । उपालक्षि कथञ्चित् स, वृक्षेभ्यो ह्यविशेषभाक् ॥ ७८६ ॥
निपुणं लक्षयित्वा तं, कृत्वा त्रिश्च प्रदक्षिणाम् । महामुनिं बाहुबलिं, ते वन्दित्वैवमूचतुः ॥ ७८७ ॥
आज्ञापयति तातस्त्वां, ज्येष्ठार्य ! भगवानिदम् । हस्तिस्कन्धाधिरूढानामुत्पद्येत न केवलम् ॥ ७८८ ॥
इत्युदित्वा भगवत्यौ, जग्मतुस्ते यथागतम् । सोऽपि विस्मयमानोऽन्तर्महात्मैवमचिन्तयत् ॥ ७८९ ॥
त्यक्तसावद्ययोगस्य, कायोत्सर्गजुषस्ततः । अस्मिंस्तरोरिवाऽरण्ये, ममेभारोहणं कुतः ? ॥ ७९० ॥
इमे भगवतः शिष्ये, भाषेते न मृषा क्वचित् । तत् किमेतदहो ! यद्वा, हुं ज्ञातं हि चिरान्मया ॥ ७९१ ॥
को हि व्रतगरिष्ठानां, कनिष्ठानां नमस्क्रियाम् । कर्त्तेति मान एवेभस्तमारूढोऽसि निर्भरम् ॥ ७९२ ॥
जगत्त्रयगुरोस्तस्य, चिरं सेवाजुषोऽपि मे । नाऽभूद् विवेकस्तरणं, कुलीरस्येव वारिणि ॥ ७९३ ॥
प्रतिपन्नव्रतेष्वादौ, स्वभ्रातृषु महात्मसु । कनिष्ठा इति यत् तेषु, नाऽभून्मम विवन्दिषा ॥ ७९४ ॥
इदानीमपि गत्वा तान्, वन्दिष्येऽहं महामुनीन् । चिन्तयित्वेति स महासत्त्वः पादमुदक्षिपत् ॥ ७९५ ॥
लतावल्लीवत् त्रुटितेष्वभितो घातिकर्मसु । तस्मिन्नेव पदे ज्ञानमुत्पेदे तस्य केवलम् ॥ ७९६ ॥
उत्पन्नकेवलज्ञानदर्शनः सौम्यदर्शनः । रवेरिव शशी सोऽथ, जगाम स्वामिनोऽन्तिकम् ॥ ७९७ ॥

प्रदक्षिणां तीर्थकृतो विधाय, तीर्थाय नत्वा च जगन्नमस्यः ।
महामुनिः केवलिपर्षदन्तस्तीर्णप्रतिज्ञो निषसाद सोऽथ ॥ ७९८ ॥

**इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये प्रथमे पर्वणि बाहुबलिसङ्ग्राम-दीक्षा-केवलज्ञानसङ्कीर्त्तनो नाम पञ्चमः सर्गः ॥ ५ ॥**

---

१ माण्डकाख्यः पशुविशेषः । २ ऊर्ध्वमुखाः । ३ मृदङ्गः । ४ कीटविशेषः । ५ नीडानि । ६ अटवीमयूरवाणीत. । ७ पटखण्डेन । ८ गच्छतम् । ९ हस्त्यारोहणम् । १० कर्कटस्य जलजन्तुविशेषस्य । ११ वन्दितुमिच्छा । १२ जगतां नमस्करणीयः ।

## षष्ठः सर्गः ।

इतश्च स्वामिनः शिष्यो, मरीचिर्भरतात्मजः । एकादशानामङ्गानामध्येता निजनामवत् ॥ १ ॥
सहितः श्रामणगुणैः, सुकुमारो निसर्गतः । कलभो यूथपेनेव, विहरन् स्वामिना समम् ॥ २ ॥
ग्रीष्मे मध्यन्दिने भीष्मैर्दिवाकरकरोत्करैः । नाडीन्धमैरिवाऽऽध्मातेष्वभितो मार्गपांशुषु ॥ ३ ॥
अदृश्याभिर्हुतवहज्वालाभिरिव सर्वतः । महावात्याभिरुष्णाभिः, खिलीभूतेषु वर्त्मसु ॥ ४ ॥
आपादमस्तकोद्भूतस्वेदधारानिरन्तरे । अग्नितप्तैषदार्द्रेधःसध्रीचि निजवर्ष्मणि ॥ ५ ॥
पयःसंसिक्तसंशुष्कचर्मगन्धवदुद्धते । प्रस्वेदक्लिन्नवस्त्राङ्गमलगन्धे च दुःसहे ॥ ६ ॥
पादयोर्दह्यमानश्चाऽवतप्ते नकुलस्थितम् । नाटयंस्तृष्णयाऽऽक्रान्तश्चेतसैवमचिन्तयत् ॥ ७ ॥
[ सप्तभिः कुलकम् ]

केवलदर्शनज्ञानार्केन्दुमेरुमहीभृतः । ऋषभस्वामिनस्तावदस्मि पौत्रो जगद्गुरोः ॥ ८ ॥
अखण्डषट्खण्डमहीमण्डलाखण्डलस्य च । विवेकैकनिधेस्तस्य, पुत्रोऽस्मि भरतेशितुः ॥ ९ ॥
चतुर्विधस्य सङ्घस्याऽन्वक्षं च स्वामिनोऽन्तिके । प्राव्राजिषं पञ्चमहाव्रतोच्चारणपूर्वकम् ॥ १० ॥
एवं सति स्थानतोऽस्माल्लज्जयाऽगलितस्य मे । न युज्यते गृहे गन्तुं, वीरस्येव रणाजिरात् ॥ ११ ॥
श्रामण्यं गुणभारं च, महाद्रिमिव दुर्वहम् । मुहूर्त्तमपि चोद्वोढुमलमस्मि न साम्प्रतम् ॥ १२ ॥
इतः कुलाद्यमलिनमितश्चाऽसुकरं व्रतम् । इतस्तटीतः शार्दूलः, सङ्कटे पतितोऽस्मि हा ! ॥ १३ ॥
आ ज्ञातमथवाऽस्तीह, सुषमो विषमेऽपि हि । पर्वते दण्डकपथ, इव पन्था अयं खलु ॥ १४ ॥
मनोवाक्कायदण्डानां, जयिनः श्रमणा ह्यमी । तैरहं विजितोऽस्मीति, भविष्यामि त्रिदण्डिकः ॥ १५ ॥
अमी मुण्डाः शिरःकेशलुञ्चनेन्द्रियनिर्जयैः । अहं पुनर्भविष्यामि, क्षुरमुण्डशिखाधरः ॥ १६ ॥
स्थूलसूक्ष्मप्राणिवधादिभ्योऽमी विरताः सदा । स्थूलप्राणातिपातादिविरतिर्भवतान्मम ॥ १७ ॥
एते ह्यकिञ्चना मेऽस्तु, स्वर्णमुद्रादि किञ्चन । एतेऽनुपानहोऽहं तु, परिधास्याम्युपानहौ ॥ १८ ॥
एतेऽष्टादशशीलाङ्गसहस्याऽतिसुगन्धयः । शीलेनाऽहं तु दुर्गन्ध, आदास्ये चन्दनादिकम् ॥ १९ ॥
अपमोहाः साधवोऽमी, मोहच्छन्नोऽस्म्यहं ततः । तच्चिह्नं धारयिष्यामि, च्छत्रकं मस्तकोपरि ॥ २० ॥
श्वेतवस्त्रधरा एते, कषायकलुषस्त्वहम् । तत्स्मृत्यै परिधास्यामि, काषायाण्यंशुकान्यहम् ॥ २१ ॥
पापभीताः प्राज्यजीवं, जलारम्भं त्यजन्त्यमी । अस्तु स्नानं च पानं च, पानीयेन मितेन मे ॥ २२ ॥
स्वबुद्ध्या कल्पयित्वैवं, मरीचिर्लिङ्गमात्मनः । बभार तादृशश्चाऽथ, विजह्रे स्वामिना सह ॥ २३ ॥
नाऽश्वो न च खरः किन्तूभयांशोऽश्वतरो यथा । न संयतो न च गृही, मरीचिरभवत् तथा ॥ २४ ॥
महर्षिषु विजातीयं, मरालेष्विव वायसम् । तं निरीक्ष्य जनो भूयान्, धर्मं पप्रच्छ कौतुकात् ॥ २५ ॥
मूलोत्तरगुणभ्रष्टं, साधुधर्ममुपादिशत् । स्वयं च तदनाचारे, पृष्टोऽशक्तिं जगाद सः ॥ २६ ॥
प्रतिबोध्याऽऽगतान् भव्यान्, परिविव्रजिषून् सतः । मरीचिः प्रेषयामास, समीपे स्वामिपादयोः ॥२७॥
प्रतिबुध्यागतानां च, तेषां दीक्षां स्वयं ददौ । निष्कारणोपकारैकबन्धुः स्वाम्यृषभध्वजः ॥ २८ ॥
†मरीचेः स्वामिना सार्द्धं, एवं विहरतोऽन्यदा । शरीरे रोग उत्पेदे, काष्ठे घुण इवोल्वणः ॥ २९ ॥
प्रालम्बभ्रष्टकपिवद्, व्रतभ्रष्टो बहिष्कृतः । स्वयूथ्यसंयतैर्नैव, मरीचिः प्रत्यपाल्यत ॥ ३० ॥
अजातप्रतिचारोऽसौ, बबाधे व्याधिनाऽधिकम् । इक्षुवाट इवाऽऽरक्षवर्जितः सूकरादिना ॥ ३१ ॥

---

* °करैरसौ ख ॥ १ अग्नितप्तैषदार्द्रकाष्ठसमाने । २ स्वशरीरे । ३ प्रत्यक्षम् । ४ काञ्चनादिरहिता । ५ चर्मपादुकारहिता. । ६ मोहरहिताः । ७ वस्त्राणि । ८ हंसेषु । ९ काकम् । † इत आरभ्य ५२ पर्यन्त श्लोका. ख १, खपुस्तकयोर्न सन्ति ॥

रोगे निपतितो घोरे, महारण्य इवाऽसखा[1] । एवं विचिन्तयामास, मरीचिर्निजचेतसि ॥ ३२ ॥
अहो ! मम भवेऽत्रैवोदीर्णं कर्म शुभेतरम् । मां यदेते परमिवोपेक्षन्ते स्वेऽपि[2] साधवः ॥ ३३ ॥
यद्वा दिवाकरस्येवोलूकेऽनालोककारिणः । दोषो न कस्याऽपि मयि, साधोरप्रतिचारिणः ॥ ३४ ॥
सावद्यविरतास्ते हि, सावद्यनिरतस्य मे । वैयावृत्यं कथं कुर्युर्म्लेच्छस्येव महाकुलाः ॥ ३५ ॥
न तान् कारयितुं युक्तं, वैयावृत्यं ममाऽपि हि । व्रतभ्रंशोत्थपापस्य, सन्तानाय हि तद् भवेत् ॥ ३६ ॥
तदात्मप्रतिचाराय, मन्दधर्माणमात्मवत् । अन्वेषयामि कमपि, युज्यन्ते हि मृगैर्मृगाः ॥ ३७ ॥
मरीचिश्चिन्तयन्नेवमुल्लाघः[3] कथमप्यभूत् । कालादनूषरत्वं हि, व्रजत्यूषरभूरपि ॥ ३८ ॥
अन्यदा स्वामिनः पादपद्मान्ते दूरभव्यकः । कुतोऽपि कपिलो नाम, राजपुत्रः समाययौ ॥ ३९ ॥
विश्वोपकारकरणप्रावृषेण्यपयोमुचः । कुर्वतो देशनां भर्त्तुर्धर्मस्तेन च शुश्रुवे ॥ ४० ॥
ज्योत्स्नेव चक्रवाकायोलूकायेव दिवामुखम् । प्रक्षीणभागधेयाय, रोगितायेव भेषजम् ॥ ४१ ॥
शीतलं वार्तलायेव[4], छागायेव[5] घनागमः । स धर्मः स्वामिगदितो, रुरुचे कपिलाय न ॥४२॥ [ युग्मम् ]
धर्मान्तरं तु शुश्रूषुः, क्षिपन् दृष्टिमितस्ततः । प्रेक्षाञ्चक्रे मरीचिं स, स्वामिशिष्यविलक्षणम् ॥ ४३ ॥
मरीचिं स्वामितः सोऽगाद्, धर्मान्तरजिघृक्षया । महेभ्याट्टाद्[6] दरिद्राट्टमिव क्रायकबालकः ॥ ४४ ॥
धर्मं तेनाऽनुयुक्तस्तु[7], मरीचिरिदमभ्यधात् । नेहाऽस्ति धर्मो धर्मार्थी, यदि तत् स्वामिनं श्रय ॥ ४५ ॥
ऋषभस्वामिनः पादाभ्यर्णं[8] भूयो जगाम सः । पुनराकर्णयामास, धर्मं तत्र तथैव तम् ॥ ४६ ॥
स्वकर्मदूषितायाऽसौ, स्वामिधर्मोऽरुचन्न हि । चातकस्य वराकस्य, सम्पूर्णसरसाऽपि किम् ? ॥ ४७ ॥
मरीचिमाययौ भूयः, स इत्यूचे च किं तव ? । योऽपि सोऽपि न धर्मोऽस्ति, निर्धर्मं किं व्रतं भवेत् ? ॥४८॥
मरीचिश्चिन्तयामासाऽनुरूपः कोऽप्ययं मम । अहो ! दैवादयं जज्ञे, योगः सदृशयोश्चिरात् ॥ ४९ ॥
सहायो निःसहायस्य, ममाऽस्त्विति विचिन्त्य सः । तत्राऽपि धर्मोऽस्त्यत्राऽपि, धर्मोऽस्त्येवमभाषत ॥५०॥
दुर्भाषितेन तेनैकेनाऽप्युपार्जयदुल्बणम् । अब्धिकोटीकोटिमानं, मरीचिर्भवमात्मनः ॥ ५१ ॥
अदीक्षयत् स कपिलं, स्वसहायं चकार च । परिव्राजकपाखण्डं, ततः प्रभृति चाऽभवत् ॥ ५२ ॥
अथ साग्रं योजनानां, शतं लोकान् रुजां क्षयात् । अनुगृह्णंस्तापशान्त्या, प्रावृषेण्य इवाऽम्बुदः ॥५३॥
पतङ्गमूषकशुकप्रायेतेरप्रवृत्तितः । अनीतेरिव भूपालः, सुखयन्नखिलाः प्रजाः ॥ ५४ ॥
नैमित्तिकानां वैराणां, शाश्वतानां च सर्वतः । प्रशमात् प्रीणयन् जन्तून्, रविर्ध्वान्तक्षयादिव ॥ ५५ ॥
व्यवहारप्रवृत्त्याऽग्रे, सर्वसौस्थ्यकृता यथा । आनन्दयन्नमार्यो च, परितोऽपि प्रजास्तथा ॥ ५६ ॥
अत्यन्तवृष्ट्यनावृष्टी, अजीर्णातिक्षुधाविव । प्रभावेनाऽगदेनेव[9], जगतोऽप्यपसारयन् ॥ ५७ ॥
स्वान्यचक्रभवेनाऽन्तःशल्येनेवाऽपगच्छता[10] । सद्यः प्रीतैर्जनपदैः, क्रियमाणागमोत्सवः ॥ ५८ ॥
सर्वसंहारघोराच्च, रक्षन् दुर्भिक्षतो जगत् । रक्षसो मान्त्रिक इव, स्तूयमानो भृशं जनैः ॥ ५९ ॥
भामण्डलं दधानश्च, जितमार्त्तण्डमण्डलम् । बहिर्भूतमिवाऽनन्तं, ज्योतिरन्तरसम्मितम्[11] ॥ ६० ॥
चक्रवर्तीव चक्रेण, निःसाधारणतेजसा । प्रसर्पता पुरो व्योम्नि, धर्मचक्रेण राजितः ॥ ६१ ॥
लघुध्वजसहस्रेण, पुरो धर्मध्वजेन च । सर्वकर्मजयस्तम्भेनेव तुङ्गेन शोभितः ॥ ६२ ॥
स्वयं शब्दायमानेन, दिव्यदुन्दुभिना दिवि । क्रियमाणप्रयाणार्हकल्याण इव निर्भरम् ॥ ६३ ॥
नभःस्थितेन स्फटिकरत्नसिंहासनेन च । पादपीठसमेतेन, यशसेवोपशोभितः ॥ ६४ ॥
सुरैः सञ्चार्यमाणेषु, सौवर्णेष्वम्बुजन्मसु[12] । कुर्वाणश्चरणन्यासं, सलीलं राजहंसवत् ॥ ६५ ॥

---

१ असहायः । २ स्वकीया अपि । ३ नीरोग. । ४ वातरोगिणे । ५ मेषाय । ६ धनाढ्यापणात् । ७ पृष्ट. ।
८ पादसमीपम् । ९ औषधेन । १० स्वचक्रपरचक्रभवेन । ११ केवलज्ञानम् । १२ कमलेषु ।

भिया रसातलमिव, विविक्षुभिरधोमुखैः । तीक्ष्णतुण्डैः कण्टकैरप्यनाक्लिष्टपरिच्छदः ॥ ६६ ॥
*उपास्यमानो युगपद्, ऋतुभिर्निखिलैरपि । कर्त्तुं प्रायश्चित्तमिवाऽनङ्ग[1]साहाय्यपाप्मनः ॥ ६७ ॥
मार्गावनी[2]रुहैरुच्चैर्दूरान्नमितमूर्द्धभिः । अपसंज्ञै[3]रपि नमस्क्रियमाण इवाऽभितः ॥ ६८ ॥
तालवृन्तानिलेनेव, मृदुना शीतलेन च । अनिलेनाऽनुकूलेन, सेव्यमानो निरन्तरम् ॥ ६९ ॥
न शुभं स्वामिर्वामानाम्[4]इति ज्ञात्वेव पक्षिभिः । प्रदक्षिणं प्रोत्तरद्भिर्लङ्घ्यमानाग्रवर्त्मकः ॥ ७० ॥
जघन्यतः कोटिसङ्ख्यै, राजमानः सुरासुरैः । यातायातपरैर्वेलातरङ्गैरिव सागरः ॥ ७१ ॥
भक्तिप्रभाववशतः, सप्रभेण दिवाऽपि हि । इन्दुनेव नभःस्थेनाऽऽतपत्रेण विराजितः ॥ ७२ ॥
इन्दोर्मरीचिसर्वस्वकोशैरिव पृथक्कृतैः । गङ्गातरङ्गधवलैर्वीज्यमानश्च चामरैः ॥ ७३ ॥
तपसा दीप्यमानैश्च, सौम्यैश्च श्रमणोत्तमैः[5] । लक्षशः परिकरितः, उडुनाथ[6] इवोडुभिः[7] ॥ ७४ ॥
प्रतिग्रामं प्रतिपुरं, भव्यजन्तून् प्रबोधयन् । प्रतिसिन्धु प्रतिसरः, पङ्कजानीव भास्करः ॥ ७५ ॥
ग्रामाकरपुरद्रोणमुखकर्बटपत्तनैः । मडम्बाश्रमखेटाद्यैश्चापूर्णां विहरन् महीम् ॥ ७६ ॥
विश्वोपकारप्रवणो, भगवानृषभध्वजः । अपरेद्युः क्रमात् प्रापदष्टापदमहाचलम् ॥ ७७ ॥

[ पञ्चविंशत्या कुलकम् ]

शारदानामिवाऽभ्राणां, राशिमेकत्र कल्पितम् । संस्त्यानी[8]भूतदुग्धाब्धिवेलाकूटमिवाऽऽहृतम् ॥ ७८ ॥
जन्माभिषेकविकृतपुरन्दरककुद्मताम् । एकं ककुद्मन्त[9]मिवोत्तुङ्गशृङ्गमिव स्थितम् ॥ ७९ ॥
नन्दीश्वरमहाद्वीपवर्त्तिपुष्करिणीसदाम् । मध्याद् दधिमुखाद्रीणामिवैकतममागतम् ॥ ८० ॥
जम्बूद्वीपारविन्दस्य, बिसखण्ड[10]मिवोद्धृतम् । उद्भटं मुकुटमिव, श्वेतरत्नमयं भुवः ॥ ८१ ॥
नैर्मल्याद् भासुरत्वाच्च, नित्यमेव द्युसद्मभिः[11] । स्नप्यमानमिवाऽम्भोभिर्मृज्यमानमिवाऽंशुकैः ॥ ८२ ॥
स्फटिकोपलकूलेषु, निर्मलेष्वङ्गनाजनैः । उपलक्ष्यसरिद्वारिं[12], वातोद्धूताब्जरेणुना ॥ ८३ ॥
शृङ्गाग्रभागविश्रान्तविद्याधरमृगीदृशाम् । वैताढ्यक्षुद्रहिमवद्विसारणभवान्तरम् ॥ ८४ ॥
आदर्शमिव रोदस्यो[13]र्दिशां हासमिवाऽसमम् । ग्रहनक्षत्रनिर्माणमृत्स्नास्थलमिवाऽक्षयम् ॥ ८५ ॥
मध्यभागसमासीनक्रीडाश्रान्तकुरङ्गकैः । शिखरैर्दर्शितानेकमृगलाञ्छनविभ्रमम् ॥ ८६ ॥
आमुक्तामलसंव्यानमिव निर्झरपङ्क्तिभिः । उत्पताकमिवोदञ्चदर्ककान्तोपलांशुभिः ॥ ८७ ॥
तुङ्गनिर्मलशृङ्गाग्रसङ्क्रान्तेन विवस्वता[14] । मुग्धसिद्धपुरन्ध्रीणां, दत्तोदयगिरिभ्रमम् ॥ ८८ ॥
अत्यार्द्रपत्रबहलैः, सन्ततच्छायमङ्घ्रिपैः[15] । मयूरपत्ररचितैरातपत्रैरिवोरुभिः ॥ ८९ ॥
खेचरीभिर्लाल्यमानेष्वेर्णपोतेषु[16] कौतुकात् । उत्प्रस्नवमृगीक्षीरसिच्यमानलतावनम् ॥ ९० ॥
कदलीपत्रसंव्यानशबरीलास्यमीक्षितुम् । श्रेणीकृताक्षिपत्राभिः, सुरस्त्रीभिरधिष्ठितम् ॥ ९१ ॥
रतश्रान्तोरगीपीतदरिद्रितवनानिलम् । वनानिलनटक्रीडाप्रनर्त्तितलतावनम् ॥ ९२ ॥
किन्नरस्त्रीरतारम्भमन्दिरीभूतकन्दरम् । अप्सरोमज्जनभरोत्तरङ्गितसरोजलम् ॥ ९३ ॥
शारिद्यूतपरैः[17] क्वाऽपि, पानगोष्ठीरतैः क्वचित् । क्वचनाऽऽबद्धपणितैर्यक्षैस्तुमुलितोदरम्[18] ॥ ९४ ॥
क्वचिच्छबरनारीभिः, किन्नरीभिः क्वचित् पुनः । क्वचिद् विद्याधरस्त्रीभिः, क्रीडाप्रक्रान्तगीतिकम् ॥९५॥
पक्वद्राक्षाफलोन्मत्तशुकैः क्वाऽपि कृतारवम् । क्वाऽपि चूताङ्कुरोन्मत्तपिकोद्ग्राहितपञ्चमम् ॥ ९६ ॥

---

* इमौ ६७–६८ तमौ श्लोकौ ख पुस्तके न विद्येते । १ कामसाहाय्यपापस्य । २ मार्गवृक्षै । ३ निश्चेष्टैः । ४ स्वामिप्रतिकूलानाम् । ५ साधूत्तमै । ६ चन्द्र । ७ नक्षत्रै । ८ घनीभूतक्षीरसमुद्रवेलाकूटम् । ९ वृषभम् । १० नालखण्डम् । ११ देवसद्मै । १२ उपलक्षणीयनदीजलम् । १३ द्यावाभूम्यो । १४ सूर्येण । १५ वृक्षै. । १६ मृगशिशुषु । १७ पाशफलकद्यूतपरै । १८ कोलाहलीकृतमध्यम् ।

क्वचिन्नवबिसास्वादमत्तहंसस्वरोद्धुरम् । मरित्तटोन्मदक्रौञ्चक्रेङ्कारमुखरं क्वचित् ॥ ९७ ॥
क्वाऽप्यासन्नघनोन्माद्यत्केकिकेकारवाकुलम् । क्वचित् सरःपरिसरत्सारसस्वरसुन्दरम् ॥ ९८ ॥
कौसुम्भवाससमिव, रक्ताशोकवनैः क्वचित् । तमालतालहिन्तालैर्नीलाम्बरमिव क्वचित् ॥ ९९ ॥
पीतांशुकमिव क्वाऽपि, किंशुकैः कुसुमाञ्चितैः । श्वेतवस्त्रमिव क्वाऽपि, मालतीमल्लिकावनैः ॥ १०० ॥
अष्टयोजनमानेनोच्छ्रायेणाऽभ्रंलिहं ततः । गिरिं गिरिगरिष्ठस्तमारुरोह जगद्गुरुः ॥ १०१ ॥
[ चतुर्विंशत्या कुलकम् ]
मरुत्कीर्णैर्द्रुकुसुमैस्तथा निर्झरवारिभिः । त्रिजगत्स्वामिनः सोऽद्रिरर्घपाद्ये व्यधादिव ॥ १०२ ॥
अष्टापदगिरिः सोऽथ, स्वामिपादैः पवित्रितः । न हीनमान्यभून्मेरोस्तज्जन्मस्नानपावितात् ॥ १०३ ॥
प्रहृष्टपरपुष्टादिकूजितव्याजतो मुहुः । जगाविव जगन्नाथगुणानष्टापदाचलः ॥ १०४ ॥
क्षेत्रे योजनमात्रेऽथ, तृणकाष्ठादिकं क्षणात् । वर्द्धनीजीविन इव, जहुर्वायुकुमारकाः ॥ १०५ ॥
विकृत्य सद्योऽप्यभ्राणि, पानीयमहिपानिव । गन्धाम्बुभिस्तां सिषिचुः, क्षितिं मेघकुमारकाः ॥१०६॥
स्वर्णरत्नशिलाभिश्च, विशालाभिर्दिवौकसः । सममादर्शतलवद्, बवन्धुर्धरणीतलम् ॥ १०७ ॥
पञ्चवर्णाः शक्रधनुःखण्डोत्करविडम्बिनीः । जानुद्घ्नीः सुमनसो, ववृषुर्व्यन्तरामराः ॥ १०८ ॥
व्यन्तरास्तत्र कालिन्दीवीचिश्रीतस्करान् व्यधुः । द्रुदलैस्तोरणानार्द्रैः, ककुप्सु चतसृष्वपि ॥ १०९ ॥
†तोरणान्यभितः स्तम्भेष्वराजन्मकराकृतिः । सिन्धूभयतटस्थास्नुमकरश्रीविडम्बिनी ॥ ११० ॥
तेषु श्वेतातपत्राणि, चत्वारि च चकाशिरे । दिग्देवीनां चतसृणां, राजता इव दर्पणाः ॥ १११ ॥
रेजुर्ध्वजपटास्तेषु, समीरणतरङ्गिताः । आकाशगङ्गातरलतरङ्गभ्रान्तिदायिनः ॥ ११२ ॥
अधोऽधस्तोरणान्यासन्, मौक्तिकस्वस्तिकादयः । जगतो मङ्गलमिहेत्यालेख्यलिपिविभ्रमाः ॥ ११३ ॥
तत्रोर्व्यां रचिते पीठे, वप्रं वैमानिकाः सुराः । रत्नाकरश्रीसर्वस्वमिव रत्नमयं व्यधुः ॥ ११४ ॥
तैश्चक्रे तत्र माणिक्यकपिशीर्षपरम्परा । चन्द्रचण्डांशुमालेव, मानुषोत्तरसीमनि ॥ ११५ ॥
वलयीकृत्य हेमाद्रिशृङ्गमेकमिवाऽमलम् । प्राकारं मध्यमं ज्योतिष्पतयः काञ्चनं व्यधुः ॥ ११६ ॥
चक्रिरे कपिशीर्षाणि, तत्र रत्नमयानि ते । सचित्राणीव सुचिरं, प्रेक्षकप्रतिबिम्बितैः ॥ ११७ ॥
विदधुर्भवनाधीशा, रौप्यं वप्रमधस्तनम् । कुण्डलीभूतशेषाहिभोगभ्रमविधायिनम् ॥ ११८ ॥
चक्रुस्ते काञ्चनीं तत्र, कपिशीर्षपरम्पराम् । क्षीरोदतीरनीरस्थसुपर्णश्रेणिविभ्रमाम् ॥ ११९ ॥
वप्रे वप्रे च चत्वारि, चक्रिरे गोपुराणि तैः । तदा विनीतानगरीप्राकारे गुह्यकैरिव ॥ १२० ॥
गोपुरेषु च माणिक्यतोरणान्यक्रियन्त तैः । प्रसारिभिः शतगुणानीव स्वैरेव रश्मिभिः ॥ १२१ ॥
द्वारे द्वारे न्यधीयन्त, व्यन्तरैर्धूपचारकाः । चक्षूरक्षाञ्जनलेखासदृग्धूपोर्मिधारिणः ॥ १२२ ॥
मध्यवप्रान्तरे पूर्वोदीच्यां विश्रान्तये विभोः । देवच्छन्दं व्यधुर्देवा, देवालयमिवौकसि ॥ १२३ ॥
त्रिकोशमानश्चैत्यद्रुर्विचक्रे व्यन्तरामरैः । अन्तःसमवसरणं, पोतान्तरिव कूपकः ॥ १२४ ॥
पीठं रत्नमयं चक्रुस्तेऽथ चैत्यतरोरधः । तं मूलतः पल्लवितमिव कुर्वाणमंशुभिः ॥ १२५ ॥
मृज्यमानं मुहुश्चैत्यशाखिशाखान्तपल्लवैः । तस्योपरिष्टात् पीठस्य, ते रत्नच्छन्दकं व्यधुः ॥ १२६ ॥
तस्यान्तः प्राक् साङ्घ्रिपीठं, रत्नसिंहासनं व्यधुः । कर्णिकामिव विकचाम्भोजकोशस्य मध्यतः ॥ १२७ ॥

* °कद्लैः सं १ ॥ १ गगनपर्यन्तोन्नतम् । † °गरिष्ठं त° स १॥ २ अर्घ्यपाद्योदके । ३ प्रहर्षितकोकिलादिकूजितमिषात् । ४ मार्जनीजीविन । ५ जानुप्रमाणा । ६ पुष्पाणि । ७ यमुना । ‡ अय श्लोक खंपुस्तके पतित । § मूर्द्धनि खंता ॥ ८ मण्डलीकृत्य । ९ क्षीरसमुद्रतटजलस्थगरुडपङ्क्तिविभ्रमाम् । १० यक्षैः । ११ किरणैः । ¶ °खायितधू° खता । १२ प्रवहणान्तः कूपस्तम्भ इव । १३ चैत्यतरुम् ।

छन्दकस्योपरि च्छत्रत्रितयं ते विचक्रिरे । आवर्त्तितं त्रिपथगास्रोतस्त्रयमिवाऽभितः ॥ १२८ ॥
कुतोऽपि हि समाहृत्य, पूर्वसिद्धमिव क्षणात् । इत्थं समवसरणमस्थाप्यत सुरासुरैः ॥ १२९ ॥
ततश्च पूर्वद्वारेण, मोक्षद्वारं जगत्पतिः । भव्यानां हृदयमिव, प्रविवेश तदुच्चकैः ॥ १३० ॥
तत्कालं श्रवणोत्तंसीभवच्छाखान्तपल्लवम् । ततः प्रदक्षिणीचक्रे, तमशोकतरुं प्रभुः ॥ १३१ ॥
नमस्तीर्थायेति वदन्, पूर्वाशाभिमुखोऽथ तत् । राजहंस इवाऽम्भोजं, भेजे सिंहासनं विभुः ॥ १३२ ॥
दिक्ष्वन्यास्वपि तिसृषु, रूपाणि परमेष्ठिनः । रत्नसिंहासनस्थानि, विचक्रुर्व्यन्तरामराः ॥ १३३ ॥
पूर्वद्वाराऽविशन् साधु-साध्वी-वैमानिकस्त्रियः । प्रदक्षिणीकृत्य नेमुर्जिनं तीर्थं च भक्तितः ॥ १३४ ॥
प्राकारे प्रथमे तत्र, धर्मारामहाद्रुमाः । पूर्वदक्षिणदिश्यासाञ्चक्रिरे सर्वसाधवः ॥ १३५ ॥
तेषां च पृष्ठतस्तस्थुरूर्द्ध्वा वैमानिकस्त्रियः । तासां च पृष्ठतस्तस्थुस्तथैव व्रतिनीगणाः ॥ १३६ ॥
प्रविश्य दक्षिणद्वारा, प्राग्विधानेन नैर्ऋते । तस्थुर्भवनेशज्योतिर्व्यन्तराणां स्त्रियः क्रमात् ॥ १३७ ॥
प्रविश्य पश्चिमद्वारा, तद्वन्नत्वाऽवतस्थिरे । मरुद्दिशि भवनेशज्योतिष्कव्यन्तराः क्रमात् ॥ १३८ ॥
तदा च नाथं समवसृतं विज्ञाय वासवः । छादयन् द्यां विमानौघैस्तत्र सत्वरमाययौ ॥ १३९ ॥
प्रविश्योदीच्यद्वारेण, स्वामिनस्त्रिः प्रदक्षिणाम् । कृत्वा नत्वा च सुत्रामा, भक्तिमानेवमस्तवीत् ॥ १४० ॥
अपि सर्वात्मना ज्ञातुमशक्या योगिपुङ्गवैः । स्तुत्याः क्व ते गुणाः ? स्तोता, क्वाऽहं नित्यप्रमद्वरः ॥ १४१ ॥
तथापि नाथ ! स्तोष्यामि, यथाशक्ति भवद्गुणान् । दीर्घेऽध्वनि व्रजन् खञ्जः, किं केनाऽपि निवार्यते ? ॥ १४२ ॥
भवदुःखातपक्लेशविवशानां शरीरिणाम् । छत्रच्छायायमानाङ्घ्रिच्छाय ! त्रायस्व नः प्रभो ! ॥ १४३ ॥
कृतार्थस्त्वं स्वयं नाथ !, कृते लोकस्य केवलम् । एवं विहरसे स्वार्थायोद्याति किमहर्स्करः ? ॥ १४४ ॥
मध्यन्दिनादित्य इव, त्वयि प्रतपति प्रभो ! । सङ्कुचत्यभितः कर्म, देहच्छायेव देहिनाम् ॥ १४५ ॥
तिर्यञ्चोऽपि हि धन्यास्ते, ये त्वां पश्यन्ति सर्वदा । भवद्दर्शनवन्ध्यास्तु, त्रिविष्टपसदोऽपि न ॥ १४६ ॥
प्रकृष्टेभ्यः प्रकृष्टास्ते, भविकास्त्रिजगत्पते ! । एको हृदयचैत्येषु, येषां त्वमधिदेवता ॥ १४७ ॥
एकं याचे भवत्पादान्, ग्रामाद् ग्रामं पुरात् पुरम् । विहरन्नपि मा जातु, विहासीर्हृदयं मम ॥ १४८ ॥
प्रभुं स्तुत्वेति पञ्चाङ्गस्पृष्टभूमिः प्रणम्य च । पूर्वोत्तरस्यां दिश्यासाञ्चक्रे दिविषदां पतिः ॥ १४९ ॥
तथा च समवसृतं, स्वामिनं शैलपालकाः । शशंसुश्चक्रिणे तत्र, तदर्थं स्थापिता हि ते ॥ १५० ॥
स वदान्यो ददौ स्वर्णकोटीर्द्वादश सार्द्धिकाः । तेभ्यो जिनं ज्ञपयद्भ्यः, सर्वं स्तोकं हि तादृशाम् ॥ १५१ ॥
सिंहासनादथोत्थायाऽभिमुखं भगवद्दिशः । गत्वा पदानि सप्ताऽष्टान्यनमद् विनयात् प्रभुम् ॥ १५२ ॥
स्थित्वा सिंहासने भूयो, भूय आजूहवन्नृपान् । स्वामिपादान्तयानाय, पुरन्दर इवाऽमरान् ॥ १५३ ॥
आययुः सर्वतो भूपाः, क्षणेन भरताज्ञया । वेलयेव पयोराशेर्वीचिपरम्पराः ॥ १५४ ॥
जगर्जुर्दन्तिनस्तारं, वाजिनश्च जिहेषिरे । त्वरयन्त इव स्वामियानाय स्वाधिरोहकान् ॥ १५५ ॥
रथिनः पत्तयश्चेयुः, प्रमोदपुलकाञ्चिनः । गजाङ्गं भगवद्याने, सुगन्धिस्वर्णसन्निभम् ॥ १५६ ॥
सैन्यान्यष्टापदायोध्यं, न मान्ति स्म स्थितान्यपि । महानिर्झरिणीपूरपयांसीवाऽऽनटीद्वयम् ॥ १५७ ॥
श्वेतातपत्रैर्मायूरातपत्रैश्च वियत्यपि । मन्दाकिनीयमुनयोर्वेणीसङ्ग इवाऽभवत् ॥ १५८ ॥
सादिवीरकराग्रस्थाः, स्फुरद्भिः स्वैर्मरीचिभिः । कुन्ता अपि समुत्क्षिप्तकुन्ता इव चकाशिरे ॥ १५९ ॥
गजेन्द्रैरूर्जितं हर्षादारूढैर्वीरकुञ्जरैः । कुञ्जरा अपि चोद्गूढकुञ्जरा इव रेजिरे ॥ १६० ॥

१ गङ्गाप्रवाहत्रयम् । २ प्रयत्नादिरहितमिव । ३ पूर्वदिगभिमुखः । ४ धर्माद्यानमहावृक्षाः । ५ साध्व्यः । ६ इन्द्रः । ७ पादविक्षेप । ८ सूर्ये । ९ देवाः । १० श्रेष्ठ । ११ समाऽष्टौ ननामाऽन्वक्षश्वत् प्रभुम् खता ॥ १२ भूय सैन्यानाजूहवत् स २, खता, आ ॥ १३ सेना खता ॥ १४ महानदीपूरपयांसीव ।

चक्रितोऽप्यौत्सुकायन्त, सैन्या नन्तुं जगत्पतिम् । असिकोशस्तदसितो, नितान्तं निशितोऽभवत् ॥१६१॥
सर्वतो मिलिताः सैन्या, महाकोलाहलेन ते । द्वाःस्थेनेव न्यवेद्यन्त, मध्यस्थस्याऽपि चक्रिणः ॥ १६२ ॥
अथाऽङ्गशौचं स्नानेन, प्रचक्रे चक्रवर्त्यपि । रागद्वेषजयेनेव, मनःशौचं मुनीश्वरः ॥ १६३ ॥
भरतेशः कृतप्रायश्चित्तकौतुकमङ्गलः । पर्यधाद् वस्त्रनेपथ्यान्युज्ज्वलानि स्ववृत्तवत् ॥ १६४ ॥
मूर्ध्नि श्वेतातपत्रेण, चामराभ्यां च पार्श्वयोः । भ्राजमानः स शुभ्राभ्यां, ययौ वेश्मान्तवेदिकाम् ॥१६५॥
पूर्वाचलमिवाऽऽदित्यस्तामारुह्य महीपतिः । नभोमध्यमिवोदग्रमारुरोह महागजम् ॥ १६६ ॥
भेरीशङ्खानकप्रायवर्यतूर्यमहारवैः । अश्नुवानोऽम्बराभोगं, यन्त्रधाराजलैरिव ॥ १६७ ॥
दिशो गजैर्निरुन्धानोऽम्बुदैरिव मदाम्बुभिः । तुरङ्गैरुच्छादयन्नुर्वीं, तरङ्गैरिव सागरः ॥ १६८ ॥
हर्षत्वराभ्यां युग्मिभ्यामिव कल्पद्रैरन्वितः । सान्तःपुरपरीवारः, सोऽगादष्टापदं क्षणात् ॥ १६९ ॥
[ त्रिभिर्विशेषकम् ]
सोऽवरुह्य गजात् तस्मादारुरोह महागिरिम् । गृहस्थधर्मादुत्तुङ्गं, चारित्रमिव संयमी ॥ १७० ॥
उदग्द्वारेण समवसरणं प्रविवेश सः । प्रभुं ददर्श चाऽऽनन्दकन्दलोद्गमवारिदम् ॥ १७१ ॥
त्रिश्च प्रदक्षिणां कृत्वा, नत्वा च चरणौ प्रभोः । बद्धाञ्जलिः शिरस्येवमारेभे भरतः स्तुतिम् ॥ १७२ ॥
कुम्भैर्मानमिवाऽम्भोधेः, स्तवनं मादृशैस्तव । स्तोष्यामि तदपि स्वामिन्!, भक्त्या ह्यस्मि निरङ्कुशः॥१७३॥
त्वदाश्रितास्त्वया तुल्या, भवन्ति भविनः प्रभो! । यान्ति दीपस्य सम्पर्काद्, वर्त्तयोऽपि हि दीपताम् ॥१७४॥
माद्यदिन्द्रियदन्तीन्द्रामदीकरणभेषजम् । तव स्वामिन्! विजयते, शासनं मार्गशासनम् ॥ १७५ ॥
हत्वा घातीनि कर्माणि, शेषकर्माण्युपेक्षसे । भुवनानुग्रहायैव, मन्ये त्रिभुवनेश्वर! ॥ १७६ ॥
पादलग्नास्तव विभो!, लङ्घन्ते भविनो भवम् । उदन्वन्तं पक्षिराजपक्षमध्यगता इव ॥ १७७ ॥
जयत्यनन्तकल्याणद्रुमोल्लासनदोहदम् । विश्वमोहमहानिद्राप्रत्यूषं दर्शनं तव ॥ १७८ ॥
त्वत्पदाम्भोजसंस्पर्शाद्, दीर्यते कर्म देहिनाम् । इन्दोर्मृदुभिरप्युस्रैर्दन्तिदन्ताः स्फुटन्ति हि ॥ १७९ ॥
वृष्टिर्वारिधरस्येव, मृगाङ्कस्येव चन्द्रिका । जगन्नाथ! प्रसादस्ते, सर्वसाधारणः खलु ॥ १८० ॥
एवं जगत्पतिं स्तुत्वा, नत्वा च भरतेश्वरः । निषसाद हरेः पृष्ठे, सामानिक इवाऽमरः ॥ १८१ ॥
दिवौकसां पृष्ठतश्च, निषेदुरपरे नराः । नराणां पृष्ठतो नार्य, ऊर्ध्वा एवाऽवतस्थिरे ॥ १८२ ॥
इत्थं प्रथमवप्रान्तस्तस्थौ सङ्घश्चतुर्विधः । चतुर्विधो धर्म इवाऽनवद्ये स्वामिशासने ॥ १८३ ॥
प्राकारे च द्वितीयस्मिंस्तिर्यञ्चस्तस्थुरुन्मुदः । विरोधिनोऽपि हि मिथः, सस्नेहाः सोदरा इव ॥ १८४ ॥
तार्तीयीके पुनर्वप्रे, नृपादीनामुपेयुषाम् । देशनाकर्णनोत्कर्णास्तस्थुर्यानपरम्पराः ॥ १८५ ॥
सर्वभाषानुगामिन्या, मेघनिर्घोषधीरया । गिरा त्रिभुवनस्वामी, विदधे धर्मदेशनाम् ॥ १८६ ॥
आसक्तभारनिर्मुक्ता, इवाऽऽश्लिष्टपदा इव । कृताभिषेककल्याणा, इव ध्यानस्थिता इव ॥ १८७ ॥
प्राप्ता इवाऽहमिन्द्रत्वं, परं ब्रह्म गता इव । शृण्वन्तो देशनां हर्षात्, तस्थुस्तिर्यग्नरामराः ॥१८८॥ [युग्मम्]
देशनान्ते च भरतो, भ्रातॄनात्तमहाव्रतान् । निरीक्ष्य समनस्तापो, मनस्येवमचिन्तयत् ॥ १८९ ॥
बन्धूनां गृह्णता राज्यमेतेषां किं कृतं मया? । अनारतमतृप्तेन, भस्मकामयिनेव हा! ॥ १९० ॥
अन्येभ्योऽपि ददानोऽस्मि, लक्ष्मीं भोगफलामिमाम् । तच्च मे भस्मनि हुतमिव मूढस्य निष्फलम् ॥१९१॥
काकोऽप्याहूय काकेभ्यो, दत्त्वाऽन्नाद्युपजीवति । ततोऽपि हीनस्तदहं, भोगान् भुञ्जे विना ह्यमून् ॥१९२॥
दीयमानान् यदि पुनर्भोगान् भूयोऽपि मच्छुभैः । आददीरन्नमी भिक्षां, मासक्षपणिका इव ॥ १९३ ॥

१ उत्सुका अभवन् । २ तीक्ष्ण । ३ सम्भ्रमम् । ४ रश्मिभि । * °रुन्मदाः° स २ ॥ ५ वाहनपरम्पराः । ६ मनःसन्तापसहितः । ७ भस्मकरोगिणेव । ८ मासोपवासिनो मुनय. ।

एवमालोच्य भरतः, पादमूले जगद्गुरोः । भ्रातॄन् निमन्त्रयामास, भोगाय रचिताञ्जलिः ॥ १९४ ॥
प्रभुरप्यादिदेशैवमृज्वाशय! विशाम्पते! । भ्रातरस्ते महासत्त्वाः, प्रतिज्ञातमहाव्रताः ॥ १९५ ॥
संसारासारतां ज्ञात्वा, परितस्त्यक्तपूर्विणः । न खलु प्रतिगृह्णन्ति, भोगान् भूयोऽपि वान्तवत् ॥ १९६ ॥ [युग्मम्]
एवं निषिद्धो भोगेषु, स्वामिना भरतेश्वरः । भूयो विचिन्तयामास, सानुतापेन चेतसा ॥ १९७ ॥
यदि तावदमी त्यक्तसङ्गा भोगान् न भुञ्जते । तथाऽपि तावदाहारं, भोक्ष्यन्ते प्राणधारणम् ॥ १९८ ॥
एवं विचिन्त्य शकटशतैः पञ्चभिरुच्चकैः । आनाय्याऽऽहारमनुजान्, न्यमन्त्रयत् स पूर्ववत् ॥ १९९ ॥
स्वामी भूयोऽप्युवाचैवमन्नादि भरतेश्वर! । आधाकर्माऽऽहृतं जातु, यतीनां न हि कल्पते ॥ २०० ॥
एवं निराकृतो भूयोऽप्यकृताकारितेन सः । अन्नेनाऽऽमन्त्रयाञ्चक्रे, शोभते सर्वमार्जवे ॥ २०१ ॥
राजेन्द्र! राजपिण्डोऽपि, महर्षीणां न कल्पते । एवं भूयो निराचक्रे, चक्रभृद् धर्मचक्रिणा ॥ २०२ ॥
स्वामिना प्रतिषिद्धोऽस्मि, सर्वथेति महीयसा । अदूयताऽनुतापेन, राहुणेव निशाकरः ॥ २०३ ॥
उपलक्ष्य विलक्षत्वं, सहस्राक्षः क्ष्मापतेः । पप्रच्छ स्वामिनमिति, कतिधा स्यादवग्रहः? ॥ २०४ ॥
स्वाम्यपि व्याजहारैवं, पञ्चधा स्यादवग्रहः । इन्द्रचक्रिनृपागारिसाधुसम्बन्धिभेदतः ॥ २०५ ॥
उत्तरेणोत्तरेणैषां, पूर्वः पूर्वः प्रबाध्यते । विधिः परोक्तो बलवान्, यत् पूर्वोक्तपरोक्तयोः ॥ २०६ ॥
शक्रोऽप्यूचेऽवग्रहे मे, साधवो विहरन्ति ये । तदमीषां मया देवानुजज्ञेऽवग्रहो निजः ॥ २०७ ॥
इत्युदित्वा स्वामिपादान्, वन्दित्वाऽवस्थिते हरौ । एवं सञ्चिन्तयामास, भूयोऽपि भरतेश्वरः ॥ २०८ ॥
एभिर्मदीयं मुनिभिर्यद्यप्यन्नादि नाऽऽदृतम् । अवग्रहानुज्ञयाऽद्य, कृतार्थः स्यां तथाऽप्यहम् ॥ २०९ ॥
सम्प्रधार्येति हृदये, हृदयालुर्महीपतिः । शक्रवत् स्वामिपादाग्रेऽन्वज्ञासीत् स्वमवग्रहम् ॥ २१० ॥
सब्रह्मचारिणमिवेत्यपृच्छद् वासवं च सः । मया किं कार्यममुना, भक्तपानादिनाऽधुना? ॥ २११ ॥
गुणोत्तरेभ्यो दातव्यमिति शक्रेण भाषिते । एवं स दध्यौ मम के, विना साधून् गुणोत्तराः? ॥ २१२ ॥
आः! ज्ञातमथवा सन्ति, विरताविरताः खलु । गुणोत्तराः श्रावका मे, तेभ्यो देयमिदं मया ॥ २१३ ॥
कर्त्तव्यं तच्च निश्चित्य, चक्रवर्ती दिवस्पतेः । भास्वदाकृतिकं रूपं, दृष्ट्वा पप्रच्छ विस्मितः ॥ २१४ ॥
किमीदृशेन रूपेण, यूयं स्वर्गेऽपि तिष्ठथ? । रूपान्तरेण यदि वा, कामरूपा हि नाकिनः ॥ २१५ ॥
देवराजोऽब्रवीद् राजन्निदं रूपं न तत्र नः । यत् तत्र रूपं तन्मर्त्यैर्न द्रष्टुमपि पार्यते ॥ २१६ ॥
भरतः पुनरप्यूचे, सहस्राक्ष! ममोच्चकैः । यौष्माकीणस्य रूपस्य, दर्शने तस्य कौतुकम् ॥ २१७ ॥
तस्या दिव्याकृतेः स्वस्या, दर्शनेन दिवस्पते! । परिप्रीणय मे चक्षुश्चकोरमिव चन्द्रमाः ॥ २१८ ॥
त्वं पुमानुत्तमोऽसीति, मा तेऽभूत् प्रणयो मुधा । तदेकमङ्गावयवं, दर्शयिष्यामि भूपते! ॥ २१९ ॥
इत्युदीर्य शुनासीरो, योग्यालङ्कारशालिनीम् । स्वाङ्गुलीं दर्शयामास, जगद्वेश्मैकदीपिकाम् ॥ २२० ॥
पार्वणेन्दुमिवोदन्वान्, विकसद्भासुरद्युतिम् । तां महेन्द्राङ्गुलीं दृष्ट्वा, मुमुदे मेदिनीपतिः ॥ २२१ ॥
भगवन्तं प्रणम्याऽथ, राजानमनुमान्य च । शतमन्युस्तिरोऽधत्त, सन्ध्याभ्रमिव तत्क्षणात् ॥ २२२ ॥
स्वामिनं प्रणिपत्याऽथ, चक्रवर्त्यपि शक्रवत् । कृत्यानि चिन्तयंश्चित्ते, विनीतां नगरीं ययौ ॥ २२३ ॥
शक्राङ्गुलीं न्यस्य रात्रौ, भरतोऽष्टाह्निकां व्यधात् । भक्तौ स्नेहेऽपि च सतां, कर्त्तव्यं तुल्यमेव हि ॥ २२४ ॥
इन्द्रस्तम्भं समुत्तम्भ्य, ततः प्रभृति सर्वतः । इन्द्रोत्सवः समारब्धो, लोकैरद्याऽपि वर्तते ॥ २२५ ॥
विजहार ततोऽन्यत्राऽष्टापदाद् भगवानपि । भव्याब्जबोधकृत् क्षेत्रात्, क्षेत्रान्तरमिवाऽर्यमा ॥ २२६ ॥
भरतोऽथ समाहूय, श्रावकानभ्यधादिदम् । गृहे मदीये भोक्तव्यं, युष्माभिः प्रतिवासरम् ॥ २२७ ॥
कृष्यादि न विधातव्यं, किन्तु स्वाध्यायतत्परैः । अपूर्वज्ञानग्रहणं, कुर्वाणैः स्थेयमन्वहम् ॥ २२८ ॥

---

१ पञ्चशतापसहितेन । २ सरलत्वे । ३ तीर्थंकरेण । ४ इन्द्र । ५ इन्द्रे । ६ प्रार्थना । ७ इन्द्र ।

भुक्त्वा च मेऽन्तिकगतैः, पठनीयमिदं सदा । जितो भवान् वर्धते भीस्तस्मान्मा हन मा हन ॥ २२९ ॥
प्रतिपद्य तथा ते तु, भुञ्जते स्म तदोकसि । तथा च तद् वचः पेठुः, स्वाध्यायमिव तत्पराः ॥ २३० ॥
रतिमग्नो देव इव, नृदेवोऽपि प्रमद्वरः । तच्छब्दाकर्णनादेव, किञ्चिदेवं व्यचिन्तयत् ॥ २३१ ॥
जितोऽस्मि केन ? हुं ज्ञातं, कषायैर्वर्धते च भीः । कुतो मे तेभ्य एवेति, मा हन्यां प्राणिनस्ततः ॥२३२॥
एवं च सारयन्त्येते, नित्यमेव विवेकिनः । अहो ! मम प्रमादित्वमहो ! विषयलुब्धता ॥ २३३ ॥
औदासीन्यमहो ! धर्मेऽप्यहो ! संसाररागिता । अहो ! महापुरुषतोचिताचारविपर्ययः ॥ २३४ ॥
अनया चिन्तया धर्मध्यानं प्रावर्त्तत क्षणम् । गङ्गाप्रवाहः क्षाराब्धाविव तस्मिन् प्रमादिनि ॥ २३५ ॥
भूयोऽपि भूपः शब्दादिष्विन्द्रियार्थेष्वसज्यत । कर्म भोगफलं कोऽपि, नाऽन्यथा कर्तुमीश्वरः ॥२३६॥
सूदाध्यक्षैस्तथाऽन्येद्युरेवं व्यज्ञपि भूपतिः । श्रावकोऽश्रावको वाऽपि, भूयस्त्वान्नोपलक्ष्यते ॥ २३७ ॥
आदिशद् भरतः सूदान्, श्राद्धा यूयमपि स्थ यत् । परीक्षापूर्वकं देयमतः प्रभृति भोजनम् ॥ २३८ ॥
को भवान् ? श्रावकोऽहं, तद्व्रतानि कति? शंस नः। तानि न श्रावकाणां स्युः, किन्त्वस्माकं सदाऽपि हि ॥२३९॥
अणुव्रतानि पञ्चाऽथ, सप्त शिक्षाव्रतानि च । एवं परीक्षानिर्व्यूढास्तैस्तेऽदर्श्यन्त भूपतेः ॥ २४० ॥
ज्ञानदर्शनचारित्रलिङ्गं रेखात्रयं नृपः । वैकक्ष्यमिव *काकिण्या, विदधे शुद्धिलक्षणम् ॥ २४१ ॥
अर्द्धवर्षेऽर्द्धवर्षे च, परीक्षां चक्रिरे नवाः । श्रावकाः $काकिणीरत्नेनाऽऽलम्भ्यन्त तथैव हि ॥ २४२ ॥
तल्लाञ्छना भोजनं ते, लेभिरेऽथाऽपठन्निदम् । जितो भवानित्याद्युच्चैर्माहनास्ते ततोऽभवन् ॥ २४३ ॥
निजान्यपत्यरूपाणि, साधुभ्यो ददिरे च ते । तन्मध्यात् स्वेच्छया कैश्चिद्, विरक्तैर्व्रतमाददे ॥ २४४ ॥
परीषहासहैः कैश्चिच्छ्रावकत्वमुपाददे । तथैव बुभुजे तैश्च, †काकिणीरत्नलाञ्छितैः ॥ २४५ ॥
भूभुजा दत्तमित्येभ्यो, लोकोऽपि श्रद्धया ददौ । पूजितैः पूजितो यस्मात्, केन केन न पूज्यते ? ॥२४६॥
अर्हत्स्तुतिमुनिश्राद्धसामाचारीपवित्रितान् । आर्यान् वेदान् व्यधाच्चक्री, तेषां स्वाध्यायहेतवे ॥ २४७ ॥
क्रमेण माहनास्ते तु, ब्राह्मणा इति विश्रुताः । ‡काकिणीरत्नलेखास्तु, प्रापुर्यज्ञोपवीतताम् ॥ २४८ ॥
इयं भरतराज्येऽभूत्, स्थितिरर्कयशाः पुनः । स्वर्णयज्ञोपवीतानि, चक्रे §काकिण्यभावतः ॥ २४९ ॥
महायशःप्रभृतयः, केचिद् रौप्याणि चक्रिरे । पट्टसूत्रमयान्यन्येऽपरे सूत्रमयानि तु ॥२५०॥ [युग्मम्]
भरतादादित्ययशास्ततश्चाऽऽसीन्महायशाः । अतिबलो बलभद्रो, बलवीर्यस्ततोऽपि च ॥२५१॥
कीर्तिवीर्यो, जलवीर्यो, दण्डवीर्यस्ततोऽष्टमः । इत्यष्टौ पुरुषान् यावदाचारोऽयं प्रवृत्तवान् ॥ २५२ ॥
एभिर्भूपैश्च बुभुजे, भरतार्धं समन्ततः । भगवन्मुकुटः शक्रोपनीतो मूर्ध्न्यधारि च ॥ २५३ ॥
शेषैर्महाप्रमाणत्वान्न स वोढुमपार्यत । हस्तिभिर्हस्तिभारो हि, वोढुं शक्येत नाऽपरैः ॥ २५४ ॥
जज्ञे साधुविच्छेदोऽन्तर्नवमदशमार्हतोः । ¶एवं सप्तस्वन्तरेषु, जिनानामेष वृत्तवान् ॥ २५५ ॥
वेदाश्चाऽर्हत्स्तुतियतिश्राद्धधर्ममयास्तदा । पश्चादनार्याः सुलसायाज्ञवल्क्यादिभिः कृताः ॥ २५६ ॥
इतश्च भरतस्तस्थौ, दिवसानतिवाहयन् । श्राद्धदानैः कामकेल्या, विनोदैरपरैरपि ॥ २५७ ॥
अवनिं पावयन् पादैर्गगनं चन्द्रमा इव । अन्येद्युर्भगवानागादष्टापदमहागिरिम् ॥ २५८ ॥
सद्यश्च तत्र समवसरणे निर्मिते सुरैः । आसाञ्चक्रे जगन्नाथो, विदधे धर्मदेशनाम् ॥ २५९ ॥
तथास्थितो जगत्स्वामी, समेत्याऽऽयुक्तपूरुषैः । शशंसे भरतेशाय, त्वरितैरनिलैरिव ॥ २६० ॥
पूर्वप्रमाणं तेभ्योऽदाद्, भरतः पारितोषिकम् । दिने दिने कल्पतरुर्ददानो न हि हीयते ॥ २६१ ॥

---

१ पाचकाधिपतिभि । २ तिर्यक्कक्षावलम्बी हारभेद । * काकण्या खता ॥ $ काकणी° खंता ॥ † काकणी° खता ॥ ‡ काकणी° खंता ॥ § काकण्य° खंता ॥ ३ सुविधिशीतलाख्यतीर्थकृतोः । ¶ इतः खता ॥ ४ नियुक्तपुरुषैः ।

*अष्टापदे च समवसृतं स्वामिनमेत्य सः । प्रदक्षिणीकृत्य नमस्कृत्य चक्रीति तुष्टुवे ॥ २६२ ॥
त्वत्प्रभावात् स्तवीमि त्वामप्राज्ञोऽपि जगत्पते ! । शशिनं पश्यतां दृष्टिर्मन्दाऽपि हि पटूयते ॥ २६३ ॥
मोहान्धकारनिर्मग्नजगदालोकदीपक ! । आकाशवदनन्तं ते, स्वामिन् ! जयति केवलम् ॥ २६४ ॥
प्रमादनिद्रामग्नानां, नाथ ! कार्येण मादृशाम् । एवं गतागतानि त्वं, करोष्यर्क इवाऽसकृत् ॥ २६५ ॥
जन्मलक्षार्जितं कर्म, त्वदालोकाद् विलीयते । कालेन दृषदीभूतमप्याज्यं[3] वह्निना द्रवेत् ॥ २६६ ॥
एकान्तसुषमातोऽपि, साध्वी सुषमदुःषमा । यत्र कल्पद्रुमेभ्यस्त्वं, विशिष्टफलदोऽभवः ॥ २६७ ॥
समस्तभुवनेशेदं, भुवनं भूषितं त्वया । राज्ञा पुरीव ग्रामेभ्यो, भुवनेभ्यः प्रकृष्यते ॥ २६८ ॥
पिता माता गुरुः स्वामी, यत् सर्वेऽपि न कुर्वते । एकोऽप्यनेकीभूयेव, त्वं हितं विदधासि तत् ॥२६९॥
निशा निशाकरेणेव, हंसेनेव महासरः । वदनं तिलकेनेव, शोभते भुवनं त्वया ॥ २७० ॥
इति स्तुत्वा नमस्कृत्य, भगवन्तं यथाविधि । निषसाद यथास्थानं, विनयी भरतेश्वरः ॥ २७१ ॥
आयोजनविसर्पिण्या, सर्वभाषानुयातया । भारत्या भगवान् विश्वोपकृत्यै देशनां व्यधात् ॥ २७२ ॥
देशनाविरतौ नत्वा, स्वामिनं भरतेश्वरः । रोमाञ्चितवपुर्बद्धाञ्जलिरेवं व्यजिज्ञपत् ॥ २७३ ॥
नाथेह भरते यूयं, यथा विश्वहितास्तथा । कत्यन्ये भाविनो धर्मचक्रिणश्चक्रिणः कति ? ॥ २७४ ॥
तेषां च नगरं गोत्रं, पितरावभिधाऽऽयुषी । वर्णं मानान्तरे दीक्षागती च ज्ञापय प्रभो ! ॥ २७५ ॥
अथाऽऽचचक्षे भगवान्, भरते भाविनोऽपरे । त्रयोविंशतिरर्हन्त, एकादश च चक्रिणः ॥ २७६ ॥
जिनौ च विंशद्वाविंशौ, तत्र गोतमवंशजौ । काश्यपान्वयजास्त्वन्ये, सर्वे निर्वाणगामिनः ॥ २७७ ॥
अयोध्यायां जितशत्रु-विजयातनयोऽजितः । द्वासप्ततिपूर्वलक्षायुष्को निष्कसमद्युतिः ॥ २७८ ॥
अर्द्धपञ्चमकोदण्डशतान्युत्तुङ्गविग्रहः । पूर्वाङ्गोनपूर्वलक्षपर्यायोऽसौ भविष्यति ॥ २७९ ॥
तथा मदीयनिर्वाणाऽजितनिर्वाणकालयोः । सागरोपमकोटीनां, लक्षाः पञ्चाशदन्तरम् ॥ २८० ॥
श्रावस्त्यां जितारि-सेनाभूः स्वर्णाभश्च सम्भवः । षष्टिपूर्वलक्षायुष्कश्चतुर्धन्वशतोच्छ्रयः ॥ २८१ ॥
चतुःपूर्वाङ्गहीना च, पूर्वलक्षाऽस्य तु व्रते । सागरोपमकोटीनां, लक्षाणि त्रिंशदन्तरम् ॥ २८२ ॥
विनीतापुर्यां संवर-सिद्धार्थाजोऽभिनन्दनः । पञ्चाशत्पूर्वलक्षायुः, सार्द्धधन्वशतत्रयः ॥ २८३ ॥
स्वर्णाभः पूर्वलक्षाऽष्टपूर्वाङ्गोनाऽस्य तु व्रते । सागरोपमकोटीनां, दशलक्षाणि चाऽन्तरम् ॥ २८४ ॥
तत्पुर्यां सुमतिर्मेघ-मङ्गलाभूः सुवर्णरुक् । सद्विचत्वारिंशत्पूर्वलक्षायुस्त्रिधनुःशतः ॥ २८५ ॥
द्वादशपूर्वाङ्गहीना, पूर्वलक्षाऽस्य तु व्रते । सागरोपमकोटीनां, नवलक्षाणि चाऽन्तरम् ॥ २८६ ॥
कौशाम्ब्यां धर-सुसीमासूनुः पद्मप्रभोऽरुणः । त्रिंशत्पूर्वलक्षायुष्कः, सार्द्धधन्वशतद्वयः ॥२८७॥
षोडशपूर्वाङ्गन्यूनो, पूर्वलक्षोऽस्य तु व्रते । अब्धिकोटिसहस्राणां, नवतिः पुनरन्तरम् ॥ २८८ ॥
वाराणस्यां तु प्रतिष्ठ-पृथ्वीसूनुः सुवर्णरुक् । सुपार्श्वो विंशतिपूर्वलक्षायुर्द्विधनुःशतः ॥ २८९ ॥
विंशत्यङ्गविहीनोऽस्य, पूर्वलक्षो व्रते पुनः । सागरोपमकोटीनां, सहस्राणि नवाऽन्तरम् ॥ २९० ॥
चन्द्रानने महासेन-लक्ष्मणाभूः शशिप्रभः । दशपूर्वलक्षायुष्कः, शुभ्रः सार्द्धधनुःशतः ॥२९१॥
चतुर्विंशत्यङ्गहीना, पूर्वलक्षाऽस्य तु व्रते । सागरोपमकोटीनां शतानि नव चाऽन्तरम् ॥ २९२ ॥
काकन्द्यां सुग्रीव-रामातनयः सुविधिः सितः । पूर्वलक्षद्वयायुष्कः, एकधन्वशतोच्छ्रयः ॥२९३॥
अष्टाविंशत्यङ्गहीना, पूर्वलक्षाऽस्य तु व्रते । सागरोपमकोटीनां, नवतिः पुनरन्तरम् ॥ २९४ ॥
शीतलो भद्रिलपुरे, नन्दा-दृढरथात्मजः । स्वर्णाभः पूर्वलक्षायुर्धनुर्नवतिमुच्छ्रितः ॥ २९५ ॥

---

* इमौ द्वौ २६२,२६३ तमौ श्लोकौ पुस्तके पतितौ । [1] समर्थो भवति । [2] स्त्यानीभूतम् । [3] घृतम् । [4] सर्वभाषानुगामिन्या । [5] तीर्थंकराः । [6] नाम । [7] सुवर्णकान्ति । [8] शरीरम् । [9] चत्वारिंशत्पूर्वलक्षायुर्धनुस्त्रिशतीमितः स २॥

अमुष्य तु व्रते पूर्वसहस्राः पञ्चविंशतिः । अन्तरं तु सरिन्नाथोपमानां कोटयो नव ॥ २९६ ॥
सिंहपुरे विष्णुराज-विष्ण्वोः सूनुः सुवर्णरुक् । श्रेयांसस्तु जिनोऽशीतिशरासनसमुन्नतिः ॥२९७॥
वर्षाणां चतुरशीत्या, लक्षैः प्रमितजीवितः । अमुष्य तु व्रते वर्षलक्षाणामेकविंशतिः ॥ २९८ ॥
षड्विंशत्याऽब्दसहस्रैः, षट्षष्ट्या वर्षलक्षकैः । तथाऽर्णवशतेनोनाऽर्णवकोटिर्जिनान्तरम् ॥ २९९ ॥
चम्पापुर्यां वासुपूज्यो, वसुपूज्य-जयात्मजः । द्वासप्तत्यब्दलक्षायुर्धनुःसप्ततिमुन्नतः ॥ ३०० ॥
रक्तोऽस्य चतुःपञ्चाशद्वर्षलक्षाणि तु व्रतम् । तथा सागरोपमाणां, चतुःपञ्चाशदन्तरम् ॥ ३०१ ॥
काम्पिल्ये च कृतवर्म-श्यामाभूर्विमलो जिनः । षष्टिवत्सरलक्षायुः, षष्टिधन्वा सुवर्णरुक् ॥३०२॥
अमुष्य च पञ्चदश वर्षलक्षाणि तु व्रतम् । वासुपूज्यान्ततन्मोक्षान्तरे च त्रिंशदर्णवाः ॥ ३०३ ॥
अयोध्यायां सिंहसेन-सुयशोभूः सुवर्णरुक् । अनन्तस्त्रिंशल्लक्षाब्दायुः पञ्चाशद्धनून्नतिः ॥३०४॥
सार्द्धानि वर्षलक्षाणि, सप्त तस्य पुनर्व्रतम् । विमलमोक्षतन्मोक्षान्तरे च नव सागराः ॥ ३०५ ॥
धर्मो रत्नपुरे भानु-सुव्रताभूः सुवर्णरुक् । दशाब्दलक्षायुः पञ्चचत्वारिंशद्धनून्नतिः ॥ ३०६ ॥
पर्यायस्तस्य वर्षाणां, सार्द्धं लक्षद्वयं खलु । अनन्तमोक्षतन्मोक्षान्तरेऽर्णवचतुष्टयम् ॥ ३०७ ॥
पुरे गजपुरे शान्तिर्विश्वसेना-ऽचिरासुतः । स्वर्णवर्णोऽब्दलक्षायुश्चत्वारिंशद्धनून्नतिः ॥ ३०८ ॥
पञ्चविंशतिरब्दानां, सहस्राण्यस्य तु व्रते । अब्धित्रयं पल्यचतुर्भागत्रिकोनमन्तरम् ॥ ३०९ ॥
कुन्थुर्गजपुरे स्वर्णवर्णः सूर-श्रियोः सुतः । पञ्चनवत्यब्दसहस्रायुः पल्यार्द्धकान्तरः ॥ ३१० ॥
पञ्चत्रिंशद्धनुस्तुङ्गः, पर्यायेऽस्य तु वत्सराः । त्रयोविंशतिसहस्राः, सार्द्धसप्तशतानि च ॥ ३११ ॥
स्वर्णाभोऽरो गजपुरे, देवी-सुदर्शनात्मजः । चतुरशीत्यब्दसहस्रायुस्त्रिंशद्धनून्नतिः ॥ ३१२ ॥
पर्याये तस्य वर्षाणां, सहस्राण्येकविंशतिः । पल्यतुर्यांशोऽब्दकोटिसहस्रोनो जिनान्तरम् ॥ ३१३ ॥
मल्लिनाथो मिथिलायां, कुम्भ-प्रभावतीप्रसूः । पञ्चविंशतिधन्वाऽब्दकोटीसहस्रकान्तरः ॥३१४॥
नीलोऽस्याऽब्दसहस्राणि, पञ्चपञ्चाशदायुषि । एकवर्षशतोनानि, पूर्वोक्ताब्दानि तु व्रते ॥ ३१५ ॥
पद्मा-सुमित्रसू राजगृहे कृष्णस्तु सुव्रतः । त्रिंशद्वर्षसहस्रायुर्धनुर्विंशतिमुन्नतः ॥ ३१६ ॥
सप्तवर्षसहस्राणि, सार्द्धान्येतस्य तु व्रतम् । चतुष्पञ्चाशदब्दानां, लक्षाणि तु जिनान्तरम् ॥ ३१७ ॥
मिथिलायां स्वर्णवर्णो, वप्रा-विजयभूर्नमिः । दशवर्षसहस्रायुः, पञ्चदशधनून्नतिः ॥ ३१८ ॥
समासहस्रद्वितयं, सार्द्धमेतस्य तु व्रतम् । मोक्षान्तरं सुनिनम्योर्वर्षलक्षाः षडेव हि ॥ ३१९ ॥
*शिवा-समुद्रविजयात्मजः शौर्यपुरे शितिः । नेमिर्दशधनुस्तुङ्गः, समासहस्रजीवितः ॥ ३२० ॥
शतानि सप्त वर्षाणां, प्रव्रज्यायाममुष्य तु । मुक्त्यन्तरे नमिनेम्योर्वर्षलक्षाणि पञ्च तु ॥ ३२१ ॥
वामा-ऽश्वसेनभूः पार्श्वो, वाराणस्यां विनीलरुक् । नवहस्तप्रमाणाङ्गः, शतवत्सरजीवितः ॥३२२॥
†वर्षाणां सप्ततिस्तस्य, ‡व्रतेऽन्तरे तु वत्सराः । सहस्राणि त्र्यशीतिः सार्द्धानि सप्तशतानि च ॥ ३२३ ॥
कुण्डग्रामे महावीरः, सिद्धार्थ-त्रिशलासुतः । स्वर्णाभः सप्तहस्ताङ्गो, द्वासप्तत्यब्दजीवितः ॥३२४॥
द्वाचत्वारिंशदब्दानि, प्रव्रज्यायाममुष्य च । पार्श्ववीरान्तरालं तु, सार्द्धं वर्षशतद्वयम् ॥ ३२५ ॥
काश्यपाश्चक्रिणः स्वर्णवर्णा अष्टैषु मोक्षगाः । त्वं मयीवाऽजिते तत्राऽयोध्यायां सगरः खलु ॥ ३२६ ॥
तुक् सुमित्र-यशोमत्योः, सार्द्धधन्वचतुःशतः । द्वासप्तत्या पूर्वलक्षैः, स तु प्रमितजीवितः ॥ ३२७ ॥
श्रावस्त्यां मघवा भद्रा-समुद्रविजयात्मजः । पञ्चाब्दलक्षायुः सार्द्धद्विचत्वारिंशधन्वकः ॥ ३२८ ॥
सनत्कुमारोऽब्दलक्षत्रयायुर्हस्तिनापुरे । प्राग्मानादेकधन्वोनः, सहदेव्यश्वसेनभूः ॥ ३२९ ॥

---

* इमौ द्वौ ३२०, ३२१ तमौ श्लोकौ खं पुस्तके नोपलभ्येते ॥ १ श्यामवर्णं । † वर्षाणि खता ॥ ‡ व्रतेऽगादन्तरे पुन. सं २, आ, [illegible] पुनः सं १ ॥ २ काश्यपगोत्रिण. । ३ पुत्रः ।

धर्मशान्त्यन्तरे चैतौ, तृतीयस्वर्गगामिनौ । शान्तिः कुन्थुररश्चैतेऽर्हन्तश्चक्रभृतोऽपि च ॥ ३३० ॥
तारा-कृतवीर्यसुतः, सुभूमो हस्तिनापुरे । षष्टिवर्षसहस्रायुरष्टाविंशिधनून्नतिः ॥ ३३१ ॥
अरमल्ल्यन्तरे भावी, सप्तमं नरकं गमी । वाराणस्यां पुनः पद्मो, ज्वाला-पद्मोत्तरात्मजः ॥३३२॥
त्रिंशद्वर्षसहस्रायुर्धनुर्विंशतिमुच्छ्रितः । काम्पिल्ये हरिषेणस्तु, मेरा-महाहरिप्रसूः ॥ ३३३ ॥
दशवर्षसहस्रायुः, पञ्चदशधनून्नतिः । मुनिनम्योर्विहरतोर्द्वावप्येतौ भविष्यतः ॥ ३३४ ॥
वप्रा-विजयभू राजगृहे द्वादशकार्मुकः । जयस्त्र्यब्दसहस्रायुर्नमिनेमिजिनान्तरे ॥ ३३५ ॥
काम्पिल्ये ब्रह्मदत्तस्तु, चुलनी-ब्रह्मनन्दनः । सप्तवर्षशतायुष्कः, सप्तधन्वसमुन्नतिः ॥ ३३६ ॥
श्रीनेमिनाथश्रीपार्श्वनाथतीर्थान्तरे त्वसौ । रौद्रध्यानपरो गामी, सप्तमीं नरकावनीम् ॥ ३३७ ॥
तत्र प्रभुरपृष्टोऽपीत्याख्यचक्र्यर्द्धविक्रमाः । त्रिखण्डावनिभोक्तारो, वासुदेवा नवाऽसिताः ॥ ३३८ ॥
अष्टमः काश्यपकुलस्तेषु शेषास्तु गौतमाः । सापत्ना भ्रातरस्तेषां, बलदेवाः सिता नव ॥ ३३९ ॥
त्रिपृष्ठः केशवस्तत्र, नगरे पोतनाह्वये । प्रजापति-मृगावत्योः, सुतोऽशीतिधनून्नतिः ॥ ३४० ॥
महीं विहरमाणे तु, श्रेयांसजिनपुङ्गवे । चतुरशीत्यब्दलक्षायुरन्त्यं नरकं गमी ॥ ३४१ ॥
द्वारवत्यां द्विपृष्ठस्तु, धनुःसप्ततिमुन्नतः । भुवं विहरमाणे तु, वासुपूज्यजिनेश्वरे ॥ ३४२ ॥
द्वासप्ततिवर्षलक्षायुः पद्मा-ब्रह्मनन्दनः । गमिष्यति च सोऽवश्यं, षष्ठीं नरकमेदिनीम् ॥ ३४३ ॥
द्वारवत्यां स्वयम्भूस्तु, धनुःषष्टिसमुन्नतः । षष्टिवत्सरलक्षायुर्विमलस्वामिवन्दकः ॥ ३४४ ॥
भद्रराजस्य पृथिवीदेव्याश्चैष तनूरुहः । गमिष्यति च पूर्णायुः, षष्ठिकां नरकावनीम् ॥ ३४५ ॥
तस्यामेव नगर्यां तु, पुरुषोत्तम आख्यया । पञ्चाशत्कार्मुकोत्तुङ्गः, सोम-सीतातनूरुहः ॥ ३४६ ॥
वर्त्तमाने जिनेऽनन्ते, त्रिंशल्लक्षाब्दजीवितः । समाप्तायुरसौ षष्ठीं, नरकोर्वीं गमिष्यति ॥ ३४७ ॥
अश्वपुरे तु पुरुषसिंहो नाम्ना भविष्यति । धर्मनाथजिने पञ्चचत्वारिंशद्धनून्नतिः ॥ ३४८ ॥
शिवराजा-ऽमृतासूनुर्वर्षलक्षाण्यसौ दश । आयुरनुपाल्य षष्ठीं, नरकोर्वीं गमिष्यति ॥ ३४९ ॥
चक्रपुर्यां तु पुरुषपुण्डरीकोऽभिधानतः । अरमल्ल्यन्तरे लक्ष्मीवती-महाशिरःसुतः ॥ ३५० ॥
एकोनत्रिंशतं चापानयमुन्नतविग्रहः । पञ्चषष्टिसहस्राब्दायुः षष्ठं नरकं गमी ॥ ३५१ ॥
दत्तो वाराणसीपुर्यां, षड्विंशतिधनून्नतिः । जिनान्तरे तु तत्रैव, शेषवत्यग्निसिंहभूः ॥ ३५२ ॥
षट्पञ्चाशत्सहस्राणि, वर्षाणामस्य जीवितम् । गमिष्यति च पूर्णायुः, पञ्चमीं नरकावनीम् ॥ ३५३ ॥
नारायण इति ख्यातः, पुरे राजगृहाह्वये । द्वादशाब्दसहस्रायुर्मुनिनम्यन्तरे त्वसौ ॥ ३५४ ॥
सुमित्रादशरथभूर्धनुःषोडशकोन्नतिः । गमिष्यति च पूर्णायुस्तुरीयां नरकावनीम् ॥ ३५५ ॥
कृष्णस्तु मथुरापुर्यां, देवकीवसुदेवभूः । वन्दिता नेमिनाथस्य, दशधन्वसमुच्छ्रयः ॥ ३५६ ॥
सहस्रमेकं वर्षाणामायुरस्य भविष्यति । ततो नरकमेदिन्यां, तृतीयायां गमिष्यति ॥ ३५७ ॥
प्रथमो बलदेवस्तु, तत्र भद्रासुतोऽचलः । पञ्चाशीतिवर्षलक्षाण्यायुरस्य भविष्यति ॥ ३५८ ॥
द्वितीयस्तु बलदेवो, भावी विजय आख्यया । सुभद्राभूः पञ्चसप्तत्यब्दलक्षाणि जीविता ॥ ३५९ ॥
तृतीयस्तु बलदेवो, भद्र इत्यभिधानतः । सुप्रभाभूः पञ्चषष्टिवर्षलक्षाणि जीविता ॥ ३६० ॥
चतुर्थस्तु बलदेवः, सुप्रभो नामधेयतः । सौदर्शनेयोऽब्दपञ्चपञ्चाशल्लक्षजीवितः ॥ ३६१ ॥
पञ्चमो बलदेवस्तु, भावी नाम्ना सुदर्शनः । सप्तदशवर्षलक्षजीवितो विजयासुतः ॥ ३६२ ॥
षष्ठो बलो वैजयन्त्याः, सूनुरानन्द आख्यया । पञ्चाशीतिसहस्राणि, वर्षाणामस्य जीवितम् ॥ ३६३ ॥

१ पद्माख्यश्चक्री । * ० नम्यन्तराले तु, द्वा° खता ॥ २ जयाख्यश्चक्री । ३ कृष्णवर्णा° । ४ गौतमकुलाः । † इत आरभ्य ३४८ पर्यन्तं श्लोका· खंपुस्तके पतिताः ॥ ‡ इमौ द्वौ ३५४, ३५५ तमौ श्लोकौ खंपुस्तके न दृश्येते । ¶ कैकेयीद° खता, सं १,२ ॥

सप्तमो बलदेवस्तु, नन्दनो नामधेयतः । पञ्चषष्टिसहस्राब्दायुर्जयन्तीसमुद्भवः ॥ ३६४ ॥
अष्टमस्तु बलदेवः, पद्मोऽपराजितासुतः । पञ्चदश सहस्राणि, वर्षाणामस्य जीवितम् ॥ ३६५ ॥
नवमस्तु बलदेवो, राम इत्यभिधानतः । द्वादशाब्दशतायुष्को, रोहिणीतनुसम्भवः ॥ ३६६ ॥
तत्राऽष्टौ मोक्षगा[*] रामो, ब्रह्मकल्पं गमिष्यति । उत्सर्पिण्यां स भरते, कृष्णतीर्थे तु सेत्स्यति[1]॥३६७॥
अश्वग्रीवस्तारकश्च, मेरको मधुरेव च। निशुम्भ-बलि-प्रह्लाद-लङ्केश-मगधेश्वराः॥३६८॥
वासुदेवप्रतिमल्लाः[2], सर्वे चक्रप्रहारिणः । हनिष्यन्ते निजैश्चक्रैर्वासुदेवकराङ्गतैः ॥ ३६९ ॥
श्रुत्वा तद् भरताधीशो, भव्यसत्त्वैः समाकुलाम्। दृष्ट्वा च तां सभां हृष्टः, पप्रच्छ स्वामिनं पुनः॥३७०॥
जगत्त्रय इवैकत्र, सामस्त्येनाऽपि तस्थुषि । तिर्यग्नरामरमये, सदसि त्रिजगत्पते! ॥ ३७१ ॥
अत्र किं कश्चिदप्यस्ति, भगवन्! भगवानिव?। तीर्थं प्रवर्त्त्य भरतक्षेत्रं यः पावयिष्यति॥३७२॥[युग्मम्]
शशंस भगवानेवं, य एष तव नन्दनः । मरीचिर्नामधेयेन, परिव्राजक आदिमः ॥ ३७३ ॥
आर्त्तरौद्रध्यानहीनः, सम्यक्त्वेन च शोभितः । ध्यायंश्चतुर्विधं धर्मध्यानं च रहसि स्थितः ॥ ३७४ ॥
दुकूलमिव पङ्केन, निःश्वासेनेव दर्पणः । कर्मणा मलिनोऽमुष्य, जीवः सम्प्रति वर्त्तते ॥ ३७५ ॥
शुक्लध्यानाग्निसंयोगादग्निशौचमिवांऽशुकम् । जात्यं सुवर्णमिव च, स क्रमाच्छुद्धिमेष्यति ॥ ३७६ ॥
इहैव भरतक्षेत्रे, नगरे पोतनाभिधे । त्रिपृष्ठो नाम दाशार्हः, प्रथमोऽसौ भविष्यति ॥ ३७७ ॥
क्रमात् प्रत्यग्विदेहेषु, मूकायां पुरि चक्र्यसौ। तुग् धनञ्जय-धारिण्योः, प्रियमित्रो भविष्यति॥३७८॥
चिरं च संसृत्य भवे, भविष्यत्यत्र भारते । अयं नाम्ना महावीरश्चतुर्विंशस्तु तीर्थकृत् ॥ ३७९ ॥
इति श्रुत्वा स्वाम्यनुज्ञामादाय भरतेश्वरः। मरीचिं वन्दितुं भक्त्या, भगवन्तमिवाऽभ्यगात् ॥ ३८० ॥
नाम्ना त्रिपृष्ठः प्रथमो, दाशार्हाणां भविष्यति । चक्रवर्त्ती विदेहेषु, प्रियमित्राभिधश्च यत् ॥ ३८१ ॥
न तद् वन्दे न चेदं ते, पारिव्राज्यं न जन्म च। किन्तु वन्दे चतुर्विंशो, यत् त्वमर्हन् भविष्यति॥३८२॥
इति ब्रुवाणः शिरसि, बद्धाञ्जलिपुटस्ततः । तं त्रिः प्रदक्षिणीकृत्य, ववन्दे भरतेश्वरः ॥ ३८३ ॥
[ त्रिभिर्विशेषकम् ]

अथ नत्वा जगन्नाथं, जगाम जगतीपतिः । अयोध्यां नगरीं नागराजो भोगवतीमिव ॥ ३८४ ॥
मरीचिस्तद्गिरा दृप्यंस्त्रिः करास्फोटपूर्वकम् । जातप्रमोदोऽभ्यधिकं, वक्तुमेवं प्रचक्रमे ॥ ३८५ ॥
यद्याद्यो वासुदेवानां, विदेहेषु च चक्रभृत् । अन्त्योऽर्हन् भविताऽस्मीति, पूर्णमेतावता मम ॥ ३८६ ॥
पितामहोऽर्हतामाद्यश्चक्रिणां च पिता मम । दाशार्हाणामहं चेति, श्रेष्ठं कुलमहो! मम ॥ ३८७ ॥
त्रैलोक्यमेकतः सर्वमेकतश्च कुलं मम । एकतोऽन्यद् गजकुलं, यथैरावण एकतः ॥ ३८८ ॥
ग्रहेभ्य इव चण्डांशुरुडुभ्य इव चन्द्रमाः । सर्वेभ्योऽपि कुलेभ्यो मे, कुलमेकं प्रकृष्यते ॥ ३८९ ॥
एवमात्मकुलमदं, कुर्वाणेन मरीचिना । लूतयेव पुटं नीचगोत्रं सूत्रितमात्मनः ॥ ३९० ॥
पुण्डरीकप्रभृतिभिर्वृतो गणधरैरथ । नाथोऽप्यचालीत् प्रपुनन्, विहारव्याजतो महीम् ॥ ३९१ ॥
कृपया पुत्रवद् धर्मकौशलं कौशलान् नयन् । तपस्सुमुग्धान् मगधान्, कुर्वन् परिचितानिव ॥ ३९२ ॥
काशीन् विकाशयन् पद्मकोशानिव दिवाकरः । आनन्दयन् दशार्णांश्चाऽर्णवानिव निशाकरः ॥ ३९३ ॥
देशनासुधया चेदींश्चेतयन् मूर्च्छितानिव । मालवैर्मालयन् धर्मधुरां वत्सतरैरिव ॥ ३९४ ॥
कुर्वन् पापविपन्नाशान्निर्जरानिव गूर्जरान् । सौराष्ट्रान् पटयन् वैद्य, इव शत्रुञ्जयं ययौ ॥ ३९५ ॥
[ पञ्चभिः कुलकम् ]

*सिद्धिगा खता॥ १ सिद्धिं गमिष्यति । २ प्रतिवासुदेवा । ३ पुत्र॰ । ४ परिव्राजकत्वम् । ५ नागपुरीम् । ६ चरमतीर्थंकरः श्रीमहावीरः । ७ नक्षत्रेभ्य. । ८ "करोळियो" इति भाषायाम् । ९ पवित्रीकुर्वन् । १० पापविपत्तिविनाशात् । ११ देवानिव ।

विदेशमिव वैताढ्यं, क्वचिद् रूप्यशिलाचयैः । स्वर्णग्रावोच्चयैः क्वाऽपि, मेरोस्तटमिवाऽऽहृतम् ॥३९६॥
क्वचिच्च रत्नखानीभी, रत्नाचलमिवाऽपरम् । क्वाऽप्यौषधीभिर्हिमाद्रिमिव स्थानान्तरस्थितम् ॥ ३९७ ॥
आमुक्तचोलकमिवाऽऽसक्तसंसक्तवारिदैः । स्कन्धावलम्बिसंव्यानमिव निर्झरवारिभिः ॥ ३९८ ॥
शिरोऽभ्यर्णजुषा सूर्येणोत्किरीटमिवाऽह्नि । नक्तं च चन्दनरसतिलकाङ्कमिवेन्दुना ॥ ३९९ ॥
सहस्रमूर्द्धानमिव, शृङ्गैर्गगनरोधिभिः । अनेकदोर्दण्डमिव, तुङ्गैस्तालमहीरुहैः ॥ ४०० ॥
नालिकेरीवनेषूच्चैः, पाकपिङ्गासु लुम्बिषु । निजापत्यभ्रमाद् वेगोत्पतत्प्लवगसङ्कुलम् ॥ ४०१ ॥
चूतावचायसक्तानां, सौराष्ट्रहरिणीदृशाम् । आकर्ण्यमानमधुरगीतिर्मुत्कर्णितैर्मृगैः ॥ ४०२ ॥
उद्बुद्धसूचिव्याजेन, सञ्जातपलितैरिव । जरद्भिः केतकीवृक्षैरशून्याधित्यकाभुवम् ॥ ४०३ ॥
स्थाने स्थाने सिन्दुवारैः, श्रीखण्डद्रवपाण्डुभिः । कृतसर्वाङ्गमङ्गल्यपुण्ड्रावलिमिवोच्चकैः ॥ ४०४ ॥
शाखास्थितगोलाङ्गूललाङ्गूलजटिलीकृतैः । चिञ्चाद्रुमैरनुकृतप्लक्षन्यग्रोधपादपम् ॥ ४०५ ॥
अद्भुतस्वपरीणाहसम्पदा मुदितैरिव । नित्यं कण्टकिलफलैः, पनसैरुपशोभितम् ॥ ४०६ ॥
श्लेष्मातकैरमारात्रितमःसब्रह्मचारिभिः । अञ्जनाचलचूलाभिराहृताभिरिवाऽङ्कितम् ॥ ४०७ ॥
किंशुकैः शुकचञ्चूवदारक्तकुसुमर्द्धिभिः । शोभमानं महानागं, कुङ्कुमस्थासकैरिव ॥ ४०८ ॥
क्वाऽपि द्राक्षाभवं क्वाऽपि, खार्जूरं क्वाऽपि तालजम् । मध्वापिबद्भिराबद्धगोष्ठीकं शबरीजनैः ॥ ४०९ ॥
अभेद्यैरर्ककिरणैपूणामस्खलतामपि । सन्नाहमिव बिभ्राणं, ताम्बूलीवनमण्डपैः ॥ ४१० ॥
आर्द्रदूर्वाङ्कुरास्वादसुहितैर्मृगमण्डलैः । आबध्यमानरोमन्थं, महाविटपिनां तले ॥ ४११ ॥
सहकारफलास्वादमग्नचञ्चूपुटैश्चिरम् । शुकैर्निरन्तरैर्जात्यवैडूर्यैरिव मण्डितम् ॥ ४१२ ॥
केतकी-चम्पका-ऽशोक-कदम्ब-बकुलोद्भवैः । परागैः पवनोद्भूतैः, रजस्वलशिलातलम् ॥ ४१३ ॥
पान्थसार्थास्फाल्यमाननालिकेरीफलाम्भसा । परितः पङ्किलीभूतोपत्यकातटभूतलम् ॥ ४१४ ॥
भद्रशालप्रभृतीनां, मध्याद् वैशाल्यशालिना । वनेनैकतमेनेव, तरुखण्डेन मण्डितम् ॥ ४१५ ॥
पञ्चाशद्योजनं मूले, शिखरे दशयोजनम् । तमष्टयोजनोत्सेधमारुरोह गिरिं प्रभुः ॥ ४१६ ॥

[ एकविंशत्या कुलकम् ]

तत्र सद्योऽपि समवसरणे सुरनिर्मिते । सर्वीयो भगवानासाञ्चक्रे चक्रे च देशनाम् ॥ ४१७ ॥
गम्भीरया गिरा भर्त्तुर्विदधानस्य देशनाम् । अनूवादेव स गिरिर्गह्वरोत्थैः प्रतिस्वनैः ॥ ४१८ ॥
वृष्टेरिव पयोवाहः, प्रावृषि त्रिजगत्पतिः । गतायामथ पौरुष्यां, व्यरंसीद् देशनाविधेः ॥ ४१९ ॥
उत्थाय च ततः स्थानान्मध्यप्राकारमण्डले । देवच्छन्दे देवदेवो, न्यषीदद् देवनिर्मिते ॥ ४२० ॥
ततश्च स्वामिनः पादपीठे गणधराग्रणीः । श्रीपुण्डरीको न्यषदत्, सम्राजो युवराडिव ॥ ४२१ ॥
तथैव हि निषेदुष्यां, सभायां गणभृद्वरः । भगवल्लीलया धर्मदेशनां विदधेतराम् ॥ ४२२ ॥
सोऽपि द्वितीयपौरुष्यां, पारयामास देशनाम् । अवश्यायसुधासेकं, समीरण इव प्रगे ॥ ४२३ ॥
एवं सत्त्वोपकाराय, कुर्वाणो धर्मदेशनाम् । कञ्चित् कालं तत्र तस्थावष्टापद इव प्रभुः ॥ ४२४ ॥
अन्यतश्च प्रतिष्ठासुरपरेद्युर्जगद्गुरुः । गणभृत्पुण्डरीकं तं, पुण्डरीकं समादिशत् ॥ ४२५ ॥
महामुने! प्रयास्यामो, विहर्तुं वयमन्यतः । गिरौ तिष्ठ त्वमत्रैव, मुनिकोटिभिरावृतः ॥ ४२६ ॥

---

१ फलगुच्छेषु । २ आम्रावचयनासक्तानाम् । * मुत्कर्णकैर्मृ° खंता, सं १ ॥ ३ अशून्यपर्वतोपरिसमभूमिकम् । ४ वृक्षविशेषै । ५ कपय. । ६ अम्लिकावृक्षै । ७ विस्तार । ८ अमावास्यारात्रितम समानै. । ९ महागजम् । † °दमुदितैर्मृ° सं १ ॥ १० आबध्यमानचर्वितचर्वणम् । ११ आसन्नभूमि । १२ विशालत्वशोभिना । १३ अष्टयोजनोच्छ्रितम् । १४ सर्वहितकारी । १५ विरामं प्राप्तवान् । १६ मण्डलेश्वरस्य । १७ हिमामृतसिञ्चनम् । १८ प्रातःकाले । १९ प्रस्थातुमिच्छुः ।

अत्र क्षेत्रानुभावेन, भवतोऽचिरकालतः । ज्ञानं सपरिवारस्योत्पत्स्यते केवलं खलु ॥ ४२७ ॥
इहैव शैले शैलेशीध्यानमासेदुषस्तव । परिवारसमेतस्याऽचिरान्मोक्षो भविष्यति ॥ ४२८ ॥
तथेति स्वामिनो वाचं, प्रतिपद्य प्रणम्य च । तत्रैव सोऽस्थाद् गणभृत्, सहैव गणकोटिभिः ॥ ४२९ ॥
तीरगर्तेषु रत्नौघमुद्वेल इव वारिधिः । मुक्त्वा तं तत्र नाथोऽगादन्यतः सपरिच्छदः ॥ ४३० ॥
पुण्डरीकः स्थितस्तत्र, पर्वते मुनिभिः समम् । उदयाद्रितटे सार्द्धमृक्षैरिव निशाकरः ॥ ४३१ ॥
ततः परमसंवेगावेगान्मधुरया गिरा । पुण्डरीको गणधरः, श्रमणानित्यभाषत ॥ ४३२ ॥
गिरिः क्षेत्रप्रभावेण, सोऽयं सिद्धिनिबन्धनम् । जिगीषूणां दुर्गमिव, सीमान्तावनिमाधकम् ॥ ४३३ ॥
कार्या संलेखना मुक्तेः, साधनान्तरमप्यहो ! । भवति द्विविधा सा तु, द्रव्यभावविशेषतः ॥ ४३४ ॥
सर्वोन्मादमहारोगनिदानानां समन्ततः । शोषणं सर्वधातूनां, द्रव्यसंलेखना मता ॥ ४३५ ॥
यो रागद्वेषमोहानां, कषायाणां च सर्वतः । नैसर्गिकद्विषां छेदो, भावसंलेखना तु सा ॥ ४३६ ॥
इत्युदित्वा पुण्डरीकः, समं श्रमणकोटिभिः । सर्वानालोचयामासाऽतीचारान् सूक्ष्मबादरान् ॥ ४३७ ॥
महाव्रतारोपणं च, भूयश्चक्रेऽतिशुद्धये । क्षौमस्य क्षालनं द्विस्त्रिर्यतिनैर्मल्यकारणम् ॥ ४३८ ॥
जीवाः क्षाम्यन्तु सर्वे मे, तेषां च क्षान्तवानहम् । मैत्री मे सर्वभूतेषु, वैरं मम न केनचित् ॥ ४३९ ॥
इत्युक्त्वा भवचरमं, निराकारं सुदुष्करम् । प्रतिपेदे सोऽनशनं, समस्तश्रमणैः समम् ॥ ४४० ॥
क्षपकश्रेणिमारूढस्याऽत्रुट्यन्नभितोऽपि हि । घातीनि कर्माणि तस्यौजस्विनो जीर्णरज्जुवत् ॥ ४४१ ॥
साधूनां कोटिसङ्ख्यानां, तेषामपि हि तुत्रुटुः । सद्यो घातीनि कर्माणि, सर्वसाधारणं तपः ॥ ४४२ ॥
मासान्ते चैत्ररांकायां, पुण्डरीकस्य केवलम् । ज्ञानं बभूव प्रथमं, पश्चात् तेषां महात्मनाम् ॥ ४४३ ॥
शुक्लध्याने स्थितास्तूर्ये, निर्योगे ते च योगिनः । प्रक्षीणाशेषकर्माणो, निर्वाणपदवीं ययुः ॥ ४४४ ॥
समागत्य दिवो देवा, मरुदेव्या इव क्षणात् । भक्त्या विदधिरे तेषां, निर्वाणगमनोत्सवम् ॥ ४४५ ॥
भगवानृषभस्वामी, प्रथमस्तीर्थकृद् यथा । तथाऽभूत् प्रथमं तीर्थं, शत्रुञ्जयगिरिस्तदा ॥ ४४६ ॥
यत्रैकोऽपि यतिः सिध्येत्, तीर्थं तदपि पावनम् । किं पुनर्यत्र तावन्तः, सिषिधुस्ते महर्षयः ? ॥४४७॥
अथ शत्रुञ्जयगिरौ, चैत्यं रत्नशिलामयम् । अकारयन्मेरुचूलाप्रस्पर्द्धि भरतेश्वरः ॥ ४४८ ॥
पुण्डरीकप्रतिमया, सहितां प्रतिमां प्रभोः । चेतनामिव चेतोऽन्तस्तन्मध्येऽस्थापयन्नृपः ॥ ४४९ ॥
नानादेशेषु विहरन्, भविनो भगवानपि । अन्वग्रहीद् बोधिदानाचक्षुर्दानादिवाऽन्धलान् ॥ ४५० ॥
प्रभोराकेवलज्ञानाच्छ्रमणानां तु जज्ञिरे । चतुरशीतिसहस्राः, साध्वीलक्षत्रयं तथा ॥ ४५१ ॥
स पञ्चाशत्सहस्रं तु, श्राद्धलक्षत्रयं तथा । श्राद्धीलक्षाः पञ्च सार्द्धाश्चतुःसहस्रसंयुताः ॥ ४५२ ॥
सहस्राणि तु चत्वारि, तथा सप्त शतानि च । पञ्चाशदधिकान्यासन्, श्रीचतुर्दशपूर्विणाम् ॥ ४५३ ॥
*अवधिज्ञानिसाधूनां, सहस्राणि नवाऽभवन् । केवलज्ञानिसाधूनां, सहस्राणि तु विंशतिः ॥ ४५४ ॥
जातवैक्रियलब्धीनां, श्रमणानां महात्मनाम् । षट्शताभ्यधिकान्यासन्, सहस्राणि तु विंशतिः ॥४५५॥
पृथक् पृथग् वादिनां च, मनःपर्ययिणां तथा । §द्वादशाऽऽसन् सहस्राणि, सपञ्चाशच्च षट्शती ॥४५६॥
अनुत्तरविमानोपपातिनां च महात्मनाम् । द्वाविंशतिसहस्राणि, चाऽभवन् भुवनप्रभोः ॥ ४५७ ॥
एवं चतुर्विधं सङ्घं, भगवानादितीर्थकृत् । धर्मे संस्थापयामास, व्यवहार इव प्रजाः ॥ ४५८ ॥
दीक्षाकालात् पूर्वलक्षं, क्षपयित्वा ततः प्रभुः । ज्ञात्वा स्वमोक्षकालं च, प्रतस्थेऽष्टापदं प्रति ॥४५९॥
शैलमष्टापदं प्राप, क्रमेण सपरिच्छदः । निर्वाणसौधसोपानमिवाऽऽरोहच्च तं प्रभुः ॥ ४६० ॥

१ नक्षत्रैः । २ वस्त्रस्य । ३ चैत्रपूर्णिमायाम् । ४ पादे । * इमौ द्वौ ४५४–४५५ तमौ श्लोकौ खपुस्तके नोपलभ्येते ॥
† ° पर्यायिणां सं १, २ ॥ § द्वादश सहस्राणि सचतुर्विंशतिषट्शतीं सं० १ ॥ ५ मोक्षप्रासादसोपानम् ।

सम मुनीनां दशभिः, सहस्रैः प्रत्यपद्यत । चतुर्दशेन तपसा, पादपोपगमं प्रभुः ॥ ४६१ ॥
तस्थिवांसं तथा विश्वनाथं पर्वतपालकाः । आशु विज्ञापयामासुर्गत्वा भरतचक्रिणे ॥ ४६२ ॥
प्रभोश्चतुर्विधाहारप्रत्याख्यानं निशम्य सः । शोकेन शङ्कु[1]नेवान्तः[*]प्रविष्टेन व्यबाध्यत ॥ ४६३ ॥
ततोऽ[2]क्लेशेन संस्पृष्टः, सद्यः शोककृ[3]शानुना । तरुः सिमिसिमा बिन्दूनिवाऽश्रूणि मुमोच सः ॥ ४६४ ॥
सान्तःपुरपरीवारो, दु[4]र्वारासुखपीडितः । प्रतस्थे पादचारेण, प्रत्यष्टापदमार्षभिः ॥ ४६५ ॥
नाऽजीगणत् कर्करान् स, क[5]र्कशानपि पादयोः । वेद्यते वेदना नैव, हर्षेणेव शुचाऽपि यत् ॥ ४६६ ॥
अक्षरन् रक्तधाराश्च, पद्भ्योः कर्करदूनयोः । आसीच्चालक्तकाङ्केव, तस्याऽङ्घ्रिन्यासपद्धतिः ॥ ४६७ ॥
अवाजगणदुर्वीशो, जनान् यानोपनायिनः । आरोहणक्षणेनाऽपि, मा भूद् विघ्नो गतेरिति ॥ ४६८ ॥
आतपत्रे शिरःस्थेऽपि, तत्त[6]प्तो जगाम सः । न तापो मानसो जातु, सुधावृष्ट्याऽपि शाम्यति ॥ ४६९ ॥
शु[7]ग्विहस्तो हस्तदानपहस्तयते स्म सः । मार्गे विलगतः शाखिशाखाप्रान्तानिवोच्चकैः ॥ ४७० ॥
अग्रेसरान् वेत्रधरानपि पश्चाच्चकार सः । रयात् त[8]रीव तीरद्रून्, सरिदायामगामिनी ॥ ४७१ ॥
पदे पदे स्खलन्तीश्च, वेगाच्चामरधारिणीः । चक्री प्रतीक्षाञ्चक्रे न, चित्तवद् गन्तुमुत्सुकः ॥ ४७२ ॥
उच्छल्योच्छल्य वेगेनोरःस्थलास्फालनैर्मुहुः । विशीर्णमपि नाऽज्ञासीन्मुक्ताहारं महीपतिः ॥ ४७३ ॥
प्रभौ गतमनस्कत्वात्, पार्श्वस्थानप्यजूहवत् । भूयः प्रष्टुं स्वामिवार्त्ता, वेत्रिणा गिरिपालकान् ॥ ४७४ ॥
नाऽपश्यत् किञ्चिदप्यन्यन्नाऽशृणोत् कस्यचिद् वचः । दध्यौ स प्रभुमेवैकं, ध्यानस्थ इव योगवित्[†] ॥ ४७५ ॥
लघूकुर्वन्निवाऽध्वानं, रंहसा भरतेश्वरः । समीरण इव प्राप, क्षणेनाऽष्टापदाचलम् ॥ ४७६ ॥
परिश्रममजानानो, जनवत् पादचार्यपि । अध्यारुरोह भरतस्ततोऽष्टापदपर्वतम् ॥ ४७७ ॥
ईक्षाञ्चक्रे चक्रवर्त्ती, शोकहर्षसमाकुलः । तत्र च त्रिजगन्नाथं, पर्यङ्कासनसंस्थितम् ॥ ४७८ ॥
तत्र प्रदक्षिणीकृत्य, वन्दित्वा च जगत्पतिम् । देहच्छायेव पार्श्वस्थः, समुपास्ते स चक्रभृत् ॥ ४७९ ॥
इत्थं स्थिते प्रभावेतेऽप्यस्मासु कथमासते ? । इति हेतोरिवेन्द्राणामासनानि चकम्पिरे ॥ ४८० ॥
अवधिज्ञानतो ज्ञात्वाऽऽसनकम्पस्य कारणम् । इन्द्रा जिनेन्द्रमभ्येयुश्चतुःषष्टिरपि द्रुतम् ॥ ४८१ ॥
तेऽपि प्रदक्षिणीकृत्य, जगन्नाथं प्रणम्य च । विषण्णाश्च निषण्णाश्च, तस्थुरालिखिता इव ॥ ४८२ ॥
तथाऽस्यामवसर्पिण्यां, तृतीयस्याऽरकस्य तु । पक्षेष्वेकोननवतावशिष्टेषु सत्सु च ॥ ४८३ ॥
माघाभिधानमासस्य, कृष्णत्रयोदशीतिथौ । पूर्वाह्णेऽभीचिनक्षत्रे, शशियोगमुपागते ॥ ४८४ ॥
तथा निषण्णः पर्यङ्कासने स्थित्वा च बादरे । काययोगे बादरौ वाक्चित्तयोगौ रुरोध च ॥ ४८५ ॥
सूक्ष्मेण काययोगेन, काययोगं च बादरम् । रुद्ध्वा रुरोध सूक्ष्मौ च, योगौ वाक्चित्तलक्षणौ ॥ ४८६ ॥
इति सूक्ष्मक्रियं नाम, शुक्लध्यानं तृतीयकम् । अस्तसूक्ष्मतनूयोगं, क्रमात् प्रभुरसाधयत् ॥ ४८७ ॥
ततश्च ध्यानमु[‡]च्छिन्नक्रियं नाम तुरीयकम् । पञ्चह्र[9]स्वाक्षरोच्चारमितकालमशिश्रियत् ॥ ४८८ ॥
सर्वदुःखपरित्यक्तः, केवलज्ञानदर्शनी । क्षीणकर्मा निष्ठितार्थोऽनन्तवीर्यसुखर्द्धिकः ॥ ४८९ ॥
बन्धाभावादूर्ध्वगतिरेरण्डफलबीजवत् । प्रभुः स्वभावादृजुना, पथा लोकाग्रमासदत् ॥ ४९० ॥
प्रपन्नानशनास्तेऽपि, स[§]हस्रा व्रतिनां दश । क्षपकश्रेणिमारूढाः, सर्वेऽप्युत्पन्नकेवलाः ॥ ४९१ ॥
मनोवचनकायानां, योगं रुद्ध्वा च सर्वतः । क्षणादासादयामासुः, स्वामिवत् परमं पदम् ॥ ४९२ ॥
स्वामिनिर्वाणकल्याणान्निर्वाणो दुःखपावकः । अदृष्टसुखलेशानां, नारकाणामपि क्षणम् ॥ ४९३ ॥

---

१ कीलेन । * ० प्रतिष्ठेन खंता, खं ॥ २ महता । ३ शोकाग्निना । ४ अत्यन्तदुःखपीडित । ५ कठोरान् । ६ अतितप्त । ७ शोकेन विह्वल । ८ नाविका । † योगिवत् स १, २ ॥ ‡ °मुत्सन्न° स १ ॥ ९ अ इ उ ऋ ऌ इति पञ्चह्रस्वाक्षरोच्चारे यावान् कालो जायते तावत्कालमितं कालम् । § सहस्राणि दशर्षयः खंता ॥

महाशोकसमाक्रान्तश्चक्रवर्त्ती तु तत्क्षणम् । पपात मूर्च्छितः पृथ्व्यां, वज्राहत इवाऽचलः ॥ ४९४ ॥
महत्यप्यागते दुःखे, दुःखशैथिल्यकारणम् । विदाञ्चकार रुदितं, न कश्चिदपि यत् तदा ॥ ४९५ ॥
दुःखशैथिल्यहेतुं तच्चक्रिणोऽज्ञापयत् स्वयम् । शक्रश्चकार रुदितं, महापूत्कारपूर्वकम् ॥ ४९६ ॥
अनु सङ्क्रन्दनं चक्रे, क्रन्दनं त्रिदशैरपि । समा हि समदुःखानां, चेष्टा भवति देहिनाम् ॥ ४९७ ॥
तेषां च रुदितं श्रुत्वा, संज्ञामासाद्य चक्र्यपि । उच्चैःस्वरेण चक्रन्द, ब्रह्माण्डं स्फोटयन्निव ॥ ४९८ ॥
रुदितेनाऽस्फुटद् राज्ञः, शोकग्रन्थिर्महानपि । पालीबन्धो महास्रोतोरंहसेव महीयसा ॥ ४९९ ॥
सुरासुरमनुष्याणां, रुदितै रुदितैस्ततः । त्रैलोक्ये करुणरस, एकच्छत्र इवाऽभवत् ॥ ५०० ॥
ततः प्रभृति लोकेऽपि, देहिनां शोकसम्भवे । रोदनाध्वा प्रववृते, शोकशल्यविशल्यकः ॥ ५०१ ॥
नैसर्गिकमपि त्यक्त्वा, धैर्यं भरतभूपतिः । दुःखितो विललापैवं, तिरश्चोऽपि हि दुःखयन् ॥५०२॥
हा तात ! हा जगद्बन्धो !, हा कृपारससागर ! । अज्ञानिह भवारण्ये, त्यक्तवानसि नः कथम् ? ॥ ५०३ ॥
अम्लानकेवलज्ञानप्रकाशेन विना त्वया । तमसीव ऋते दीपं, स्थास्यामोऽत्र कथं भवे ? ॥ ५०४ ॥
छद्मस्थस्येव ते मौनं, किमेतत् परमेश्वर ! ? । कुरुष्व देशनां नाऽनुगृह्णासि किममुं जनम् ? ॥ ५०५ ॥
लोकाग्रमथवाऽयासीर्भगवन्! भाषसे न यत् । आभाषन्ते दुःखितं मां, तेऽपि मद्बन्धवो न किम्? ॥५०६॥
हुं ज्ञातमथवा ते हि, सदा स्वाम्यनुगामिनः । स्वामिनोऽननुगो नास्ति, मत्कुले मां विनाऽपरः ॥५०७॥
तातो जगत्त्रयत्राता, बाहुबल्यादयोऽनुजाः । स्वसारौ ब्राह्मीसुन्दर्यौ, पुण्डरीकादयः सुताः ॥५०८॥
श्रेयांसाद्याश्च नप्तारो, हत्वा कर्मद्विषोऽखिलान् । ययुर्लोकाग्रमद्याऽपि, जीवामि प्रियजीवितः ॥ ५०९ ॥
शोकाज्जीवितनिर्विण्णं, मुमूर्षुमिव चक्रिणम् । दृष्ट्वा बोधयितुमिति, प्रारेभे पाकशासनः ॥ ५१० ॥
भरतेश! महासत्त्व!, स्वाम्यसौ तावदावयोः । संसाराम्भोधिमतरत्, तारयामास चाऽपरान् ॥ ५११ ॥
एतत्कृतेन तीर्थेन, तीर्थेनेव महानदीम् । उत्तरिष्यन्ति संसारं, चिरं संसारिणोऽपरे ॥ ५१२ ॥
कृतकृत्यः स्वयं ह्येष, भगवानपरानपि । कृतकृत्यान् जनान् कर्त्तुं, पूर्वलक्षमवास्थित ॥ ५१३ ॥
अनुगृह्याऽखिलं लोकं, स्थानं तदपुनर्भवम् । आसेदुषो जगद्भर्त्तुः, राजन्! किं नाम शोचसि? ॥५१४॥
प्रेत्य यो योनिलक्षेषु, महादुःखैकवेश्मसु । अनेकशः सञ्चरति, परासुः स हि शोच्यते ॥ ५१५ ॥
तत् किं न लज्जसे शोचन्, प्रभावन्यजनेष्विव? । शोचितुः शोचनीयस्य, चोभयोरपि नोचितम् ॥५१६॥
एकदाऽपि हि योऽश्रौषीत्, स्वामिनो धर्मदेशनाम् । न सोऽपि शोकहर्षाभ्यां, जीयते किं पुनर्भवान्? ॥५१७॥
महाम्भोधेरिव क्षोभः, कम्पो मेरुगिरेरिव । उद्वर्त्तनमिवाऽवन्याः, कुलिशस्येव कुण्ठता ॥ ५१८ ॥
पीयूषस्येव वैरस्यमनुष्णांशोरिवोष्णता । असम्भाव्यं महीनाथ!, तवेदं परिदेवनम् ॥ ५१९ ॥ [ युग्मम् ]
धीरो भव धराधीश!, विद्ध्यात्मानं यदीशितुः । जगत्त्रयैकधीरस्य, तनयस्तस्य नन्वसि ॥ ५२० ॥
गोत्रवृद्धेनेव वृद्धश्रवसैवं प्रबोधितः । आललम्बे नृपो धैर्यं, सहजं शैत्यमम्बुवत् ॥ ५२१ ॥
अथ स्वाम्यङ्गसंस्कारोपस्कराहरणे द्रुतम् । आदिदेश शुनासीरस्त्रिदशानाभियोगिकान् ॥ ५२२ ॥
ततः सङ्क्रन्दनादेशान्नन्दनोद्यानतः क्षणात् । गोशीर्षचन्दनैधांसि, समानिन्युर्दिवौकसः ॥ ५२३ ॥
इन्द्रादेशादथैन्द्र्यां ते, स्वामिदेहस्य हेतवे । वृत्तामारचयामासुश्चितां गोशीर्षचन्दनैः ॥ ५२४ ॥
कृते तथा महर्षीणामिक्ष्वाकुकुलजन्मनाम् । दिशि व्यधुर्दक्षिणस्यां, त्र्यस्राकारां चितां सुराः ॥५२५॥
अन्येषामनगाराणां, कृते च त्रिदिवौकसः । चतुरस्रां चितां चक्रुरपरस्यां पुनर्दिशि ॥ ५२६ ॥

---

१ महाप्रवाहवेगेन । २ रोदनमार्ग. । ३ पौत्रा । ४ कर्मशत्रून् । ५ मर्त्तुमिच्छुम् । ६ इन्द्रः । ७ जलावतारमार्गेण । ८ मोक्षस्थानम् । ९ मृत्वा । १० मृत. । ११ रसराहित्यम् । १२ चन्द्रस्य । १३ विलाप । १४ इन्द्रेण । १५ इन्द्रादेशात् । १६ पूर्वदिशि । * °लजन्मिनाम् ख १ ॥

अथ क्षीरोदपाथोधेः, पुष्करावर्त्तकैरिव । देवैरानाययामास, द्रुतं पाथांसि[1] वासवः ॥ ५२७ ॥
तेन च स्नपयामास, पयसा भगवत्तनुम् । गोशीर्षचन्दनरसैर्विलिलेप च वज्रभृत् ॥ ५२८ ॥
वासवो वासयामास, वाससा हंसलक्ष्मणा[2] । ततस्तद् देवदूष्येण, शरीरं परमेशितुः ॥ ५२९ ॥
सर्वतो भूषयामास, दिव्यैर्माणिक्यभूषणैः । परमेष्ठिशरीरं तत्, त्रिविष्टपसदग्रणीः[3] ॥ ५३० ॥
अन्ये तु देवा अन्येषां, मुनीनामपि तत्क्षणम् । इन्द्रवद् विदधुर्भक्त्या, तत् सर्वं स्नपनादिकम् ॥ ५३१ ॥
जगत्रय्या रत्नसारैः, पृथक् पृथगिवाऽऽहृतैः । सहस्रवाह्याः शिबिकास्तिस्रश्चक्रुर्दिवौकसः ॥ ५३२ ॥
प्रणम्य चरणौ भर्त्तुर्वपुश्चाऽऽरोप्य मूर्धनि । शिबिकायां निचिक्षेप, स्वयमेव पुरन्दरः ॥ ५३३ ॥
वपूंषीक्ष्वाकुवंश्यानामपरस्यां दिवौकसः । शिबिकायां शिवपदातिथीनां परिचिक्षिपुः ॥ ५३४ ॥
शिबिकायां तृतीयस्यामन्येषामनगारिणाम्[4] । निदधुर्विबुधाः कायान्, निजेष्वारोप्य मूर्धसु ॥ ५३५ ॥
अथ तां स्वामिशिबिकामुद्दधार स्वयं हरिः । मुनीनामपरेषां तु, शिबिके अपरे सुराः ॥ ५३६ ॥
अप्सरःसु ददानासु, तालरासकमेकतः । कुर्वाणासु च सङ्गीतं, मधुरध्वानमन्यतः ॥ ५३७ ॥
पुरःपुरो धूपघटीर्धारयत्सु सुपर्वसु[5] । धूपधूमच्छलाद् बाष्पं, वमन्तीरिव शोकतः ॥ ५३८ ॥
क्षिपत्सु पुष्पदामानि, शिबिकोपरि केषुचित् । शेषाहेतोश्च तान्येवोपाददानेषु केषुचित् ॥ ५३९ ॥
देवदूष्यैस्तोरणानि, पुरःकुर्वत्सु केषुचित् । ददत्सु केषुचिद् यक्षकर्दमैः सेकमग्रतः ॥ ५४० ॥
केषुचिद् विलुठत्स्वग्रे, यन्त्रभ्रष्टाश्मगोलवत् । धावत्सु पृष्ठतोऽन्येषु, मोहचूर्णाहतेष्विव ॥ ५४१ ॥
उच्चैःशब्दायमानेषु, नाथ! नाथेति केषुचित् । मन्दभाग्या हताः स्मः स्वामिति निन्दत्सु केषुचित् ॥ ५४२ ॥
शिक्षां नो देहि नाथेति, मुहुर्नाथत्सु[6] केषुचित् । को धर्मसंशयं छेत्स्यत्येवं जल्पत्सु केषुचित् ॥ ५४३ ॥
वयं यामोऽन्धवत् क्वेति, सानुशयेषु केषुचित् । *ददातु भूर्नो विवरमित्याकाङ्क्षत्सु केषुचित् ॥ ५४४ ॥
वाद्यमानेषु तूर्येषु, तां स्वामिशिबिकां हरिः । उपचित्यं निनायाऽन्ये, निन्युश्च शिबिके सुराः ॥ ५४५ ॥
[ नवभिः कुलकम् ]
प्राचीनबर्हिः[7] प्राचीनचितायां स्वामिनस्तनुम् । शनकैः स्थापयामास, स्वपुत्र इव कृत्यवित् ॥ ५४६ ॥
चित्यायां दाक्षिणात्यायामिक्ष्वाकुकुलजन्मनाम् । वपूंषि स्थापयन्ति स्म, सनाभय[8] इवाऽमराः ॥ ५४७ ॥
अन्येषामनगाराणां, शरीराण्यपरे सुराः । प्रतीचीनचितायां तु, समीचीनविदो न्यधुः ॥ ५४८ ॥
अथ गोत्रभिदादेशान्नाकिनोऽग्निकुमारकाः । चितासु तासु तत्कालमग्निकायान् विचक्रिरे ॥ ५४९ ॥
शक्राज्ञया[9] विचक्रुश्च, वायून् वायुकुमारकाः । अभितो ज्वालयामासुर्वह्निमह्नाय[10] ते ततः ॥ ५५० ॥
चितास्विन्द्राज्ञया देवाः, कर्पूरादीनि भारशः । निदधुः कुम्भशश्चाऽपि, सर्पींषि[11] च मधूनि च ॥ ५५१ ॥
मुक्त्वाऽस्थि धातवो यावद्, दग्धास्तावच्चितानलम् । व्यध्यापयन् सुराः क्षीराम्भोभिर्मेघकुमारकाः ॥ ५५२ ॥
प्रतिमावत् पूजयितुं, स्वविमाने पुरन्दरः । अग्रहीदुपरितनीं, दंष्ट्रां वामेतरां प्रभोः ॥ ५५३ ॥
ईशानोऽप्युपरितनीं, तद्दंष्ट्रां दक्षिणेतराम् । अधस्तनीं दक्षिणां तु, चमरेन्द्र उपाददे ॥ ५५४ ॥
बलिर्वामामधोदंष्ट्रां, जग्राहाऽन्ये तु वासवाः । शेषदन्तान् नाकिनोऽन्ये, जगृहुः कीकसानि[12] तु ॥ ५५५ ॥
मार्गन्तः श्रावका देवैर्दत्तकुण्डत्रयाग्नयः । ततः प्रभृत्यभूवंस्ते, ब्राह्मणा अग्निहोत्रिणः ॥ ५५६ ॥
ते हि स्वामिचितावह्निं, गृहे नित्यमपूजयन् । रक्षन्ति स्म च निर्वातं, लक्षदीपमिवेश्वराः ॥ ५५७ ॥
इक्ष्वाकुवंश्यशेषानगाराणां ते चितानलौ । निर्वाणौ जीवयन्ति स्म, स्वामिचित्याकृशानुना[13] ॥ ५५८ ॥
इक्ष्वाकूणां महर्षीणामपि चित्याकृशानुना । अन्यानगारिचित्याग्निं, ते निर्वाणमबोधयन् ॥ ५५९ ॥

---

१ जलानि । २ हसचिह्नेन । ३ इन्द्र. । ४ साधुनाम् । ५ देवेषु । ६ याचमानेषु । * इदमुत्तरार्धं खंपुस्तके नास्ति ॥
७ इन्द्रः । ८ सहोदराः । ९ इन्द्रादेशात् । १० शीघ्रम् । ११ घृतानि । १२ अस्थीनि । १३ अग्निना ।

अन्यानगारिचित्याग्निं, चित्याग्न्योरन्ययोः पुनः । न हि सङ्क्रमयन्ति स्म, द्विजेष्वद्याऽप्यसौ विधिः ॥५६०॥
केचित् तु लब्धभस्मानो, भक्त्या भस्म ववन्दिरे । ततः प्रभृति जाताश्च, तापसा भस्मभूषणाः ॥ ५६१ ॥
चितास्थानत्रये देवा, रत्नस्तूपत्रयं ततः । अष्टापदगिरेर्नव्यं, शृङ्गत्रयमिव व्यधुः ॥ ५६२ ॥
ततो नन्दीश्वरद्वीपे, शाश्वतप्रतिमोत्सवम् । कुर्वाणास्ते तु गीर्वाणाः, सेन्द्राः स्वं स्वं पदं ययुः ॥५६३॥
इन्द्राः स्वस्वविमानेषु, सुधर्मायां च पर्षदि । अधिमाणवकस्तम्भं, वृत्तवज्रसमुद्गके ॥ ५६४ ॥
न्यवेशयन् स्वामिदंष्ट्रा, आनर्चुश्च निरन्तरम् । तासां प्रभावात् तेषां च, सदा विजयमङ्गले ॥ ५६५ ॥
भरतस्तत्र च स्वामिसंस्कारासन्नभूतले । प्रासादं योजनायामं, त्रिगव्यूतसमुच्छ्रयम् ॥ ५६६ ॥
नामतः सिंहनिषद्यां, पद्यां निर्वाणवेश्मनः । उच्चैर्वर्द्धकिरत्नेन, रत्नाश्मभिरकारयत् ॥ ५६७ ॥
तस्य द्वाराणि चत्वारि, स्फटिकाश्ममयानि च । रम्याणि स्वामिसमवसरणस्येव जज्ञिरे ॥ ५६८ ॥
प्रतिद्वारमुभयतो, बभूवुस्तत्र षोडश । रत्नचन्दनकलसाः, कोशा इव शिवश्रियाम् ॥ ५६९ ॥
द्वारे द्वारे रत्नमयास्तोरणाः षोडशाऽभवन् । साक्षादिव समुद्भूताः, परितः पुण्यवल्लयः ॥ ५७० ॥
द्वारे द्वारेऽष्टमङ्गल्यो, मङ्गल्याः षोडशाऽभवन् । प्रासादद्वारविन्यस्तप्रशस्तिलिपिसन्निभाः ॥ ५७१ ॥
द्वारेषु तेषु चाऽभूवन्, विशाला मुखमण्डपाः । दिक्पालानां चतुर्णामप्याहृता इव पर्षदः ॥ ५७२ ॥
तेषां चतुर्णां च मुखमण्डपानां पुरोऽभवन् । श्रीवल्लीनां मण्डपान्तः, प्रेक्षासदनमण्डपाः ॥ ५७३ ॥
तेषां प्रेक्षामण्डपानां, मध्यभागेषु जज्ञिरे । अक्षवाटा वज्रमयाः, सूर्यबिम्बोपहासिनः ॥ ५७४ ॥
अक्षवाटेऽक्षवाटे च, मध्यभागे मनोहरम् । रत्नसिंहासनमभून्मध्येऽब्जमिव कर्णिका ॥ ५७५ ॥
प्रतिप्रेक्षामण्डपाग्रं, बभूव मणिपीठिका । चैत्यस्तूपास्तदुपरि, चाऽभवन् रत्नशालिनः ॥ ५७६ ॥
तेषां च चैत्यस्तूपानां, पुरतो द्योतिताम्बरा । प्रत्येकं च प्रतिदिशं, महती मणिपीठिका ॥ ५७७ ॥
प्रत्येकं तदुपरिष्टात्, पञ्चधन्वशतप्रमाः । चैत्यस्तूपसन्मुखीनाः, सर्वाङ्गं रत्ननिर्मिताः ॥ ५७८ ॥
ऋषभा वर्द्धमाना च, ततश्चन्द्राननाऽपि च । वारिषेणेति पर्यङ्कासनासीना मनोहराः ॥ ५७९ ॥
शाश्वत्यः प्रतिमा जैन्यो, नेत्रकैरवचन्द्रिकाः[2] । नन्दीश्वरमहाद्वीपचैत्यमध्य इवाऽभवन् ॥ ५८० ॥
तेषां च चैत्यस्तूपानां, प्रत्येकं पुरतोऽभवत् । अनर्घ्यमाणिक्यमयी, विशाला चारुपीठिका ॥ ५८१ ॥
पीठिकानां पुरस्तासां, प्रत्येकं चैत्यपादपाः । चैत्यद्रूणां पुरस्तेषां, प्रत्येकं मणिपीठिकाः ॥ ५८२ ॥
उपरीन्द्रध्वजस्तासां, प्रत्येकमपि चाऽभवत् । जयस्तम्भो दिशि दिशि, धर्मेणेवाऽधिरोपितः ॥ ५८३ ॥
इन्द्रध्वजानां च पुरः, प्रत्येकमपि चाऽभवत् । नाम्ना नन्दा पुष्करिणी, त्रिसोपाना सतोरणा ॥ ५८४ ॥
स्वच्छशीतजलापूर्णा, विचित्राम्भोजशालिनी । मनोहरा दधिमुखाधारपुष्करिणीनिभा ॥ ५८५ ॥
आसीत् सिंहनिषद्याया, महाचैत्यस्य तस्य तु । मध्यभागे सुमहति, महती मणिपीठिका ॥ ५८६ ॥
तस्याश्चोपरि समवसरणस्येव मध्यतः । चित्ररत्नमयो देवच्छन्दकः समजायत ॥ ५८७ ॥
नानावर्णांशुकमय, उल्लोचस्तदुपर्यभूत् । उद्भावयन्नकालेऽपि, सन्ध्याभ्रपटलश्रियम् ॥ ५८८ ॥
उल्लोचस्याऽन्तरे पार्श्वतश्च वज्रमयाङ्कुशाः । आसन्नुल्लोचशोभा तु, तथाऽप्यासीन्निरङ्कुशा ॥ ५८९ ॥
सुधाधारोपमा हारा, अङ्कुशेष्ववलम्बिताः । कुम्भमेयैरामलकस्थूलैर्[3]मुक्ताफलैः कृताः ॥ ५९० ॥
हारप्रान्तेषु चाऽभूवन्, विमला मणिमालिकाः । त्रैलोक्यमणिखानीनामाहृता इव वर्णिकाः ॥ ५९१ ॥
प्रान्तेषु मणिमालानाममला वज्रमालिकाः । आलिका[4] इव भा[5]दोर्भिरालिङ्गन्त्यः परस्परम् ॥ ५९२ ॥
तद्भित्तिषु गवाक्षाश्चाऽभवंश्चित्रमणीमयाः । स्वप्रभापटलैर्जात[6]तिरस्करिणिका इव ॥ ५९३ ॥
दह्यमानागरुधूमस्तोमास्तेषु चकाशिरे । गिरेस्तस्य नवोद्भूतनीलचूलाभ्रमप्रदाः ॥ ५९४ ॥

---

१ देवा. । २ नेत्रकुमुदज्योत्स्नाः । ३ आमलकफलवत् स्थूलै. । ४ सख्य । ५ कान्तिभुजै. । ६ जातजवनिका. ।

देवच्छन्देऽभवन् रत्नप्रतिमास्तत्र निर्मलाः । ऋषभस्वामिमुख्यानां, चतुर्विंशतिरर्हताम् ॥ ५९५ ॥
प्रतिमाः स्वस्वसंस्थानमानवर्णधरास्तु ताः । साक्षादिव स्वामिनोऽभान्, शैलेशीध्यानवर्त्तिनः ॥ ५९६ ॥
तत्र षोडश सौवर्ण्यो, राजावर्त[1]कृते उभे । द्वे स्फाटिक्यौ द्वे वैडूर्यमय्यौ शोणाश्मजे उभे ॥ ५९७ ॥
तासां चाऽर्हत्प्रतिमानां, सर्वासामपि जज्ञिरे । लोहिताक्षप्रतिसेका[2], अङ्क[3]रत्नमया नखाः ॥ ५९८ ॥
नाभीकेशान्तभूजिह्वाताल्वश्रीवत्सचूचु[4]कम् । तलानि हस्तपादस्य, तापनीयानि[5] जज्ञिरे ॥ ५९९ ॥
पक्ष्माणि ताराः श्मश्रूणि, भ्रुवो रोमाणि मूर्द्धजाः । रिष्ट[6]रत्नमयान्यासन्, वैद्रुमा दन्तवाससः[7] ॥ ६०० ॥
दन्ताश्च स्फटिकमयाः, शीर्षघट्यस्तु वज्रजाः । नासाश्चाऽन्तर्लोहिताक्षप्रतिसेकाः सुवर्णजाः ॥ ६०१ ॥
लोहिताक्षप्रतिसेकप्रान्ता अङ्ककृता दृशः । इत्यनेकमणीमय्यः, प्रतिमास्ताश्चकाशिरे ॥ ६०२ ॥
तासां च पृष्ठे प्रत्येकमेकैका रत्ननिर्मिता । छत्रधारप्रतिमा च, यथावन्मानशालिनी ॥ ६०३ ॥
मुक्ताप्रवालजालाङ्कं, सकुरण्टकदामकम् । श्वेतातपत्रं स्फटिकमणिदण्डं दधत्यभूत् ॥ ६०४ ॥ [ युग्मम् ]
प्रत्येकं पार्श्वयोस्तासामुत्क्षिप्तमणिचामरे । चामरधारप्रतिमे, रत्नमय्यौ बभूवतुः ॥ ६०५ ॥
नागयक्षभूतकुण्डधाराणां[8] प्रतिमे उभे । प्रत्येकमग्रे भगवत्प्रतिमानां बभूवतुः ॥ ६०६ ॥
ताः कृताञ्जलयो रत्नमय्यः सर्वाङ्गमुज्ज्वलाः । निषेदिवांसः प्रत्यक्षा, इव नागादयो बभुः ॥ ६०७ ॥
देवच्छन्दे रत्नघण्टाश्चतुर्विंशतिरुज्ज्वलाः । सङ्क्षिप्तादित्यबिम्बाभास्तथा माणिक्यदर्पणाः ॥ ६०८ ॥
स्थानस्थदीपिका हैम्न्यस्तथा रत्नकरण्डकाः । पुष्पचङ्गेरिकाश्चङ्गाः, सरिदावर्त्तवर्त्तुलाः ॥ ६०९ ॥
लोमहस्तपटल्योऽथ, विभूषणकरण्डकाः । हैमानि धूपदहनकानि चाऽऽरात्रिकाणि च ॥ ६१० ॥
रत्नमङ्गलदीपाश्च, रत्नभृङ्गारका अपि । स्फाराणि रत्नस्थालानि, तापनीयाः पतद्ग्रहाः[10] ॥ ६११ ॥
रत्नचन्दनकलसा, रत्नसिंहासनानि च । रत्नमय्योऽष्टमङ्गल्यो, हैमास्तैलसमुद्गकाः ॥ ६१२ ॥
धूपभाण्डानि हैमानि, हैमाश्चोत्पलहस्तकाः । पुरो बभूवुश्च चतुर्विंशतेः श्रीमदर्हताम् ॥ ६१३ ॥
इति नानारत्नमयं, त्रैलोक्येऽप्यतिसुन्दरम् । मूर्त्तेन धर्मेणेवेन्दुकान्तवप्रेण शोभितम् ॥ ६१४ ॥
ईहामृगो[11]क्ष-मकर-तुरङ्ग-नर-किन्नरैः । विहङ्ग-वालक-रुरु[12]-शरभै[13]श्चमरैर्द्विपैः ॥ ६१५ ॥
वनलताऽब्जलताभिर्विचित्राद्भुतभङ्गिकम् । बहुद्रुममिवोद्यानं, रत्नस्तम्भसमाकुलम् ॥ ६१६ ॥
व्योमगङ्गोर्मिभिरिव, पताकाभिर्मनोरमम् । उन्नतैर्दन्तुरमिव, ध्वजदण्डैश्च काञ्चनैः ॥ ६१७ ॥
ध्वजस्थकिङ्किणीक्काणैः, प्रसरद्भिर्निरन्तरैः । खेचरस्त्रैणरसनादामध्वनिविडम्बकम् ॥ ६१८ ॥
उपरि भ्राजमानं च, विशालद्युतिशालिना । पद्मरागाश्मकुम्भेन, माणिक्येनाऽङ्गुलीयवत् ॥ ६१९ ॥
क्वचित् पल्लवितमिव, संवर्मितमिव क्वचित् । क्वचिद् रोमाञ्चितमिव, क्वचिल्लिप्तमिवाऽंशुभिः ॥ ६२० ॥
गोशीर्षचन्दनरसमयस्थासकलाञ्छितम् । अतिसुश्लिष्टसन्धित्वादेकग्राव्णेव निर्मितम् ॥ ६२१ ॥
माणिक्यशालभञ्जीभिश्चेष्टावैचित्र्यचारुभिः । अधिष्ठितनितम्बं चाऽप्सरोभिर्मेरुशैलवत् ॥ ६२२ ॥
द्वारदेशमुभयतो, लिप्ताभ्यां चन्दनद्रवैः । कुम्भाभ्यां पुण्डरीकाभ्यां, स्थलजाभ्यामिवाऽङ्कितम् ॥ ६२३ ॥
धूपितैर्दामभी रम्यं, तिर्यग्बद्धावलम्बितैः । कुसुमैः पञ्चवर्णैश्च, रचितप्रकरं तले ॥ ६२४ ॥
कर्पूरागरुकस्तूरीधूपधूमैश्च सन्ततैः । कालिन्द्येव[14] कलिन्दाद्रिं, प्लाव्यमानमहर्निशम् ॥ ६२५ ॥
अप्सरोगणसङ्कीर्णं, द्योः पालकमिवाऽऽगतम् । वैताढ्यमेखलाखण्डमिव विद्याधरीवृतम् ॥ ६२६ ॥
अग्रतः पार्श्वतः पश्चाच्चारुभिश्चैत्यपादपैः । माणिक्यपीठिकाभिश्च, भूषणैरिव भूषितम् ॥ ६२७ ॥

---

१ राजावर्त्ताख्यरत्नविशेषकृते । २ लोहिताक्षमणिरसच्छटा । ३ अङ्काख्यरत्नविशेषमया । ४ स्तनाग्रभाग । ५ सौवर्णानि । ६ रिष्टाख्यरत्नविशेषमयानि । ७ ओष्ठा । ८ द्वे नागप्रतिमे, द्वे यक्षप्रतिमे, द्वे भूतप्रतिमे, द्वे कुडधारप्रतिमे च । ९ चामरसमूहाः । १० पात्राणि । ११-वृकः । १२ मृगविशेष. । १३ अष्टापद. । १४ यमुनया ।

अष्टापदाद्रेर्मूर्धन्यमिव माणिक्यभूषणम् । नन्दीश्वरादिचैत्यानां, स्पर्द्धयेवाऽतिपावनम् ॥ ६२८ ॥
तच्चैत्यं भरतस्याऽऽज्ञा[1]तुल्यकालं कलाविदा । तेन वर्द्धकिरत्नेन, व्यधीयत यथाविधि ॥ ६२९ ॥
[ षोडशभिः कुलकम् ]

तत्रैव कारयामास, दिव्यरत्नशिलामयीः । भ्रातॄणां नवनवतेः, प्रतिमा भरतेश्वरः ॥ ६३० ॥
शुश्रूषमाणां प्रतिमामात्मनोऽपि महीपतिः । कारयामास तत्रैव, स हि भक्तेरतृप्तिकः ॥ ६३१ ॥
चैत्याद् बहिर्भगवतः, स्तूपमेकमकारयत् । भ्रातॄणां शतमेकोनं, स्तूपांश्च भरतेश्वरः ॥ ६३२ ॥
अत्र माऽऽशातनां कार्षुर्गमनागमनैर्नराः । इत्यकार्षीद् यन्त्रमयान्, लौहानारक्षकान् नृपः ॥ ६३३ ॥
आरक्षपुरुषैर्लौहैर्यन्त्रायुक्तैश्च तैरभूत् । नृणामगम्यं स्थानं तन्मर्त्याद् बहिरिव स्थितम् ॥ ६३४ ॥
दण्डरत्नेन रत्नेशो[2], दन्तांश्चिच्छेद तत्र च । ऋजूचस्तम्भवत् सोऽद्रिरनारोह्यस्ततोऽभवत् ॥ ६३५ ॥
नृपो नृभिरलङ्घ्यानि, योजनान्तरितानि च । पदानि मेखलारूपाण्यष्टौ तं परितो व्यधात् ॥ ६३६ ॥
ततः प्रभृति शैलोऽसौ, नाम्नाऽष्टापद इत्यभूत् । लोके हराद्रिः कैलासः, स्फटिकाद्रिश्च कीर्त्यते ॥६३७॥

इति चैत्यं विनिर्माप्य, प्रतिष्ठाप्य च चक्रभृत् । श्वेतांशुकधरस्तत्राऽविशन्मेघ इवोडुपः[3] ॥ ६३८ ॥
कृत्वा प्रदक्षिणां तत्र, प्रतिमास्ताः सुगन्धिभिः । उदकैः स्नपयामास, भूपतिः सपरिच्छदः ॥ ६३९ ॥
ममार्ज देवदूष्यैश्च, भरतः परितोऽपि ताः । रत्नादर्श इवाऽभूवंस्तास्ततश्चाऽधिकोज्ज्वलाः ॥ ६४० ॥
गोशीर्षचन्दनरसैर्विलिलेप नृपोऽथ ताः । सुगन्धिस्त्यानतां[4] प्राप्तैर्ज्योत्स्नापूरैरिवाऽमलैः ॥ ६४१ ॥
ताः क्षमापतिरानर्च, विचित्रै रत्नभूषणैः । दिव्यदामभिरुद्दामैर्देवदूष्यांशुकैरपि ॥ ६४२ ॥
ददाह वादयन् घण्टां, धूपं तद्धूमवर्त्तिभिः । कुर्वन् चैत्यान्तरं[5] नीलवल्लरीभिरिवाऽङ्कितम् ॥ ६४३ ॥
ततश्चोत्तारयामास, कर्पूरारात्रिकं नृपः । संसारशीतभीतानामग्निकुण्डमिव ज्वलत् ॥ ६४४ ॥
ऋषभस्वामिनो नत्वा, प्रतिमां भरतेश्वरः । आक्रान्तः शोकभक्तिभ्यां, स्तोतुं प्रस्तुतवानिति ॥६४५॥

कल्याणैः पञ्चभिर्दत्तसुखाय श्वभ्रिणामपि[6] । जगत्सुखाकर ! नमस्तुभ्यं त्रिजगदीश्वर ! ॥ ६४६ ॥
स्वामिन् ! विश्वजनीनेन[7], त्वया विहरताऽन्वहम् । रविणेवाऽनुगृहीतं, चराचरमिदं जगत् ॥ ६४७ ॥
अप्यार्याणामनार्याणां, प्रीतये व्यहरश्चिरम् । गतिः परोपकाराय, भवतः पवनस्य च ॥ ६४८ ॥
उपकर्त्तुमिहाऽन्येषां, व्यहार्षीर्भगवंश्चिरम् । मुक्तौ कस्योपकाराय, गतोऽसि परमेश्वर ! ? ॥ ६४९ ॥
लोकाग्रमद्य[8] लोकाग्रं[9], भवता यदधिष्ठितम् । मर्त्यलोको[10]ऽयमद्यैव, मर्त्यलोकस्त्वयोज्झितः[11] ॥ ६५० ॥
अद्याऽपि साक्षात् त्वमसि, तेषां भव्यशरीरिणाम् । विश्वानुग्रहकरिणीं, देशनां ये स्मरन्ति ते ॥ ६५१ ॥
रूपस्थमपि ये ध्यानं, त्वयि नाथ ! प्रयुञ्जते । प्रभो ! प्रत्यक्षमेवाऽसि, तेषामपि महात्मनाम् ॥ ६५२ ॥
यथा संसारमत्याक्षीरशेषं परमेश्वर ! । निर्ममोऽपि तथा जातु, मा त्याक्षीर्मानसं मम ॥ ६५३ ॥
आदिनाथमिति स्तुत्वा, जिनेन्द्रानपरानपि । नत्वा नत्वेति प्रत्येकमुपश्लोकयति स्म सः ॥ ६५४ ॥

जयाऽजित ! जगन्नाथ !, कषायविषयाजित ! । विजयाकुक्षिमाणिक्य !, जितशत्रुनृपात्मज ! ॥६५५॥
जितारिसूनो ! श्रीसेनाकुक्षिसम्भव ! सम्भव ! । भवव्योमातिक्रमणप्रभाकर ! नमोऽस्तु ते ॥ ६५६ ॥
सिद्धार्थापूर्वदिक्सूर्य !, संवरान्वयमण्डन ! । विश्वाभिनन्दन ! विभोऽभिनन्दन ! पुनीहि नः ॥६५७॥
भगवन् ! मङ्गलादेवीमेघमालैकमौक्तिक ! । मेघान्वयावनीमेघ !, सुमते ! भवते नमः ॥ ६५८ ॥
स्वामिन् ! धरधराधीशसरित्पतिनिशाकर ! । सुसीमाजाह्नवीपद्म !, पद्मप्रभ ! नमोऽस्तु ते ॥ ६५९ ॥
श्रीसुपार्श्वप्रभो ! पृथ्वीमलयावनिचन्दन ! । श्रीप्रतिष्ठकुलगृहप्रतिष्ठास्तम्भ ! पाहि माम् ॥ ६६० ॥

---

१ आज्ञासमनन्तरम् । २ चक्री । ३ शशी । ४ सुगन्धिघनताम् । ५ चैत्यमध्यम् । ६ नारकाणाम् । ७ विश्वहितकारकेण । ८ मोक्षम् । ९ सर्वलोकोत्तरम् । १० मनुष्यलोकः । ११ मरणोचितलोकः ।

महसेनान्वयनभश्चन्द्र! चन्द्रप्रभ! प्रभो! । भगवन्! लक्ष्मणाकुक्षिसरसीहंस! रक्ष नः ॥ ६६१ ॥
श्रीरामानन्दनारामहीकल्पमहीरुह! । सुग्रीवसूनो! सुविधे!, विधेहि शिवमाशु नः ॥ ६६२ ॥
नन्दादेवीहृदानन्द!, स्वामिन्! दृढरथात्मज! । जगदाह्लादशीतांशो!, श्रीशीतल! मुदे भव ॥६६३॥
श्रीविष्णुदेवीतनय!, विष्णुराड्वंशमौक्तिक! । निःश्रेयसश्रीरमण!, श्रेयांस! श्रेयसे भव ॥६६४॥
जयाविदूरभूरत्न!, वसुपूज्यनृपात्मज! । वासुपूज्य! जगत्पूज्य!, विश्राणय शिवश्रियम् ॥ ६६५ ॥
श्यामाशमीशमीगर्भ!, कृतवर्मनृपात्मज! । भगवन्! विमलस्वामिन्!, विमलीकुरु मे मनः ॥६६६॥
श्रीसिंहसेनभूपालकुलमङ्गलदीपक! । सुयशःस्वामिनीसूनोऽनन्ताऽनन्तं सुखं तनु ॥ ६६७ ॥
सुव्रताप्राग्गिरितटीभानो! भानुनृपात्मज! । श्रीधर्मनाथ! भगवन्!, धेहि धर्मे धियं मम ॥ ६६८॥
विश्वसेनकुलोत्तंसाऽचिरादेवीतनूद्भव! । श्रीशान्तिनाथ! भगवन्!, भव नः कर्मशान्तये ॥६६९॥
सूरान्वयवियत्सूर[1]!, श्रीराज्ञीकुक्षिसम्भव! । कुन्थुनाथ! जगन्नाथ!, जयोन्मथितमन्मथ! ॥ ६७० ॥
देवीशरच्छ्रीकुमुद[2]!, सुदर्शननृपात्मज! । अरनाथ! वितर मे, भवोत्तरणवैभवम् ॥ ६७१ ॥
कुम्भाम्भोधिसुधाकुम्भ!, प्रभावत्यङ्गसम्भव! । कर्मक्षयमहामल्ल!, मल्लिनाथ! शिवं दिश ॥६७२॥
सुमित्र[3]हिमवत्पद्मह्रद! पद्मावतीसुत! । मुनिसुव्रततीर्थेश!, नमस्ते परमेश्वर! ॥ ६७३ ॥
वप्रावज्राकरमहीवज्र! श्रीविजयात्मज! । जगन्नमस्यपादाब्ज!, नमस्तुभ्यं नमिप्रभो! ॥ ६७४ ॥
शिवगामिन्! शिवासूनो!, समुद्रानन्दचन्द्रमः! । अरिष्टनेमे! भगवन्!, नमः कारुणिकाय ते ॥६७५॥
अश्वसेनावनीपालकुलचूलामणे! प्रभो! । वामासूनो! नमस्तुभ्यं, श्रीमत्पार्श्वजिनेश्वर! ॥ ६७६ ॥
सिद्धिसम्प्राप्तिसिद्धार्थ!, सिद्धार्थनृपनन्दन! । त्रिशलाहृदयाश्वास!, श्रीवीर! भवते नमः ॥ ६७७ ॥
इति स्तुत्वा नमस्कृत्य, सर्वान् प्रत्येकमर्हतः । चैत्यात् सिंहनिषद्याया, निर्ययौ भरतेश्वरः ॥६७८॥
विलोकयन् वलद्ग्रीवं, तच्चैत्यं प्रियमित्रवत् । उत्ततारा ऽष्टापदाद्रेर्भरतः सपरिच्छदः ॥ ६७९ ॥
प्राग्विलग्नमना लग्नवस्त्राञ्चल इवाऽचलत् । मन्दं मन्दं प्रत्ययोध्यमयोध्याधिपतिस्ततः ॥ ६८० ॥
सैन्योद्भूतै रजःपूरैः, शोकपूरैरिवाऽऽकुलाः । दिशोऽपि कुर्वन् शोकार्त्तस्तां पुरीं प्राप भूपतिः ॥ ६८१ ॥
तद्दुःखदुःखितैर्बाढं, सोदरैरिव नागरैः । सास्रदृग्भिर्दृश्यमानो, विनीतां प्राविशन्नृपः ॥ ६८२ ॥
सारं सारं स्वामिपादान्, वृष्टशेष इवाऽम्बुदः । सोऽस्राम्बुविप्रुषो[4] वर्षन्, स्वं विवेश निवेशनम् ॥ ६८३ ॥
तिष्ठन् गच्छन् स्वपन् जाग्रद्, बहिर्मध्ये दिवा निशि । दध्यौ स प्रभुमेवार्थं, हृतार्थ इव तद्धनः[5] ॥६८४॥
अप्यन्यहेतुनाऽऽयातानष्टापदतलान्नरान् । प्रभुं प्रथयतः पूर्वं, स पूर्ववदमन्यत ॥ ६८५ ॥
आदौ पशुवदज्ञानं, व्यवहारनये जनम् । इमं प्रवर्त्तयामास, गृहवासस्थितोऽपि यः ॥ ६८६ ॥
आत्तदीक्षश्च भगवानचिरोत्पन्नकेवलः । उद्दिधीर्षु[6]र्भवाम्भोधेर्धर्मे प्रावर्त्तयज्जगत् ॥ ६८७ ॥
कृतकृत्यः स्वयं कृत्वा, कृतकृत्यान् जनानपि । यः पदं परमं प्राप, तं कथं नाम शोचसि? ॥ ६८८ ॥
शोकाकुलः कुलामात्यैः, कथञ्चिदपि बोधितः । शनकै राजकार्येषु, प्रावर्त्तत महीपतिः ॥ ६८९ ॥
[ चतुर्भिः कलापकम् ]

शनैः शनैः शोकमुक्तो, राहुमुक्त इवोडुपः । बहिर्विहारभूमिषु, विचचार नरेश्वरः ॥ ६९० ॥
स्वामिपादानसौ स्मृत्वा, गजो विन्ध्यस्थलीमिव । विषदन्नेत्य[7]ाऽऽप्तजनैः, सदाऽऽसन्नैर्व्यनोद्यत ॥ ६९१ ॥
परिवारानुरोधेन, कदाऽप्यारामवीथिषु । विनोदोत्पत्तिभूमिषु, जगाम जगतीपतिः ॥ ६९२ ॥
स्त्रीराज्येनेवाऽऽगतेन, समं स्त्रैणेन[8] तत्र च । लतामण्डपशय्यासु, रेमे रम्यासु भूपतिः ॥ ६९३ ॥

१ सूरवंशगगनसूर्य'। २ देवीशरल्लक्ष्मीकुमुद'। ३ सुमित्रहिमाचलपद्मनद'। ४ अश्रुजलबिन्दून्। ५ कृपण। ६ उद्धर्तुमिच्छुः। ७ आगत्य। ८ स्त्रीसमूहेन।

कुसुमाहरणां विद्याधराणामिव तत्र सः । कुसुमावचयक्रीडां, यूनामैक्षिष्ट कौतुकात् ॥ ६९४ ॥
ग्रथित्वा पुष्पनेपथ्यं, वरवामभ्रुवः स्वयम् । प्रसून[1]धन्वनः पूजामिव तस्योपनिन्यिरे ॥ ६९५ ॥
सर्वाङ्गपुष्पाभरणाश्चिक्रीडुस्तत्पुरोऽङ्गनाः । ऋतुश्रिय इवाऽसङ्ख्यीभूतास्तं समुपासितुम् ॥ ६९६ ॥
रराज राजराजोऽपि, सर्वतः पुष्पभूषणः । तासामृतुदेवतानामिवैकमधिदैवतम् ॥ ६९७ ॥
कदाचित् क्रीडितुं क्रीडादीर्घिकां सवधूजनः । राजहंस इव स्वैरं, प्रययौ भरतेश्वरः ॥ ६९८ ॥
तत्र चक्रे जलक्रीडां, वामनेत्राभिरार्षभिः । करेणुकाभिः सहितो, रे[2]वायामिव कुञ्जरः ॥ ६९९ ॥
आलिङ्गन्त्यः क्षणं कण्ठे, क्षणं दोष्णोः[3] क्षणं हृदि । तमापेतुः पयोवीच्यो, वामाक्षीशिक्षिता इव ॥ ७०० ॥
अवतंसीकृताम्भोजश्चलन्मौक्तिककुण्डलः । भरतो वरु[4]णः साक्षादिवाऽलक्ष्यत वारिणि ॥ ७०१ ॥
लीलाविलाससाम्राज्यनिवेशायेव भूपतिः । अहंपूर्विकया स्त्रीभिर[*]भ्यषिच्यत वारिभिः ॥ ७०२ ॥
अप्सरोभिरिव जलदेवताभिरिवाऽभितः । जलकेलिप्रसक्ताभी, रेमे ताभिर्महीपतिः ॥ ७०३ ॥
स्वप्रतिस्पर्द्धिनां वा[5]रिजन्मनामिव दर्शनात् । वारिभिस्ताम्रतामापुः[†] कुरङ्गकदृशां दृशः ॥ ७०४ ॥
अङ्गनानामङ्गरागैरङ्गाद् विगलितैर्घनैः । आपः सकर्दमा यक्षकर्दमत्वं प्रपेदिरे ॥ ७०५ ॥
सङ्गीतकं कारयितुं, कदाचिदपि शक्रवत् । विलासमण्डपास्थानीमातस्थौ पृथिवीपतिः ॥ ७०६ ॥
ॐकारमिव मन्त्राणामाद्यं सङ्गीतकर्मणाम् । सुस्वरं पूरयामासुर्वेणुं वैणविकोत्तमाः ॥ ७०७ ॥
पुष्पादिभिः श्रुतिसुखैर्व्यक्तैर्व्यञ्जनधातुभिः । वैणिका वादयामासुर्वीणा एकादशाऽपि ताः ॥ ७०८ ॥
तत्तत्कविल्वानुगतं, [‡]नाम्ना प्रस्तारसुन्दरम् । रङ्गा[6]चार्या दधुस्तालं, नृत्ताभिनयमातरम् ॥ ७०९ ॥
प्रियमित्रवदन्योऽन्यमनुज्झन्तो मनागपि । [7]मार्दङ्गिकाः पा[8]णविकाः, स्वं स्वं वाद्यमवादयन् ॥ ७१० ॥
जातिरागान् नवनवान्, स्वरगीतिमनोरमान् । गायनाश्च जगुर्हाहाहूहूहङ्कारहारिणः ॥ ७११ ॥
चित्रीयमाणाश्चित्रैश्चाऽङ्गहारैः करणैरपि । नर्तक्यो ननृतुस्तारं, लास्यताण्डवपण्डिताः ॥ ७१२ ॥
प्रेक्षाञ्चक्रे प्रेक्षणीयानीत्यभिन्नं महीपतिः । यत्र तत्र प्रसक्तानां, प्रभूणां को हि बाधकः ? ॥ ७१३ ॥
सांसारिकसुखान्येवं, भुञ्जानो भरतेश्वरः । स्वामिमोक्षदिनात् पूर्वलक्षाः पञ्चात्यवाहयत् ॥ ७१४ ॥
अपरेद्युः कृतस्नानः, प्रकृतबलिकर्मकः । देवदूष्यांशुकोन्मृष्टशरीरः [$]स्निग्धकुन्तलः ॥ ७१५ ॥
गोशीर्षचन्दनकृतसर्वाङ्गीणविलेपनः । सर्वाङ्गनिहितानर्घ्यदिव्यरत्नविभूषणः ॥ ७१६ ॥
सोऽन्तःपुरनिकेतान्तर्वरस्त्रीपरिवारितः । वेत्रिण्या दर्श्यमानाध्वा, रत्नादर्शगृहं ययौ ॥ ७१७ ॥

[ त्रिभिर्विशेषकम् ]

प्रतिबिम्बितमत्यच्छे, गगनस्फटिकोपमे । यथाप्रमाणं सर्वाङ्गं, रूपं तत्र हि[¶] दृश्यते ॥ ७१८ ॥
तत्र च प्रेक्षमाणस्य, स्वं वपुर्भ[§]रतेक्षितुः । अङ्गुल्या एकतमस्या, निपपाताऽङ्गुलीयकम् ॥ ७१९ ॥
तदङ्गुल्या गलितमप्यङ्गुलीयं महीपतिः । नाऽज्ञासीद् बर्हिणो[9] बर्हभाराद् बर्ह[10]मिवैककम् ॥ ७२० ॥
वपुः पश्यन् क्रमेणेक्षाञ्चक्रे तां चत्रयनूर्मिकाम् । अङ्गुलीं गलितज्योत्स्नां, दिवा शशिकलामिव ॥ ७२१ ॥
अहो ! विशोभा किमसावङ्गुलीति विचिन्तयन् । ददर्श पतितं भूमावङ्गुलीयं नरेश्वरः ॥ ७२२ ॥
किमन्यान्यपि विशोभान्यङ्गान्याभरणैर्विना ? । इति मोक्तुं स आरेभे, भूषणान्यपराण्यपि ॥ ७२३ ॥
आदावुत्तारयामास, माणिक्यमुकुटं नृपः । तद्धीनं च शिरोऽपश्यच्च्युतरत्नामिवोर्मिकाम् ॥ ७२४ ॥
माणिक्यकुण्डले प्रोज्झ्य, तद्धीनौ च ददर्श सः । कर्णपाशावन[11]र्केन्दू, पूर्वापरदिशाविव ॥ ७२५ ॥

---

१ कामदेवस्य । २ नर्मदायाम् । ३ भुजयोः । ४ जलदेव । * इत आरभ्य † एतच्चिह्नपर्यन्तं पाठो नास्ति खपुस्तके ॥ ५ कमलानाम् । ‡ नामाग्र° सं १, खं ॥ ६ सूत्रधाराः । ७ मृदङ्गवादकाः । ८ पणववादका । $ स्निग्धकुन्तलः आ ॥ ¶ ह्यदृश्यत खता ॥ § भरतेश्वरः सं २, आ ॥ ९ मयूरस्य । १० पिच्छम् । ११ सूर्यचन्द्ररहिते ।

ग्रैवेयकमहासीच्च, ग्रीवां तद्रहितामथ । नृपो ददर्श निःश्रीकां, निम्नगामिव निर्जलाम् ॥ ७२६ ॥
हारमुत्तारयामासाऽऽलोकयामास च क्षणात् । वक्षःस्थलं तद्विहीनं, व्योमेव गततारकम् ॥ ७२७ ॥
केयूरे चाऽमुचद् बाहू, तन्मुक्तौ च ददर्श सः । उद्वेष्टितार्द्धलतिकापाशौ सालद्रुमाविव ॥ ७२८ ॥
कङ्कणौ चाऽत्यजत् पाणिमूले ताभ्यां च वर्जिते । निरामलसारकाग्रप्रासादवदुदैक्षत ॥ ७२९ ॥
अन्यान्यप्यङ्गुलीयानि, तत्याजाऽऽलोकयच्च सः । तद्धीना अङ्गुलीर्भ्रष्टमणीः फणिफणा इव ॥ ७३० ॥
तत्याज पादकटकौ, ददर्शाऽङ्घ्री तदुज्झितौ । गलितस्वर्णवलयौ, राजेभदशनाविव ॥ ७३१ ॥
इति क्रमेण भरतस्त्यक्तसर्वाङ्गभूषणम् । स्वमपश्यत् गतश्रीकं, शीर्णपर्णमिव द्रुमम् ॥ ७३२ ॥
अचिन्तयच्च धिगहो !, वपुषो भूषणादिभिः । श्रीराहार्यैव कुड्यस्य, पुस्ताद्यैरिव कर्मभिः ॥ ७३३ ॥
अन्तःक्लिन्नस्य विष्ठाद्यैर्मलैः स्रोतोभवैर्बहिः । चिन्त्यमानं शरीरस्य, किमप्यस्य न शोभनम् ? ॥ ७३४ ॥
इदं शरीरं कर्पूरकस्तूरीप्रभृतीन्यपि । दूषयत्येव पाथोदपाथांस्यूषरभूरिव ॥ ७३५ ॥
विरज्य विषयेभ्यो यैस्तेपे मोक्षफलं तपः । तैरेव फलमेतस्य, जगृहे तत्त्ववेदिभिः ॥ ७३६ ॥
इति चिन्तयतः सम्यगपूर्वकरणक्रमात् । क्षपकश्रेण्यारूढस्य, शुक्लध्यानमुपेयुषः ॥ ७३७ ॥
घातिकर्मक्षयादाविरासीत् तस्याऽथ केवलम् । सूर्यप्रकाशो जीमूतपटलापगमादिव ॥ ७३८ ॥
सहसाऽऽसनकम्पोऽभूत्, तदानीं च दिवस्पतेः । महान्तो महतामृद्धिमपि शंसन्त्यचेतनाः ॥ ७३९ ॥
भक्त्या तमभ्यगाच्चेन्द्रो, भक्ता हि प्रतिपत्तिदाः । स्वामिवत् स्वामिपुत्रेऽपि, किं पुनः प्राप्तकेवले ? ॥ ७४० ॥
शक्रोऽभ्यधाद् द्रव्यलिङ्गं, प्रतिपद्यस्व केवलिन् ! । यथा वन्दे विदधे च, तव निष्क्रमणोत्सवम् ॥ ७४१ ॥
ततश्च बाहुबलिवद्, विदधे भरतेश्वरः । प्रव्रज्यालक्षणं केशोत्पाटनं पञ्चमुष्टिकम् ॥ ७४२ ॥
उपनीतं यथा सन्निहितदेवतया ततः । रजोहरणमुख्योपकरणं भरतोऽग्रहीत् ॥ ७४३ ॥
ववन्दे देवराजेन, ततश्च भरतेश्वरः । न जातु वन्द्यते प्राप्तकेवलोऽपि ह्यदीक्षितः ॥ ७४४ ॥
राज्ञां दशसहस्राश्च, प्राव्रजन्नार्षभिं श्रिताः । तादृशस्वामिसेवा हि, परत्राऽपि सुखाकरी ॥ ७४५ ॥
अथ विश्वम्भराभारं, सोढुं भरतजन्मनः । राज्याभिषेकमकरोदादित्ययशसो हरिः ॥ ७४६ ॥
आरभ्य केवलोत्पत्तेर्ऋषभस्वामिवत् ततः । ग्रामाकरपुरारण्यगिरिद्रोणमुखादिषु ॥ ७४७ ॥
धर्मदेशनया भव्यान्, देहभाजः प्रबोधयन् । पूर्वलक्षं विजहार, भरतः सपरिच्छदः ॥ ७४८ ॥
अष्टापदगिरौ गत्वा, ततश्च भरतेश्वरः । चक्रे चतुर्विधाहारप्रत्याख्यानं यथाविधि ॥ ७४९ ॥
अथैकमासपर्यन्ते, चन्द्रे श्रवणऋक्षगे । सिद्धानन्तचतुष्कोऽसौ, सिद्धिक्षेत्रमुपाययौ ॥ ७५० ॥
एवं च भरतः पूर्वलक्षाणां सप्तसप्ततिम् । कुमारभावेऽगमयत्, प्रभौ शासति मेदिनीम् ॥ ७५१ ॥
एकं माण्डलिकत्वे च, सहस्रं शरदामसौ । अतिवाहितवांश्छद्मस्थतया भगवानिव ॥ ७५२ ॥
एकवर्षसहस्रोनपूर्वलक्षाणि षट् तथा । आर्षभिर्व्यतिचक्राम, चक्रवर्त्तित्वमुद्वहन् ॥ ७५३ ॥
उत्पन्नकेवलज्ञानो, विश्वानुग्रहकाम्यया । विजह्रे पूर्वलक्षं च, दिवसं भानुमानिव ॥ ७५४ ॥

इत्यायुषा चतुरशीतिमतीत्य पूर्वलक्षाणि मोक्षमगमद् भरतो महात्मा ।
शक्रेण मोक्षमहिमा विदधे च तस्य, देवैः समं सपदि कन्दलितप्रमोदैः ॥ ७५५ ॥

---

१ ग्रीवाभूषणम् । २ नदीम् । * चाऽमुचत् खं ॥ ३ भित्ते । ४ लेप्यकर्माद्यै । ५ क्षारभूमि । † तमन्वगा° स २ ॥ ‡ नृपा दशसहस्राणि प्रा° आ, सं २ ॥ ६ परलोकेऽपि । ७ श्रवणनक्षत्रगे । ८ वर्षाणाम् ।

स्वामिप्राग्भववर्णनं कुलकरोत्पत्तिः प्रभोर्जन्म चो-
द्वाहादिव्यवहारदर्शनमथो राज्यं व्रतं केवलम्
चक्रित्वं भरतस्य मोक्षगमनं भर्त्तुः क्रमाच्चक्रिणो-
ऽप्यस्मिन् पर्वणि वर्णितं वितनुतात् पर्वाणि सर्वाणि वः ॥७५६॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये प्रथमे पर्वणि मरीचिभव-भाविशलाकापुरुष-भगवन्निर्वाण-भरतनिर्वाणवर्णनो नाम षष्ठः सर्गः ॥ ६ ॥

समाप्तं च श्रीऋषभस्वामि-भरतचक्रवर्त्तिप्रतिबद्धं प्रथमं पर्व ॥ १ ॥

